भावाभावविकल्पे तु कोट्यन्तरमसंभवि । [1]व्यक्त्यध्यासविसृष्ट्यादि विकारेषु विवक्षताम् ॥
जन्मव्याहरणात् बाधः कृतः श्रुत्यादिदर्शितात् । अभिव्यक्तेरनादित्वे कारकाणामनर्थता ॥८९
तदागन्तुकतामिच्छन् किं नान्यत्रैवमिच्छति । [अध्यासपक्षो नैव स्यादबाधस्थितिदर्शनात् ?]
विसृष्टिः क्वचिदिष्टैव विकासोऽपि दशान्तरम् ॥९० विकासतद्वतोरैक्ये व्याघातः सांख्यपक्षवत् ।
एक एव निमित्तं चोपादानं चेति सूचनात् ॥ योगवैशेषिकाद्युक्तं युक्त्याभासमभाष(बाध?)त ।
कर्ता स्वपरसंयोगे [2]समवायी च विश्वकृत् ॥९२॥ [3] न च कम्प्रेषु संयोगं नित्यं भौतेषु भावयेत् ।
जनयन् स्वसुखादीनि दृष्टो जीवोऽपि; तत्र च ९३॥ कर्तृत्वसमवायित्वे काणादैरपि दुस्त्यजे ।
बहु स्यामिति मन्तुश्च विकारः परिकल्पितः । शरीरद्वारतः सृष्टेः सूचनात् प्रत्यरुध्यत ॥९४॥
क्रमाज्जन्मादि सर्वेषाम् एकतस्तदितीरणात् । क्षणभङ्गः प्रवाहेशपक्षश्चात्र पराकृतः ॥९५॥
स्थिरापेक्षा ह्यनुमितिः स्थिराभावं न साधयेत् । न च [4]प्रत्यक्षमक्षोभ्यप्रत्यक्षान्तरबाधतः ॥९६
सर्गप्रलयवादानामान्यपर्यान्मृषार्थता । [5]अर्धलोकायतारूढैरुक्ताऽप्यत्र बहिष्कृता ॥ ९७ ॥
अनुप्रवेशादि वदन्निराचक्रे यथाश्रुति । सामानाधिकरण्यस्य बाधैक्यादिप्रयुक्तताम् ॥९८॥
विशिष्टविषयानेकसामानाधिकरण्यतः । निर्भेदैकार्थतां तस्य वदन्त इह वारिताः ॥ ९९ ॥
चार्वाकादिमतं चात्र हेत्वाद्युक्त्या निवर्तितम् । निरानन्दोक्तिपक्षश्च सलीलत्वेन खण्डितः ॥
निरीश्वरजगत्सर्गः शब्दादेश्च तदुद्भवः । निर्व्यापारेशपक्षश्च तत एव न्यषिध्यत ॥ १०१ ॥
बहुश्रुत्यादिसिद्धत्वात् बाधलेशविमुक्तया । लीलोक्त्यैवैक्यपक्षेषु स्रष्टृत्वायोग उच्यते ॥१०२
सङ्कल्पाध्यसनं तावन्न विकल्पं सहेदिह । अचेतनतया नित्यमविद्यावृत्तिमात्रयोः ॥ १०३ ॥
[6]त्र्यंशसद्ब्रह्मवादे च सुषुप्तस्येशितुस्तदा । अचिज्जीवसमानस्य न लीलोद्यमसंभ्रमः(भवः?) ॥
नित्यसर्वज्ञताश्रुत्या सुषुप्तिश्चास्य बाधिता । कालाधीनप्रबोधादेरनैश्वर्यं च दुस्त्यजम् ॥ १०५
सुषुप्तिश्च प्रबोधश्च [7]प्राक्सङ्कल्पादिति त्वसत् । अनन्तानुभवानन्दजिहासानुपपत्तितः ॥ १०६
नाचित् सङ्कल्पयेत् नापि जीवोऽसिद्धेन्द्रियादिकः । ईश्वरः शान्तनिद्रोऽपि कुर्यान्नानर्थमात्मनः ॥
नित्यप्रबुद्ध ईशांशोऽप्यतो नेदृग्विहारवान् । भोक्तृणां स्वात्मतादात्म्यं न वेत्ति न हि सर्ववित् ॥

---

1. व्यक्तीति । विकारेषु=कार्येषु जन्मव्याहरणात् व्यक्त्यादिकं विवक्षतां बाधः कृतः । व्यक्तिः=अभिव्यक्तिः तिलात् तैलस्येव । अध्यासः शुक्तिरजतस्येव । अध्यासपक्षादूषणं भ्रष्टं स्यादिति पूरितम् । अग्नेः स्फुलिङ्गवत् पृथग्भावो विसृष्टिः । इत्याद्युक्त्वा जन्म कार्यगतमपलपन्तो बाधिता इत्यर्थः । 2. समवायी च=उपादानञ्च । 3. ईश्वरस्य व्यापितया तत्संयोगः सर्वस्य नित्य इति वादं क्षिपति न च कम्प्रेष्विति । 4. प्रत्यक्षं क्षणिकत्वं न साधयेदित्यर्थः ।

5. अर्धलोकायतारूढैः='न कदाचिदनीदृशं जगत्' इति पृथिव्यादिनित्यत्ववादिभिर्मीमांसकैः नास्तिकवादमारूढैः । 6. त्र्यंशसद्ब्रह्मवादे=चिदचिदीश्वररूपेण विभक्तं सत् समुद्र इव फेनतरङ्ग-बुद्बुदरूपेणेति यादवप्रकाशवादे । 7. प्राक्संकल्पात्=पूर्वकृतसंकल्पानुसारात् ।

[1]विनतादिपदैरत्र जीवानामितरेतरम् । ईशिता च स्वरूपैक्यं तत्तन्मानैः परास्यते ॥१०९॥
असर्वज्ञोऽहमित्यात्मा येनाध्यक्षेण गृह्यते । सर्वज्ञैक्यमतिस्तस्य न तच्छक्त्यापि सम्भवेत् ॥
[2]नानाऽऽत्मानो व्यवस्थात इत्यन्यैरपि सूत्रितम् । विरुद्धधर्मसंसर्गं व्यनक्ति विविधोक्तितः ॥
वर्णाद्यैर्नन्तृवैविध्यादलेपकमतं हतम् । यावज्जीवं मुमुक्षोश्च तद्धर्मो निश्चलीकृतः ॥ ११२ ॥
[3]अत्याश्रमिभ्य इत्येतत् प्रशस्ताश्रमयोगतः। अलेपश्च श्रुतः पापैः प्रमादात्तैरिति स्थितिः ॥११३
तदुपर्यादिसूत्रोक्ता सर्वदेवैकसेव्यता । व्यञ्जिता विविधोक्त्यैव तत्तत्पारम्यनुत्तये ॥ ११४ ॥
व्रातशब्देन जीवानामानन्त्यमपि सूचयन् । इतः प्राक् सर्वमुक्तिः स्यादिति चोद्यमवारयत् ॥
आत्मानन्त्यादमुक्तानां मुक्तानामप्यनन्तता । आनन्त्यतारतम्येन [4]सद्द्रव्यादिनयात् भवेत् ॥
एको जीवः, इतः पूर्वममुक्तो हेत्वनागमात् । इति पश्यन्ननेकेषु तथात्वं किं न पश्यति ॥११७
मुक्तेर्नतिभवत्वोक्त्या नित्यमुक्तिर्निराकृता । स्वरूपस्य न मुक्तित्वं सिद्धसाध्यविरोधतः ॥
क्रियातच्छक्त्यपूर्वाद्यैः स्वर्गादीति परोदितम् । नन्तृरक्षणदीक्षोक्त्या निरस्तं निगमाप्तया ॥
विध्यपेक्षे(क्ष्ये?) तु वैधार्थद्वारे[5] श्रुत्यैव दर्शिते । श्रुतहानादिरन्याय्यो रात्रिसत्रादिनीतितः ॥
नति-रक्षादिजीवेशव्यापारप्रतिपादनात् । साक्षिमात्रत्वमनयोस्तत्तदुक्तमपास्यत ॥ १२१ ॥
वेदानित्यत्ववादश्च वेदोज्झितपथस्तथा । अनुमेयेशपक्षश्च श्रुत्याद्युक्त्या निवारितः ॥ १२२ ॥
ईशितुः सगुणत्वेन भङ्गुरत्वादि साधयन् । धर्मिग्राहकवेदान्तविदां मुध्वस्तदृष्टिकः ॥ १२३
अवेद्यत्वमवाच्यत्वमपि प्रोक्तं कुदृष्टिभिः । निगमान्तविदीप्सत्वनिर्देशेन निवर्तितम् ॥१२४॥
उपासनाद्यनर्हं यत्तद्ब्रह्म श्रुतमित्युशन् । परस्य [6]विद्युपास्यादिविषयत्वोक्तितो हतः ॥ १२५ ॥
न विम्वस्तीति वदतां तत्तन्मानैः प्रणुत्तये । बृहत्त्वमपरिच्छेद्य ब्रह्मशब्देन दर्शितम् ॥१२६॥
भाग-भेदाद्ययोगेन विभुतत्त्वस्य निह्नवे । अणुष्वपि सु(स?)दुर्वारः सर्वासत्त्वे स्ववाग्घतिः ॥
[7]व्यतिरेकग्रहायोगाद्विभुकारणमुज्झतः । अबाध्यश्रुतिसिद्ध्यैव तत्सिद्धिं समदर्शयत् ॥१२८॥
कारणत्वादिधर्माणां[8] प्रतियोगिमतामपि। अकाल्पनिकतां प्राह तथा तन्मानबोधनात् ॥१२९

1. अथ द्वितीयपादसूचितांशकथनं विनतेत्यादिना। 2. 'नानाऽऽत्मानो व्यवस्थातः' इति कणादसूत्रम्। 3. अत्याश्रमिभ्य इति श्वेताश्वतरोपनिषदन्ते। अतिशयिताश्रमवद्भ्य इत्यर्थः। प्रमादात्तैः = प्रामादिकैः; अनवधानगृहीतैः। 4. सद्द्रव्यादिनयादिति। द्रव्यगुणकर्माणि त्रीण्यपि सत्पदवाच्यानि। अतो द्रव्यानन्त्यापेक्षया सदानन्त्यमतिशयितम्। 5. वैधार्थद्वारे-देवताप्रीत्यप्रीतिरूपे। श्रुत्यैव रात्रिसत्रनीत्या दर्शिते सतीत्यन्वयः। 6. विद्युपास्यादीति। विदिः उपासिः इत्यादिधातूक्तार्थेत्यर्थः। 7. व्यतिरेकेति। नित्यविभुनो वस्तुनः कालव्यतिरेकदेशव्यतिरेकौ दुर्वचौ। अतः कारणाभावे कार्याभाव इति व्यतिरेकांशाग्रहे कथं तस्य कारणत्वग्रह इति शंका। श्रुत्या ज्ञातेऽर्थे अन्वयव्यतिरेकापेक्षा नास्तीति समाधिः। अत एव धर्मिग्राहकमानविरोधात् इदं दूषणमयुक्तमिति उदयनाचार्यो न्यायकुसुमाञ्जलौ प्रथमस्तवकान्ते, 'पूर्वभावो हि हेतुत्वं मीयते येन केनचित्। व्यापकस्यापि नित्यस्य धर्मिधीरन्यथा न हि।' इत्याह॥ 8. कारणत्वादेः प्रतियोगि कार्यत्वादि। तद्वतामपीत्यर्थः।

स्वेष्टस्वपरनिर्वाहन्यायात्[1] सम्बन्ध आश्रितः । नानवस्थितये नातिप्रसक्त्यै चेति भाव्यताम् ॥

श्रीनिवासपदेनात्र निर्विशङ्कार्थवाचिना । त्रिमूर्तिसाम्यतादात्म्यव्यक्त्यन्तरजुषः क्षताः ॥

अन्योक्तिः परविद्यासु निरुक्त्यादेः पराश्रया । तल्लिङ्गानन्यथासिद्धौ तद्विशिष्टावलम्बिनी ॥

बाह्यैः कुदृष्टिभिश्चोक्ता त्रिमूर्त्युत्तीर्णकल्पनाः । ब्रह्मणः श्रीनिवासस्य परत्वोक्त्या पराहताः ॥

आप्नोति परमित्येतत् सूचयन् परशब्दतः । स्वात्मप्राप्त्यादिमात्रस्य निराचक्रेऽपवर्गताम् ॥

परानुभूतेर्नाभावो न च ह्रासो निरंहसः । अनिश्शेषितकर्मा तु मुक्त इत्युपचर्यताम् ॥ १३५

परत्वमनवच्छिन्नं मुक्तादिभ्योऽपि हि श्रुतम् । ततः सर्वगुणात्यन्तसाम्यवादोऽप्यपोदितः ॥

एकीभावश्रुतिश्चात्र प्रकारैक्यविवक्षया । शुद्धाशुद्धाम्बुयोगे हि तादृक्त्वं श्रुतिदर्शितम् ॥१३७

त्वय्यन्तदीप्ततामुक्त्वा भक्तेराशासनात्पुनः । शब्दतोऽध्यक्षसंवित्तेरसम्भव उदाहृतः॥१३८

आत्मनोऽनहमर्थत्वं वदतामपनुत्तये । ममेतीरितमात्मानमहमर्थं न्यदर्शयत् ॥ १३९ ॥

शेमुष्यादिपदाभ्यां तु कर्मधीतद्विकल्पयोः(?) । वाक्यार्थैक्यमतेश्चात्रानुपायत्वं प्रदर्शितम् ॥

बोद्धृबुद्धिभिदामत्र ममकारेण दर्शयन् । विषयाग्राहिणी बुद्धिरात्मेति मतमच्छिनत् ॥ १४१

मम स्वरूपमितिवत् मेदोक्तिरुपचारतः । इत्यसत् बाधविरहात्; न चेत् देहेऽपि का गतिः ॥

बाधः स्वारसिको नास्ति संविदा बोद्धृबोध्ययोः । कुतर्कैर्यदि, शेमुष्या[2] प्रतिबन्दीमसूचयत् ॥

विषयेणाश्रयेणापि स्वधर्मेणापि शेमुषीम् । विशिषन्तन्निराकर्तॄन्निरास्थदिति मन्महे ॥ १४४ ॥

(परेषां शास्त्रारम्भनिवारणम् ९)

एवं तु जीवपरयोः स्वरूपैक्याभिमानिनाम् । अत्र शारीरकारम्भस्त्रयाणामुपरुध्यते ॥ १४५

मिथ्याभूतस्य बन्धस्य तत्त्वबुद्ध्यैव बाधनात् । तत्प्रधानमिदं शास्त्रमारभ्यमिति दुर्भणम् ॥

प्रमितस्यास्य सत्यस्य परभक्त्या विनाशनम् । प्रतिपादयताऽनेन परारम्भो निवारितः ॥१४७

न जिज्ञासेत धीरत्र ज्ञातृत्वादिप्रहाणतः ज्ञातृभूतोऽहमर्थश्चेत्, नारभेत स्वनाशनम् ॥१४८

---

1. स्वपरनिर्वाहाश्रयणात् समवायकल्पन इव नानवस्था । अयं हि न काल्पनिकः; किंतु मानसिद्ध इति । जुषः = कामिनः । अन्योक्तिः = जीवाचेतनयोरुक्तिः । यथा प्रतर्दनविद्यायामिन्द्रप्राणयोः । निरुक्तिः योगव्युत्पत्तिः । आदिना शास्त्रदृष्टापर्यवसानवृत्तिग्रहणम् । यद्वा आदिपदं गौणीवृत्तिग्राहकम् । 'गायत्री वा इदं सर्वम्' इत्यत्र गायत्रीसदृशेत्यर्थकथनात् । अपर्यवसानवृत्तिरेवेति नियमो यत्र, तत्स्थलमाह तल्लिंगेति । पराश्रया = परमात्मपरा । अयं पाठोऽधिकरणचिन्तामणावप्युपात्तः । ग्रन्थान्तरे, 'परविद्यासु जीवोक्तिः' इति पाठः। शुद्धेति । 'यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति' इति कठश्रुतिः । शब्दतोऽध्यक्षसंवित्तेः = शब्दजन्यवस्तुप्रत्यक्षस्य । कर्मधीतद्विकल्पयोरित्यत्र पाठो निरीक्ष्यः । कर्मणा सहिता धीः कर्मधीः = कर्मसमुच्चितं ज्ञानम्; तद्विकल्पः = धीभेदः श्रवणमननादिः; तयोरित्यर्थो वा । 2. शेमुष्या = शेमुषीपदप्रयोगेण । यद्वा शेमुष्यपि बोद्धृबोध्यवत् माऽस्तु इति शेमुषीमादाय प्रतिबन्दीमित्यर्थः । विशिषन्–विषयादिवैशिष्ट्यास्थितिं वदन् भाष्यकारः निरास्थत् = निराकरोत् । त्रयाणां = शङ्करभास्करयादवप्रकाशानाम् ।

स्वदुःखशान्तये कश्चित् स्वनाशं मूढ इच्छति। न तथाऽत्र गतक्लेशस्वात्मस्थितिसमर्थनात् ॥१४९
इत्थं ब्रह्मप्रतिच्छन्दजीवपक्षेऽपि दूषणम् । ईश्वरोऽपि न जिज्ञासुः सार्वज्ञ्याध्यासंमतेः ॥
भावाभावात्मकाशेषविशेषोज्झितवर्ष्मणः । जिज्ञासाकर्मताऽप्यत्र विशिष्टोक्त्यैव बाधिता ॥
विषयत्वप्रहाणाच्च जिज्ञास्यत्वं विहन्यते । न ह्यत्रोपहिते चिन्ता न च सा भ्रान्तिशान्तिकृत् ॥
अवेद्ये हि न जिज्ञासा; सा चेत् क्वथमवेद्यता। न च कोटिद्वयोन्मुक्तं किञ्चित् स्यात् व्याहतत्वतः॥
ज्ञेयत्वे चात्मता न स्यात् घटादिवदिति त्वसत् । सह दृष्टेर्द्वयोर्वह्नेर्वस्तुत्वोष्णत्वयोरिव ॥१५४
कर्मकर्तृविरोधश्च स्वदृष्टौ भङ्गुम्भितः(?) । न हि दृष्टे विरुद्धत्वं न दृष्टिः शक्यनिह्नवा ॥
अवेद्यमिति वेद्यत्वे वेद्यत्वं स्वीकृतं भवेत् । अवेद्यमित्यवेद्यत्वे वेद्यत्वमनपोदितम् ॥ १५६ ॥
अवाच्यमित्यवाच्यत्वे वाच्यत्वेऽपि च वस्तुनः। वाच्यतैव भवेत् तस्य वाच्यावाच्यवचोन्वयात्॥

[1]प्रोवाचावचने(से ?)त्याद्या उक्तयश्च परात्मनः ।
अपरिच्छेद्यतार्थास्स्युः ; न चेत् , स्वोक्त्यादिभिः क्षतिः ॥ १५८ ॥

ज्ञानत्वात् ज्ञेयता नास्ति ज्ञातृताऽप्यात्मनस्त्विति। दृष्टश्रुतिविनिर्धूतं ज्ञानत्वं तु स्वभासनात्[2]॥
किंच श्रुतिशिरस्यैव विदीप्तिं वदता विभोः। परेषां व्यज्यतेऽर्थेषु त्रय्यन्तनिरपेक्षता ॥ १६०
स्वप्रकाशा मतिर्धीत्वात् दृश्यत्वात् विमतं मृषा । इत्याद्यैरेव सिद्धेऽर्थे कृतं त्रय्यन्तचिन्तया ॥
सगुणोपासनादीनां सिद्ध्यै तच्चिन्तनं यदि । तच्चेदद्वैतधीसिद्ध्यै, तद् वृथा तद्विरोधतः ॥
फलान्तरार्थं तच्चिन्ता यदीष्येत, तथा सति । मोक्षप्रधानशास्त्रत्वं गतं शारीरकस्य ते ॥१६२
श्रुतिवाक्यप्रसूता धीर्बाधिका, नाऽऽनुमानिकी । इति वक्तुं न ते शक्यमदृष्टस्यानपेक्षणात् ॥
अनुमानाच्च वाक्याच्च रज्जुसर्पादिविभ्रमे । अविशेषेण बाधो हि दृष्टस्तद्वदिहास्तु ते ॥१६५
प्रत्यक्षं शब्दजन्यं च दुःसाधं; निष्फलं च ते । [3]परोक्षादपि शब्दार्थात् क्वचित् बाधस्य सम्मतेः॥
न चानुमानाशक्तस्य वाक्यमित्यपि युज्यते । सर्वमानान्तरानर्हं शास्त्रमानत्वसाधनात् ॥१६७
अनेकनियमोपेतवाक्यचिन्ताविधेर्वरम् । लोकदृष्ट्यनुसारेण [4]श्रुतादेश्च क्षमाऽनुमा ॥ १६८ ॥
ज्ञातेदृशानुमानानां भ्रान्तिर्न भ्रश्यतीति चेत् । ज्ञाततादृशवाक्यानां समं तत् संभ्रमादृते ॥
द्वैताद्वैतमते[5]ऽप्येवमारम्भोऽनुपपत्तिमान् । न हि सर्वविदश्चिन्त्यं; जीवस्य न तदैक्यतः ॥१७०
उपाधितः स्वतो वाऽत्र भेदे सत्यपि किं भवेत् । रामादिभेदाद्वैषम्यं सर्वज्ञैक्यसमत्वतः ॥
सर्वेषु चावतारेषु नित्यं सर्वार्थवेदिनः । सुषुप्तिभ्रमदुःखाद्यं प्राहुः शैलूषनीतितः ॥ १७२ ॥

---

कश्चित् = उद्बन्धनादिकर्ता। गतक्लेशस्वात्मेत्येकं पदम् । निरस्ताखिलदुःखोऽहमिति कारिका भाव्या । प्रतिच्छन्दः = प्रतिबिम्बः । 1. ननु, 'अवचनेनैव प्रोवाच', 'गुरोस्तु मौनं व्याख्यानम्' इत्यादितोऽवाच्यत्वं प्रतीयते इत्यत्राह प्रोवाचेति । अवचनेनेत्यस्यार्थानुवादे अवचसेति स्यात् । अन्यथा पदैकदेशप्रातिपदिकग्रहणम्। 2. स्वभासनात्; न तु स्वान्याभास्यत्वात्। 3. परोक्षात् = परोक्षज्ञानविषयात् । 4. श्रुतादेश्च क्षमा = स्वयं लोकदृष्ट्या परकीयलौकिकोपदेशतश्चोत्पत्तुमर्हा श्रोतव्यो मन्तव्य इति श्रुतार्थविषयेऽपि कार्यकरतयाऽपेक्षिता सर्वार्हा च अनुमैव वरमित्यर्थः । 5. द्वैताद्वैतमते = भेदाभेदमते ।

इच्छया संसृतिश्चापि न [1]शक्यमिति भाषितुम् । परेच्छा तव जीवेच्छा तन्मूलश्च भवो यतः ॥
ज्ञातस्वजीवतादात्म्यः शक्तश्चेत् प्रसहेद् भवम् । अशक्तो यदि, मोक्षार्थं जिज्ञासेत(सेत्तत्) कथं
परम् ॥ अतो जीवेशयोर्भेदमभेदस्पर्शवर्जितम् । बभाषे नन्तृनन्तव्यरक्ष्यरक्षकतादिभिः ॥
इत्थं निवारितो भेदाभेदवादविधायिनोः। [2]द्वयोरपि च शास्त्रस्य प्रारम्भ, प्रातिकूल्यतः ॥

(स्वमतरीत्या शास्त्रानारम्भहेतुनिरासः .0)

स्वमते तु स्वरक्षार्थं(र्थे?)विशिष्टविषयोत्थिताः । निश्शेषमिह निर्धूताः शास्त्रानारम्भहेतवः ॥
ज्ञातमज्ञातमपि वा न जिज्ञास्यमिति त्वसत् । विदिताविदिताकारभेदेनैवोपवर्णनात् ॥ १७८
सिद्धं धर्मिणमुद्दिश्य साध्यधर्मविधानतः । इत्थमेवानुमानेऽपि वादिनोऽप्यनुमेनिरे ॥ १७९
[3]व्युत्पत्तिद्वारसिद्धेऽपि तद्विशेषेऽपि शास्त्रतः । अलौकिकेऽर्थे समभिव्याहारात् सा हि सम्मता ॥

नेदं शास्त्रं निर्विषयम्; "श्रोतव्यो मन्तव्यः" इति श्रुत्यनूदितविषयोक्तेः । नाप्यसौ भ्रान्त्या मानान्तरेण वा सिद्धः; निर्बाधे श्रुतिशिरस्येव विदीतत्वात् । न च निरूपितः; पूर्वकाण्डयोरान्यपर्यात्; शास्त्रान्तरे तु प्रसङ्गाभावात्; विरुद्धोक्तेश्च । न च ध्वाङ्क्षदन्तसंख्यावत् अनिरूप्यः; स्वगृहविनिक्षिप्तबृहन्निधिसाम्यात्; तदधीनबृंहणत्वरूपरक्षोक्तेश्च न च मुक्तिः सिद्धा; प्रत्यक्षादिविरोधात् । नाप्यन्येन साध्या; देहादिसृष्ट्या बन्धकस्यैव पुरुषस्य स्वनन्तृमुक्तिहेतुत्वात् । नाप्यन्येन निरोध्या; एतस्य स्वायत्ताखिलसत्ताकतया निस्समाभ्यधिकत्वात् । न ततोऽपि सा दुष्प्रापा; तस्य तदेकदीक्षितत्वात् । न स्वर्गादिवत् पुनरावृत्त्यादिभिर्दुरन्ता; निग्रहादेर्निश्शेषनिवृत्तत्वात् । न च समव्यत्ययफला; सुखोपायेन निरवधिकसुखलब्धेः । नाप्यत्राधिकार्यभावः; यथाश्रुति 'विनतविविधभूत' इति सामान्यतः, 'मम' इति विशेषतश्च व्यञ्जनादिति ।

प्रतितन्त्रविहीनत्वादनारभ्यत्वमित्यपि । असाधारणरूपेण भाषणेन निराकृतम् ॥ १८१ ॥

श्रूयते हि सर्वशरीरत्वं सर्वान्तर्यामित्वमित्याद्यर्थजातमत्रैव । अथवा—

सर्वानिष्टमिहानु(नू)क्तं[4] तावताऽपि किमागतम् । तस्मात् प्रामाणिकं चिन्त्यं परेष्टमथवाऽन्यथा ॥
आभिमानिकमानैश्च सिद्धान्ताः स्थापिताः परैः ।
[5]साधारण्यं क्व वा न स्यात् वैपुल्यात् देशकालयोः ॥ १८३ ॥

---

1. शक्यमिति । 'शक्यमरविन्दसुरभिः' इतिवत् । इति भाषितुम् = एवंदुःखादिमत्तया भाषितुं न शक्यतेत्यर्थः। न हि स्वेच्छाजनिता संसृतिः स्वदुःखाय । पाठान्तरं वा । 2. द्वयोः = भास्करयादवप्रकाशयोः। 3. लिङादेः कार्यसामान्ये व्युत्पत्तिसिद्धेऽपि तद्विशेषे क्रियाकार्ये सा = व्युत्पत्तिर्यथा समभिव्याहारात्, तथा शास्त्रतः अपूर्वरूपालौकिककार्येऽपि सा व्युत्पत्तिर्भवति समभिव्याहारादिति प्राभाकरसंमतं हीत्यर्थः। यद्वा क्रियाकार्ये व्युत्पत्तिसिद्धेऽपि समभिव्याहारात् शास्त्रतः अलौकिकेऽर्थेऽपि सा = जिज्ञासा संमता हीत्यर्थः ।
4. अथवेत्यारम्भात् अनुक्तमिति पाठ एव । न त्वनूक्तमिति। सर्वानिष्टमित्यस्य प्रतितन्त्रभूतमित्यर्थः।
5. साधारण्यमिति । प्रतितन्त्रत्वेन सिद्धमपि पश्चात् कदापि कुत्रापि कैश्चित् परैः स्वीक्रियमाणं चेत्, साधारण्यमेव भवति । विशिष्टाद्वैतं हि शैवैरपि स्वमतरक्षणप्रत्याशया पश्चाद्विष्टम् ।

(श्रीभाष्य) २. पाराशर्यवचस्सुधामुपनिषद्दुग्धाब्धिमध्योद्धृतां
संसाराग्निविदीपनव्यपगतप्राणात्मसञ्जीवनीम् ।
पूर्वाचार्यसुरक्षितां बहुमतिव्याघातदूरस्थिताम्
आनीतां तु निजाक्षरैः सुमनसो भौमाः पिबन्त्वन्वहम् ॥

---

प्रतिपदमिह युक्तिं भाष्यकाराशयस्थां कथयितुमुत मन्तुं कः प्रभुस्तां प्रभूताम् ।
तदपि कतिचिदस्मद्दर्शितं किंचिदेतत् श्रुतफलमवयन्तः स्वादयिष्यन्ति सन्तः ॥१८४॥

[1] अत्रैवं परगुरुस्तुत्यादिविशिष्टमङ्गलान्तर्नीतपरमविषयाद्युक्त्या अस्य शास्त्रस्यानारभ्यत्वमप्यपास्तम् । अथ "नमस्कृत्य हृषीकेशम्", "नमो भगवते तस्मै व्यासाय" इत्याद्याचारक्रमेणावरगुरुकीर्तनादिरूपमङ्गलगर्भावान्तरविषयाद्युक्त्या(क्त्वा?) विधित्सितस्य स्वप्रबन्धस्यानारभ्यतां निरस्यति—**पाराशर्य** इत्यादिना **व्याख्यास्यन्ते** इत्यन्तेन ।

**कुहकोक्तं भ्रमोक्तं वा निष्फलं निष्परिग्रहम् ।**
**स्पष्टं दुर्निर्वहं बोद्धृहीनमन्योज्ज्वलं(दितं?) न हि ॥ १८५ ॥**

[2]यदि एतच्छास्त्रं लोकायतादिवत् प्रतारकप्रोक्तं भ्रान्तिमूलं निष्प्रयोजनम् अपरिगृहीतं स्पष्टार्थं, विवक्षिते नेतुमशक्यम् अनधिकारिकम् अन्यतश्चरितार्थं वा स्यात्, न तर्हि व्याख्येयमिति शङ्काऽत्र क्षिप्यते ।

**पराशरः**—परान् बाह्यकुदृष्टीन् प्रमाणतर्कशरैः शृणातीति पराशरः ; तस्यापत्यं पाराशर्यः ; न तादृशापत्यमतादृक् स्यादिति व्यक्त्यै पाराशर्योक्तिः । श्रुतिश्च—"स होवाच व्यासः पाराशर्यः" इति । अत्र स्वगुणः पितृगुणेन ख्याप्यते । नात्र सूत्रकृत् बादरायणनामाऽन्य इति मन्तव्यम् ; "द्वीपे बदरिकामिश्रे बादरायणमच्युतम् । पराशरात् सत्यवती पुत्रं लेभे परन्तपम्" इत्यादिप्रसिद्धेः । तस्य च ब्रह्मसूत्रकृत्त्वं च स्कान्दोक्तम्—"अवतीर्णो महायोगी सत्यवत्यां पराशरात् । उत्सन्नान् भगवान् वेदान् उज्जहार हरिः स्वयम् ॥ चतुर्धा व्यभजत् तांश्च चतुर्विंशतिधा पुनः । शतधा चैकधा चैव तथैव च सहस्रधा ॥ कृष्णो द्वादशधा चैव पुनस्तस्यार्थवित्तये । चकार ब्रह्मसूत्राणि येषां सूत्रत्वमञ्जसा[3]" ॥ इति । "ब्रह्मसूत्रपदैश्चैव" इति भाविदर्शिभगवद्वाक्यं सूत्रपक्षाद्वापि वा स्वयमेव भारते न्यबध्नात् । सूत्रविषयतया च [4]तद्वाक्यरूपा प्राक्तनी भाविनी वा कृतिरुदाहियत इति न पौर्वापर्य(परस्पर)विरोधः । सद्ध(अथ) वाऽनादिसिद्धत्वात् स्मृतिसूत्रप्रवाहयोः । परस्परगृहीतिस्तु न विरोधाय कल्पते ॥

[5]आह च परभाष्यव्याख्याता, "ब्रह्मसूत्रकृते वेदव्यासायापरवेधसे । ज्ञानशक्त्यवताराय नमो भगवतो(ते) हरेः ॥" इति । "सुधाशब्देनास्यार्थस्य भोग्यत्वं दर्शयति" इति **विवरणम्** । अत्र च-वचसः सुधेति विग्रहे

---

1. उत्तरश्लोकमवतारयितुमारभते अत्रैवमिति । 2. कुहकेत्यादिकारिकार्थमाह यदीत्यादिना । शंका = अव्याख्येयत्वशंका । इति क्षिप्यते । इतीत्यन्तः क्षेपप्रकारः । 3. अञ्जसा = ऋजुनया, सम्यक् । 4. तद्वाक्यरूपा-भगवद्गीतारूपा । भाविनीति । भगवत इव बादरायणस्यापि भाविदर्शित्वादिति भावः । 5. आह चेति । व्यासबादरायणैक्यमिति शेषः ।

सुधाशब्दस्य गौणी वृत्तिः । रूपकप्रकरणानुरूप्येण(नुरोधेन) वा वचश्शब्दलक्षितस्तदर्थः सुधात्वेन रूप्यते । यद्वा—सूत्रमेव वा सुधेति रूपितम् । उपनिषद्भिरशेषार्थन्यायरूपार्थद्वारा तु उद्धृतत्वोक्तिः ।

(वचस्सुधाशब्दस्य समासनिषेधशङ्कानिरासः)

[1]ननु श्लेषोपस्कृतनिजाक्षरानीतत्वादिसामान्यप्रयोगे कथमिह "उपमितम्" इत्यादिना समासः ॥ इत्थम् । समाससूत्रं स्वादुत्वसामान्यमिहाप्रयुक्तम् । तदन्यस्य प्रयोगेऽपि न दोषः । "भाष्याब्धिः कऽतिगम्भीरः" इत्यादिवत्[2] ।

[[3]यत् विवक्षितसामान्यं तत्प्रयोगो निषिध्यते । उक्तिस्तदन्यसामान्यविषया न विरुध्यते ॥
विवक्षितं तु सामान्यं स्वादुत्वादिकमिष्यते । तत् पुनर्नोच्यते साक्षात् समासस्तेन सिध्यति ॥
अविवक्षितसामान्यप्रयोगः काव्यशास्त्रयोः । दृश्यते बहुशस्तस्मान्न समासोऽत्र दुष्यति ॥]

वैधर्म्यरूपत्वं वा विशेषणेष्विह सर्वेषु योज्यम् । सुधा हि अमृताक्षरोपचरितैरन्यस्य च्छन्दसोऽक्षरैरानीता ; इयं तु स्वाक्षरैरेव । सुधा किल केवलदुग्धाब्धिमध्योद्धृता, इयं तु उपनिषद्दुग्धाब्धिमध्योद्धृता । इत्थं शेषमपि योज्यम् ।

साधर्म्यात् स्वादुतासिद्धिस्तथा स्वादुतमत्वधीः । वैधर्म्यादिति वैधर्म्यं भाव्यमत्र मनीषिभिः ॥

[4]*"ओषधीभ्यो यथाऽमृतम्" इतिवत्(?)शिरश्शब्दाभिप्रायव्यवस्थार्थं उपनिषच्छब्दः । उपनिषदति—अव्यवधानेन नित्यं समन्वेति इत्यनन्यपरांशोक्तिः ; तथा च वाक्यम्—"उपनिषण्णत्वाद्वा उपनिषत्" इति । तत्र द्रमिडभाष्यम्—"गहने हीयं विद्या सन्निविष्टा" इति । तस्य च वामनटीका—"गहने ब्रह्मणि उपनिषण्णा" इति । भाष्यस्य सूत्राणि, तेषामुपनिषदः, तासां ब्रह्मेति विषयक्रमः । प्रयोजनानि च यथार्हाणि । *[ओषधीभ्यो यथाऽमृतम् इतिवत्?], 'आरण्यकं च वेदेभ्यः' इति श्रुतिधेनुसारभूतस्वादुतमरसतया, आनन्त्यगाम्भीर्यादिभिश्च दुग्धाब्धित्वोक्तिः । मध्यस्य अशेषपर्यन्तासत्तिसाम्यात् तदुक्त्या सर्वश्रुत्यानुगुण्यवृत्ति[5] उद्धृतत्वोक्त्या अर्थस्याकलितत्वमामूलग्रहणं च व्याप्यम् ।

संसारेत्यादिकमपेक्षिततमावान्तरप्रयोजनकथनम् ; "अस्ति ब्रह्मेति चेद्वेद" इत्यादिश्रुतेः । वाक्यार्थनिर्धारणे च सूत्राणां विश्रमात् । अचिद्भिरेकीकृत्य जन्मादिप्रवाहप्राप्तिः संसारः । यद्वा संसरत्यनेनेति संसारः[6] कर्म । स तु स्वर्गादेरपि तापत्रयमयत्वादग्नित्वोक्तः । दीपनं क्लेशकर्मादिज्वालोद्गतिः । सा चापवर्गप्रतिकूलतया स्वसंसृष्टनाशकावस्था । तद्वैविध्यमविद्यादिभेदात् पञ्चधा त्रिधा द्विधेत्यादि तत्र तत्र कथ्यते । अत्र शारीरादिविविधदुःखावहतया च वैशिष्ट्यं विशब्दार्थः । अत्र प्राणः प्राणिनां प्राणनहेतुः

1. शंकते नन्विति । समाधत्त इत्थमिति । 2. अत्र रूपकविषये, 'सामान्याप्रयोगे' इत्येतदर्थविमर्शविषये चास्मदीया भावप्रकाशिकाभूमिका द्रष्टव्या । 3. उक्तमेवार्थं श्लोकैः संगृह्णाति यदिति । यदित्यादिश्लोकत्रयं साधर्म्यादिति श्लोकानन्तरं क्वचित्र मुद्रितम् । तत्रानन्वयादत्र योजितम् । 4. इदमत्र न स्यादिति उपरि निक्षिप्तम्, दृश्यताम् । तत्र इतिवदित्यस्य स्वादुतमरसतयेत्यत्रान्वयः । 5. आनुगुण्येन वृत्तिरिति विग्रहः । अस्यापि व्याप्यमिति विशेषणम् । नपुंसकेनेति सूत्रात् क्लीबत्वैकत्वे । 6. यावत्संपातमित्यत्र संपातशब्दवत् संसारशब्दः ।

परमात्मा, "न प्राणेन नापानेन मर्त्यो जीवति कश्चन । इतरेण तु जीवन्ति यस्मिन्नेतावुपाश्रितौ ॥" "प्राणस्य प्राणम्", "प्राणमेवाभिसंविशन्ति" इत्यादिश्रुतेः । "प्राणस्तु प्रणवे जीवे जीविते परमात्मनि" इति च पठ्यते । **अपगतः** अतिदूरस्थः शास्त्रेषु दर्शयत्स्वपि कूटयुक्त्यादिभिरद्य यावत् असद्ब्रह्मेति वेद्यतां प्राप्तः । विशब्दः श्रवणाद्यन्यतमेनाप्यनवाप्तत्वपरः । विशेषतो **वाऽपगतः**—स्वयमवतीर्य स्वात्मानं दर्शयत्यपि व्यावृत्ततया दुर्दर्शः । अत्र, "प्राणो ज्ञानम्" इति **न्यायसुदर्शनम्** । आत्मनां तद्गुणसारतया तदंशोक्तिः। तदा **व्यपगतिः** अतिसङ्कोचः ; व्यपगतप्राणानां **सञ्जीवनं** नाम बाह्यकुदृष्ट्यवपहार्यं प्राण[1]स्थापनम् । तन्मुखेन रक्षोक्तिरक्षितपरमप्रयोजनविवरणं चैतत् । तदा तूपसर्गेण स्वात्मप्रापणादिमात्रव्युदासः । **पूर्वाचार्याः** बौद्धजैनादिभ्योऽन्ये । औपदेशिकी रक्षा तदैव तत्रैव ; ग्रान्थिकी तु कालान्तराद्यनुच्छेदात् **सुरसोक्ता** ।

**[2]रक्षितत्वं तु रामार्यैस्त्रय्यन्तार्थे हि सूचितम् । आत्मसिद्ध्यादिभिः प्रोक्तं यामुनार्यनिबन्धनैः ॥**

**सुधा-सुरक्षित**शब्दाभ्यां ववतृस्तुतिरार्थी । सुधा तु सुरगुरुचक्रयन्त्रादिभिर्दृढगुप्ता । सुरक्षितत्वेऽपि स्वस्वसंप्रदायैः कुदृग्भिः क्षोभितत्वमाह— **बहु** इति । बह्व्यः मिथो विरुद्धाः बहूनां वा मतयः, ताभिर्व्याघातः—विविधा अभिव्याप्तः पीडा ; स्वारसिकधीविरोध इत्यर्थः । तेन दूरस्थितां बोद्धॄणां रजस्तमस्तारतम्यात् अबोधासम्यग्बोधान्यथाबोधार्हामित्यर्थः ।[3]

**[4]अबोधश्चायथाबोधस्तत्त्वबोधविरोधिनौ । अनिश्चितावबोधेऽपि तथाऽबोधकता स्थिता ॥१९२**
**सद्भिर्याद विगीयेत न संगृह्येत पश्चिमैः । न तन्मतानुसारश्च सत्यः स्यात् व्याजिहीर्षतः ॥**
**कुदृष्टिभिश्च बाह्यैश्च यदि वाऽभ्युपगम्यते कः स्वपक्षतया रक्ष्यः परपक्षश्च को भवेत् ॥**
**तदत्र चतुरध्याय्यां साधनाक्षेपभागयोः । निदानमभिसन्धाय निर्दिष्टं भेदतो द्वयम् ॥१९५**

सुधा तु विरुद्धमतिदैत्यादिव्याघातभयात् दूरस्थिता; यद्वा कद्रूविजितायाः सुपर्णीस्तथा(तया?)बहुमतिव्याघातदशायाम् , आत्मनिष्क्रयणार्थमाहर्तव्यतया **दूरे** तृतीयस्यां दिवि **स्थिता** । स्वव्याख्यानस्याप्यन्यैर्व्याघातादसामर्थ्यापरिहार इत्यत्राह— [5]**आनीताम्** इति । बुद्ध्यासन्ने स्वार्थे स्थापिताम् । एतेन व्याख्यातद्भुतोः सम्बन्ध शोधितः । परेष्टव्यावहरिकसाधकव्यावृत्त्यै तत् व्यनक्ति—**निजाक्षरैः** इति । वचःप्रस्तावात् तदक्षराणि **निजाक्षराणि; सूत्राक्षराणी**ति वक्ष्यमाणत्वात्। यथा **विवरणम्**–"सूत्राक्षराणि यमर्थं स्वरसतो बोधयन्ति, स एव साम्प्रदायिकः ; वक्तुः स्वसमीहितार्थवाचकशब्दप्रयोगव्युत्पत्तेः ।

---

1. प्राणस्थापनम्= ज्ञानोत्पादनम् ।

2. रक्षितत्वमिति । नाथमुनिप्रवर्तितस्य त्रय्यन्तार्थस्य यामुनेयनिबन्धनैः रक्षितत्वमत्र सुरक्षितपदेन प्रोक्तम् । रामार्यैः यामुनेयानामाचार्यैः रक्षितत्वं तु अर्थात् सूचितम् । रामार्याः खलु यामुनेयसविधे जगदुः— अस्मत्प्राचार्य-भवत्पितामहप्रोक्तं भवदर्थे रक्षन्नस्मि ; गृह्यमिति । तदभावे इयं सुरक्षा कथं भवेत् । सुधापक्षेपूर्वाचार्याः प्रथमगुरुर्मोहिनीरूपो भगवानपि बृहस्पत्यादिरपि ।

3. उपरिमुद्रित एव आन्ध्रलिपिग्रन्थपाठः । 4. अबोधः= सर्वथैव ज्ञानाभावः । अयथाबोधः= अन्यथाज्ञानम् । अनिश्चितावबोधः संशयः । 5. आनीतांतु इति तुशब्दार्थो भाष्यार्थदर्पणे ।

**भगवद्बोधायनकृतां विस्तीर्णां ब्रह्मसूत्रवृत्तिं पूर्वाचार्याः संचिक्षिपुः; तन्मतानुसारेण सूत्राक्षराणि व्याख्यास्यन्ते ।**

---

स्वरसतः परप्रत्यायनार्थत्वात् शब्दप्रयोगस्य" इति । बहूनां व्याख्यानानां मिथो व्याघाते व्याख्येयस्वारस्यं सम्प्रदायव्यवस्थापकमिति भावः । सुधा तु सोमाख्या सौपर्णाख्यानप्रसिद्धैर्गायत्र्यवयवैरमृताक्षरैस्सह आनीता । मदुक्तिभिरिति वा अर्थः। तन्त्रतः सुधासमाधिसिद्ध्यै तथाऽनुक्तिः । सुधायाः **सुमनसः देवा** भोक्तारः । यद्वा गायत्र्यभिमानिसुपर्णानीतायाः सोमलतारूपेण परिणतायाः एकाहाद्युपयुक्तायाः भौमाः सुमनसः प्रतिसमयं भोक्तारः । वचोरूपायास्तु, "ब्राह्मणा विविदिषन्ति" इतिवत् चोदनानर्हत्व्यावृत्ताः, "सारासारविवेकज्ञाः" इत्यादिना [1]स्वेनैवान्यत्रोक्ताः । एतेन ब्रह्मविद्यासम्प्रदानमपि शिक्ष्यते । श्रूयते ह्येतत् **छान्दोग्ये**—"इदं वाव तत् ज्येष्ठाय पुत्राय पिता ब्रह्म प्रब्रूयात् प्रणाय्याय वाऽन्तेवासिने । नान्यस्मै कस्मैचन । यद्यप्यस्मा इमामद्भिः परिगृहीतां धनस्य पूर्णां दद्यात्, एतदेव ततो भूयः" इति । [2]प्रणाय्यः=प्रश्रितत्व-अनसूयु(य)त्वऋजुत्वादिभिर्योग्यः । न हि **भौमाः सुमनस**[3] इति भूसुरमात्रोक्तिः युक्ता, अधीतवेदवर्णत्रयार्हत्वान्मीमांसायाः; स्वतो विदुषां स्वर्गादिभुजां प्रायो न सूत्रव्याख्यानापेक्षा, सत्यामपि तस्यां विशालधीयोग्यै[4]र्वृत्त्यादिभिस्ते चरितार्थाः । अतो न वृथाऽत्र भौमत्वोक्तिः । **पिबन्तु** अपयत्नं सुखमनुभवन्तु । यत्नो हि सुधाया मन्थनतः आ(तदा)नयनतश्च । **अन्वहम्** । अतिगम्भीरत्वात् अत्यन्तहृद्यत्वाच्च ।

**सुधेयं सूत्रकारेण हरिणेव समुद्धृता । आनीता भाष्यकारेण [5]द्विजेन्द्रेणेति चाऽऽशयः ॥१९६**

**(स्वग्रन्थस्य पूर्वाचार्यग्रन्थैरचरितार्थत्वं तन्मतानुसारित्वं च)**

तथाऽपि किमहर्दीपवत् अनुपकार-कृतकरनिर्माणगौरवेण ? अनुच्छिन्नाः शुद्धाः प्राचीनव्याख्याः प्रवर्त्यन्ताम्; तत्राह-**भगवदिति**। "उत्पत्तिं प्रलयं चैव" इत्याद्युक्ताध्यात्मबोधातिशयपरोऽत्र **भगव**च्छब्दः; तेन शबरशङ्करादिव्यावृत्तिः। विस्तीर्णत्वोक्तिः अधतनैर्दुस्तरत्वमभिप्रैति। [6]अत्र पूर्वाचार्या ब्रह्मनन्द्यादयः। तन्निबन्धनानामतिसङ्क्षेपात् गहनत्वं सूचयति—**संचिक्षिपुः** इति । [7]सूत्रस्यापितार्थपरैः ग्रन्थैरित्याशयः। परोक्तेरन सम्प्रदायत्वं व्यञ्जयितुमाह **तन्मतानुसारेण** इति । "अल्पाक्षरमनल्पार्थम्", "लघूनि सूचितार्थानि स्वल्पाक्षरपदानि च" इति सूत्राणां बह्वर्थसूचकाल्पाक्षरतया व्याख्यापेक्षत्वायाऽऽह—**सूत्राक्षराणि** इति । प्रकृतिप्रत्यययोःक्लेशमभिप्रेत्य अक्षरशब्दः । तेन, "सूत्राणि यथासम्भवं द्रष्टव्यानि"

---

1 अन्यत्र=वेदार्थसंग्रहे । 2 'प्रणाय्योऽसंमतौ' इत्यनुशासनस्याऽप्ययमेवार्थ इति भावः। विरक्त इत्युक्तिरुपलक्षणम्; योगार्थात्यागस्य युक्तत्वात् । 3 सुमनस इत्यनेन दुर्मनसां काद्रवेय-तुल्यानामनर्हत्वमपि सूचितम् । 4 वृत्तिः=बोधायनवृत्तिः । 5 द्विजेन्द्रेणेत्यस्य विप्रवरेणेत्यर्थस्यापि ग्रहणार्थम् इवकाराप्रयोगः । 6 अत्र नाथयामुनग्रहणायोगादाह अत्रेति । 7 सूत्रस्यापितार्थे-त्यनेन, साक्षात् सूत्रव्याख्याकोटिनिविष्टभिन्नानामपि ग्रन्थानां ग्रहणं सूच्यते । वाक्यं हि ब्रह्म-नन्दिकृतं छान्दोग्यव्याख्या ।

**ओ अथातो ब्रह्मजिज्ञासा (१-१-१) ॥ अत्रायमथशब्द आनन्तर्ये भवति । अतश्शब्दो वृत्तस्य हेतुभावे ।**

---

इति परोक्तिरनास्थेया । उक्तं च भास्करैः—"सूत्राभिप्रायसंवृत्या स्वाभिप्रायनिवे(प्रका)शनात् । व्याख्यातं यैरिदं सूत्रं(शास्त्रं) [1]व्याख्येयं तन्निवृत्तये ॥" इति ।

अक्षरार्थमलं ब्रूमः, सूच्यं तु निश्शेष(षं?)दुर्वचम् । अक्षरशक्त्यतिरिक्तः स्फोटो न कल्प्यः इत्यपि व्यज्यम् । **व्याख्यास्यन्त** इत्यत्रोपसर्गाभ्यां धातुना च अद्यतनबुद्ध्यनुगुणम् अनतिसङ्कोचविस्तरत्वं स्पष्टोक्तिश्च व्यज्यते । यद्वा वैशिष्ट्यं प्राबल्यं च निपातद्वयार्थः। "पदच्छेदः पदार्थोक्तिः" इत्यादि च भाव्यम् । **अखिलेत्यादेरेतदन्तस्य**, "**सूत्रार्थो** वर्ण्यते यत्र" इत्याद्युक्तं भाष्यलक्षणं तदर्थसंग्रहात् तादर्थ्याच्च सिद्धम् ।

व्याख्यापेक्षत्वव्यक्त्यै सूत्रमुद्गृह्णाति—**अथेति** । अत्र **अथातः** इति पिण्डितं रूपम् अव्युत्पत्तेः, [2]पृथगर्थसम्भवात् अंशान्तरनैरर्थक्याच्च न युक्तम् । क्लिष्टगतिस्तु न गतिसद्भावे ।

(अथशब्दव्याख्या)

**अथ**शब्दस्यानन्तर्ये प्रसिद्धिः प्रकृष्टाऽपि सो(स्यो)पयोगासाधारणवृत्तविशेषादृष्ट्या अपोदिता । अत एव न प्रकृतादर्थान्तरपरत्वम् ; कल्पद्वयादृष्टेश्च । प्रश्नस्त्वनर्थकोऽनुत्तरश्च । कार्त्स्न्यमनपेक्षितवचनम् ; एकदेशचिन्ता हि न शङ्कारूढा । तस्मादारम्भार्थकत्वं स्यात् ; आरभते ह्यत्र सूत्रकारः । मङ्गलार्थकत्वं वा ; स्मर्यते हि—"ओङ्कारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा । कण्ठं भित्त्वा विनिर्यातौ तस्मान्माङ्गलिकावुभौ" इति । तत्राह-**अत्र** इति । **भवतिना अथशब्दस्य** स्वारस्यानूक्तिः । **अत्रायं**पदाभ्यामपवादापोहः। अत्र=वेदोत्तरांशविचार्यत्वार्थे सूत्रे । तेन यतः कुतश्चिद्वा भागान्तरसाधारणाद्वा कुतश्चिदानन्तर्योक्तेरानर्थक्यात् कर्मविचाररूपं वृत्तं विविनक्ति । **अयम्**—"अथातो धर्मजिज्ञासा", "अथातः क्रत्वर्थपुरुषार्थयोर्जिज्ञासा" इत्यादिष्विव **अतश्शब्दोपेतः** । [3]**एतच्छब्दो** हि प्रस्तुते स्वरसः ; विभक्तिश्चासौ **हेतुत्वे** । एवं सामान्यतः **अत** इत्यभिहिते ब्रह्मजिज्ञासया विशेषत आक्षिप्ते वृत्ते सति आनन्तर्यस्वारस्यं नापोद्यते । "अथातः" इति समुदितप्रयोगनिरपेक्षसामर्थ्यव्यक्त्यर्थः **अत्रायंशब्दः** इति केचित् । **अत्रेत्यादिनैवार्था**न्तराणामिहानन्वयः सूच्यते । तथाहि—

(अथशब्दस्यात्र मङ्गलवाचकत्वनिरासः)

मङ्गलार्थत्वं तावत् प्रतिक्षिपामः। [4]तत् किमस्याविवक्षितार्थस्य सन्निधिमात्रेण, तद्वाचकतया वा ? नाऽऽद्यः ; अबोधकस्य वाक्ये निबन्धायोगात् । [5]श्रुतिप्रयोजनमात्रस्य मङ्गलस्य पदान्तरार्थेऽनन्वयाच्च । विवक्षितार्थान्तरस्यापि सन्निध्युपजीवनोपपत्तेश्च । न द्वितीयः ; द्योतकमात्रत्वात् , "अथ शब्दानुशासनम्"

---

1 व्याख्या इयमिति पदच्छेदः । इयमस्मदीयेत्यर्थः । 2 पृथगिति । पिण्डितरूपविवक्षितस्यार्थस्यांशत एवोक्तिसंभवादंशान्तरवैयर्थ्यमित्यर्थः । 3 एतच्छब्दः अतश्शब्दप्रकृतिभूतः । पिण्डितं भवदासादृतमिति अनन्तरभाष्यपंक्तिव्याख्यानान्ते स्पष्टम् । 4 तत्=मंगलार्थत्वं मंगलहेतुत्वम् । 5 श्रुतीति । अथशब्दश्रवणफलभूतस्य मंगलस्य तद्वाच्यतया न पदान्तरार्थान्वय इत्यर्थः ।

इत्यादावर्थं वदद्भिरप्यधिकृतमित्यादिपद[1]मध्य'हारेणोक्तम् ; न त्वथशब्दवाच्यत्वमभिसन्धाय ; वाच्यत्वेऽप्यत्र मङ्गलस्य वक्तव्या सङ्गतिः। मङ्गलोक्तेः प्रकृतौपयिकमङ्गलत्वेऽप्यनुनिष्पत्त्यैव तत्सिद्धेर्युक्तेर्युक्तम् ।

**मृदङ्गध्वनिनीतिं तु वक्ति [2]माङ्गलिकस्मृतिः । प्रयोक्तुः श्रोतुरप्येतौ मङ्गलप्रापकाविति ॥**

अन्यथा [3]ब्रह्मशब्देनान्यपरत्वम्, भिन्नत्वं वाक्यस्य, भवत्वित्यध्याहारश्च स्युः। अकृतकत्वेनोत्तमङ्गलमतत्त्ववाचकत्वात् ब्रह्मशब्दस्य । न चात्र हेतोः साध्यस्य वा मङ्गलत्वमनूद्यते वा, विधीयते वा ; नैरर्थक्यात् । न ह्यत्र तद्विरुद्धत्वाशङ्का, अनिषेधात् । न्यायसूत्राणि च संशयनिरासार्थानि ॥ ननु मङ्गलत्वं विचारस्य ख्याप्यताम्, अत एव तद्विधिरिति तत्सार्थता ॥ तदपि मन्दम् ; अत इति हेतुनैव नैराकाङ्क्ष्यात्, अधिकोक्तेरनुपयोगाच्च ।

(आरम्भार्थकत्वनिरासः)

आरम्भार्थत्वमप्ययुक्तम्; नारभ्यत इति शङ्कानुत्थानात्; साध्यतया बुद्धस्यारम्भस्य कथनानर्थक्याच्च। न च जिज्ञासाया आरम्भयोग्यत्वमथशब्दो वक्ति, द्योतयति वा, अव्युत्पत्तेः। [योग्येति पदाध्याहारेऽप्यनन्वयः;?] [4]आरब्धुमिति क्रियान्तरार्थक्रियानुपस्थानात् । अन्यथा समुच्चयादिद्योतकेष्वपि समुच्चेतुमित्यादिविवक्षया योग्यपदान्वयप्रसङ्गात् आरब्धव्येत्येव च पदमध्याहार्यम् ; तदा किं तदर्थेनाथशब्देन ? न चात्राध्याहारार्थद्योतनम् ; साकाङ्क्षतयैव तत्सिद्धेः । प्रसिद्धग्रहणेन क्लिष्टग्रहणायोगाच्च । योग-शब्दानुशासनयोः आनन्तर्यमगत्या त्यक्तम्[5] । अत्र तु न शास्त्रारम्भार्थताऽपि । अन्यो हि विचारः, अन्यदनुशासनम् ; न च तस्यात्रोपादानम् ॥ ननु ज्ञाप्यतया ब्रह्माधिक्रियताम् ॥ मैवम्—उपसर्जनश्रवणविलम्बात् । व्याख्यानानुशासनशब्दाभावादेव(त् एवं?) जिज्ञासाशब्दस्य मीमांसापर्यायत्वाभावेन ज्ञाप्यतानुपस्थापनाच्च । अत एव, 'विचारः कर्तव्यत्वेन बोध्यतयाऽधिक्रियते' इत्यपि न वाच्यम् ; विचारारम्भणीयत्वस्थापनेनैव सिद्धे पदान्तरवैयर्थ्यात् ; अपेक्षिते सति अनपेक्षित(तकथना?)योगात् ; उभयोक्त्या गौरवाच्च ।

तस्मात् स्वारसिकमनपोदितमानन्तर्यमेवात्र स्थापितम् ॥

( अतश्शब्दस्य वृत्तविशेषविषयत्वम् )

अतश्शब्दस्य प्रकृतिः धीस्थे वर्तिष्यमाणेऽपि स्यात् ; प्रत्ययश्च सार्वविभक्तिकः । [6] "अ(त)तोऽथ मौनम्" इत्यादिष्वन्यार्थः ; पञ्चम्यर्थोऽप्यनेकः। अतो नार्थविशेषसिद्धिरित्यत्राह-- अतश्शब्द इति । इहापि अत्रायंभवतीनामनुषङ्गः ; [7]स्वारस्यात् । (स्वारस्यम् ?) उत्तरपदसमभिव्याहारश्च [8]प्राग्वत् ।

---

1 अध्याहारेणोक्तम्=अध्याहृतम् । 2 'तेन मांगलिकावुभौ' इति स्मृतिः । 3 ब्रह्मशब्देन एकमंगलोक्त्या तद्भिन्नमंगलपरत्वमित्यर्थः । 4 ननु योग्येत्यध्याहारे आरब्धुं योग्येत्यर्थलाभ इत्यत्राह आरब्धुमिति । आरब्धुमिति तुमुन्नन्तोपस्थाप्या या क्रियान्तरार्थक्रिया, तद्रूपेण तस्याः अथशब्देनानुपस्थितेरित्यर्थः। 5 त्यक्तमिति । आरम्भार्थकत्वं स्वीकृतमिति शेषः । 6 प्रकरणं श्रुतप्रकाशानुरुध्य तत इत्यत्र अत इति शोधनं पूर्वमुद्रणे कृतमस्ति । 7 स्वारस्यादिति । अतश्शब्दस्यैवमर्थ एव स्वारस्यात् तज्ज्ञापनाय एवमनुषंग इत्यर्थः । 8 प्राग्वदिति । 'ब्रह्मजिज्ञासया विशेषत

**अधीतसाङ्गसशिरस्कवेदस्य अधिगताल्पास्थिरफलकेवलकर्मज्ञानतया सञ्जातमोक्षाभिलाषस्य अनन्तस्थिरफलब्रह्मजिज्ञासा ह्यनन्तरभाविनी ।**

[1]विचारितकर्मणां ब्रह्मविचारहेतुतया वक्ष्यमाणहेतुरनुपलम्भनिरस्तः । ब्रह्मविचारापेक्षया वर्तिष्यमाणस्य तु न तद्धेतुत्वम् । प्रयोजनमपि न स्वरूपेण हेतुः, मिथस्संश्रयात् । तदिच्छा तु वृत्तैव । प्रत्ययस्य च विभक्त्यन्तरार्थकत्व(त्त्वा?)म् अपादानत्वादि च प्रकृतानुपयुक्तम् । **अय**मिति पदस्य स्वरूपमात्रमनुषज्यते । **तेनाथ**शब्दयुक्तत्वमिह विवक्षितम् ; न चैवं मिथस्संश्रयः; शब्दस्वारस्ययोः स्वतस्सिद्धतया स्वरूपसिद्धौ मिथोऽनपेक्षणात् । सहकारित्वमात्रस्यैव मिथोऽपेक्ष्यत्वाच्च । **अय**मिति पदं वा नानुषञ्जनीयम् ।

(अथातःपदयोरुभयोरावश्यकत्वम्)

**नन्वथातः**पदयोरन्यतरेणालम् ; सूत्रं ह्यत ॥ मैवम्-प्रयोजनाधिवयात् ; कर्मविचारव्यवधायकशास्त्रान्तरनैरपेक्ष्यद्योतनार्थत्वा**दथ**शब्दस्य । ब्रह्मविचार्यत्वहेतोरनन्यलभ्यप्रयोजनवत्त्वेनाऽऽपातधीस्थ[त्व?]स्य[2] विशेषणविशेष्यांशासिद्धिव्युदा(निरा)सार्थत्वात् **अतः**शब्दस्य ।

**आनन्तर्येऽप्यहेतुत्वं हेतुत्वेऽपि विलम्बनम् । दृष्टमिष्टं च तत् सार्थं द्वयं काण्डान्तरे यथा ॥**
**एकं जिहासतस्त्वत्र द्वित(ती)यं हेयमापतेत् । स्वाधिकारं स्वहेतुं च विचारः स्वयमाक्षिपेत् ॥ १९**
**तस्मादारम्भसूत्रेऽस्मिन् धर्मचिन्तादिसूत्रवत् । प्रायुङ्क्त प्रातिलोम्येन प्रतिज्ञादित्रिकं[3] पृथक् ॥**

(वृत्तकर्मविचारस्य ब्रह्मजिज्ञासाहेतुत्वम्)

अत्र कीदृक् वृत्तम्, यन्नियमेनापेक्ष्यम् ; कीदृक् च वर्तिष्यमाणम्, येन वृत्तविशेषाक्षेपः ; तयोश्च पौर्वापर्येऽपि कथं कार्यकारणभावः, तत्सिद्धौ च [कारणानामनियतत्वे?] तृणारणिमणिन्यायः[4] स्यात् । नियमेऽपि तत्त्वधीमुक्त्योरिव मा भूदानन्तर्यमित्यत्राह— **अधीत** इति । कर्मब्रह्मविचारौ वृत्तवर्तिष्यमाणौ तयोरल्पास्थिरफल-अनन्तस्थिरफलशब्दाभ्यां **सञ्जाते**त्यादिना च हेतुहेतुमद्भावव्यञ्जनम् । स्थिरास्थिरशब्दाविह नाशराहित्यतद्वत्त्वपरौ । कर्मज्ञानमिह निर्णयरूपम् । तस्या**धिगतिः** प्राप्तिः, "परीक्ष्य लोकान्" इत्यादिभिरल्पास्थिरफलतयाऽवगमो वा । अनुष्ठानद्वारा कर्मज्ञानस्य फलसम्बन्धः । अल्पास्थिरफलत्वं कर्मविशेषणं वा । मोक्षविश्रान्तविद्याङ्गकर्मव्यावृत्त्यै **केवल**शब्दः । **अनन्तस्थिरफल**शब्दः

आश्रिते वृत्ते' इति हि प्रागुक्तमिति । स्वारस्यमिति पाठलाभे अङ्कुशेन प्रागुक्तमित्यत्रान्वयः ।

1 अत इत्यस्य वक्ष्यमाणाद्धेतोरित्यर्थोऽस्तु इत्यत्राह-विचारितेति । विचारितकर्मपुरुषकर्तृकब्रह्मविचारे हेतुतया न कश्चित् वक्ष्यते इत्यर्थः । 2 धीस्थस्येत्यत्र धीस्थत्वस्येति शोधनीयम् । 'ब्रह्म जिज्ञास्यमित्युक्तं भवति' इति भाष्यानुसारि वाक्यमिदम् । ब्रह्म विचार्यम् अनन्यलभ्यप्रयोजनवत्त्वेनाऽऽपातधीस्थत्वादित्यनुमानम् । तत्र विशेषणमनल्पास्थिरफलम् । विशेष्यमापातधीः । सिद्धे व्युत्पत्तिस्वीकार एव हि आपातधीः स्यादिति । 3 त्रिकमिति । ब्रह्म जिज्ञास्यमिति प्रतिज्ञाम्, अत इति हेतुम्, अथेत्यधिकारिताञ्चेत्यर्थः । यद्वा अथ = कर्मविचारानन्तरमित्यनेन कर्मवत् इति दृष्टान्तज्ञापनात् उदाहरणरूपावयवसिद्धिः । 4 तृण-अरणि-सूर्यकान्तमणीनामग्निं प्रति विकल्पेन कारणता ।

**ब्रह्मणो जिज्ञासा ब्रह्मजिज्ञासा । ब्रह्मण इति कर्मणिषष्ठी ; "कर्तृकर्मणोः कृति" इति विशेषविधानात् । यद्यपि सम्बन्धसामान्यपरिग्रहेऽपि जिज्ञासायाः कर्मापेक्षत्वेन कर्मार्थत्वसिद्धिः ; तथाप्याक्षेपतः प्राप्तादाभिधानिकस्यैव ग्राह्यत्वात् कर्मणिषष्ठी गृह्यते ।**

---

कर्मधारयवृत्त्या ब्रह्मविशेषणम् । बहुव्रीहितया वा परम्परया मोक्षहेतुभूतां जिज्ञासां विशिनष्टि सम्-इत्युपसर्गेण हेतुनिरपेक्ष[त्वः]मानन्तर्यं च सूच्यते । सांख्यादिशीलनजन्या दुःखदृष्टिमात्रजन्या वा मुमुक्षा हि समीचीं ब्रह्मचिन्तां न सूते । कर्ममतेऽनन्तफलदुराशायां निरस्तायां निवृत्ततत्प्रतिबन्धतया व्युत्पत्ति-भूयस्त्वोपनिपतितधीवृद्ध्या च तीव्रतमे मोक्षाभिलाषे सामग्रीदशायां ब्रह्मविचारविलम्बो न स्यादित्याशयः ।

**विघ्नान्तरविहीने तु स्यादानन्तर्यमत्र नः। अतो नातिप्रसक्तिः स्यात् तथाऽन्यैरपि सम्मतेः ॥**

अधीतेत्यादिना मुमुक्षोस्तम्मकमतान्तरशीलनानवसरज्ञापनम् । जिज्ञासोत्पादकफलाधायकधीवृद्ध्यै वेदमात्रनियतव्युत्पत्तिविशेषसिद्ध्यै वा, 'निष्कारणः षडङ्गो वेदोऽध्येयः" इत्यादिसिद्धसाङ्गत्वोक्तिः । 'अङ्गग्रहणं विचारप्रयोजकस्य प्रयोजनालोचनस्य सिद्ध्यर्थम्" इति **तूलिका** । फलाधिकयद्विशेषं गृह्णतः सशिरस्कशब्देन अध्ययनविधौ **स्वाध्यायशब्दस्य** निरवशेषभागद्वयविषयत्वं(त्वात्) तद्विचारार्थाया-स्त्रिकाण्ड्याः ऐकशास्त्र्यं, क्रमश्च सूच्यते । न ह्यध्ययनविध्यनवलीढं शिरः, येन न विचार्यं स्यादिति भावः । वेदशब्द इह पुरुषार्थतदुपायादिबोधनार्हत्वं व्यनक्ति । तत एव विचारेच्छाजनकाधायकधीसिद्धिः। षष्ठ्यन्तपदाभ्यामधिकारिनिष्कर्षः ।

यदुक्तं कैश्चित् **कर्मसूत्रव्याख्यारम्भे** — "प्रसिद्धोऽप्यथशब्दादेः किं पदार्थोऽत्र वर्णितः । प्रदर्शनार्थमित्येके [1]केचिन्नानार्थवाचिनः । समुदायादवच्छिद्य **भवदासेन** कल्पितात् । शक्तितोऽवयवस्यैव वर्णयन्त्यष्टमादिवत्" इति—तदिह नातीव[2] पेशलम् ; प्रसिद्ध्यपवादशङ्कायां पदद्वयव्याख्यानस्या-वतारितत्वात् ॥

**('ब्रह्मजिज्ञासा' इत्यत्र व्याससमासान्तरनिषेधपूर्वकं षष्ठीतत्पुरुषसमर्थनम्)**

तृतीयपदेऽपि वृत्तेरनेकधा सम्भवेन विशेषव्यक्त्यै विगृह्णाति—**ब्रह्मणो जिज्ञासा इति** । अत्र हि **व्यासस्तावत्** न घटते, जिज्ञासानन्वयात् । अत एव न कर्मधारयः ; [3]सामानाधिकरण्यार्हत्वेऽपि विशेषणविशेष्यव्यत्यासात्, विवक्षितानुपयोगाच्च । द्वितीया तु कृद्योगापोदिता । ब्रह्मणः सर्वहेतुतया तृतीयासमाससम्भवेऽपि विषयाद्युक्तिवृत्तविशेषाक्षेपश्च न स्यात् । तादर्थ्ये चतुर्थ्यास्त्विह समासः प्रतिषिद्धः; "तादर्थ्यसमासे प्रकृतिविकृतिग्रहणं कर्तव्यम्" इति **कात्यायनोक्तेः**। आहुश्च—"प्रकृत्या विकृतिर्यस्मात् चतुर्थ्यन्ता समस्यते । तादर्थ्ये यूपदार्वादौ तेनास्मिन्[4] न समासता ॥" इति । तथा न सम्प्रदानत्वमपि ;

---

1 केचिदिति । अथात इति पिण्डितमानन्तर्यवाचीति भवदासकल्पितात् समुदायात् पृथक्कृत्य विभिन्नार्थवाचिनः अवयवस्यैव शक्तितोऽर्थवर्णनम् अष्टमाध्यायादिपदभूताथशब्दस्येवेति भावः । 2 अप्रसिद्ध्यैव तत् खण्ड्यम् । आरम्भ एव अल्पाक्षरत्वरूपलक्षणत्यागापत्तेश्च । 3 अर्हत्वम्, 'रसोऽहमप्सु' इत्यादाविवापर्यन्तसानवृत्त्येति बोध्यम् । 4 अस्मिन् =प्रकृतिगततादर्थ्ये ।

ब्रह्मणः सम्प्रदानत्वाभावात् । सप्तमीसमासेऽपि विषयत्वम् न सिध्येदिति भावः । तदिह पञ्चमीम् [1]अर्थान्तरशङ्कां च वारयति-ब्रह्मण इति कर्मणिषष्ठी इति । उक्तं ह्याचार्यैः-"असूत्रस्यापि षष्ठीयं समासग्रहणाभावतः । विभक्त्यर्थस्य सान्निध्यात् व्याख्यातुमिह युज्यते" इति ।

अपादानादिः पञ्चम्यर्थो वाक्यानन्वितः, अध्याहारसापेक्षश्च । प्राधान्येन कर्तृत्वानुपपत्तिः 'तद्विजिज्ञासस्व' इत्यादिकमनुसरता ब्रह्मण इत्यनेनैव सूचिता । न हि मुख्यं ब्रह्म स्वमन्यद्वा जिज्ञासेत, स्वतस्सर्वदर्शित्वात् । उक्तं च न्यायतत्त्वे—"यो वेत्ति युगपत् सर्वं प्रत्यक्षेण सदा स्वतः" । इति । किञ्चिज्ज्ञस्तु कर्ता[ब्रह्मशब्देन!] न वक्तव्यः; अधीतवेदस्य तदर्थं निर्णिनीषोरादितःप्रभृत्यनुवृत्तेः । कर्मत्वोक्तौ ईप्सिततमतया प्राधान्येन विषयत्वं प्रयोजनत्वं च सिध्येत् । अतः सदपि स्वस्वामिभावादि अत्र न वक्तव्यमिति भावः ।

तथाऽप्यस्तु सामान्यतः प्राप्ता शेषिकी षष्ठी; विशेषस्त्वौचित्यलब्धेरवाच्य इत्यत्राह—कर्तृकर्मणोरिति । सम्बन्धविशेषेऽपि षष्ठीविधौ सिद्धे, साकाङ्क्षसूत्रोक्तात् निराकाङ्क्षसूत्रोक्तं युक्तम् । तत्र विशेषयोर्विधिसाम्येऽपि कर्तुः सकर्मकाकर्मकसाधारण्यात्, इह च कर्त्रर्थत्वायोगात् असाधारणाकाङ्क्षिततमकर्मोपस्थापनमुचितमिति भावः ।

ननु किम् अर्थलभ्ये शब्दव्यापारेण? न चैवं प्रतिपदानुशासनवैयर्थ्यम्; तस्य कर्मादिविवक्षायामपि द्वितीयानिषेधेन षष्ठीसाधुत्वे तात्पर्यात् । अतो विशेषविधिर्न शैषिकषष्ठीमपवदेत् । तद्ग्रहे च व्यवहितसम्बन्धस्यापि तदन्तःस्थितेर्ब्रह्मानुबन्धिनामुपायादीनामपि जिज्ञासासम्बन्धात् तत्कर्मत्वस्य चार्थसिद्धेः कृत्स्नशारीरकार्थविचार्यत्वसूचनमधिकं प्रयोजनमित्यत्राह-यद्यपि इति । परिग्रहः-परितो ग्रहः; सानुबन्धग्रहणम् । उत्तरग्रन्थे तु गृह्यते इत्युक्त्या अनुबन्धिसम्बन्धस्याशाब्दत्वमात्रमभिप्रेतम् । कर्मापेक्षत्वेन-सकर्मकतया प्रथमं कर्माकाङ्क्षाजननस्वाभाव्यात् । कर्मार्थत्वविधिर्नाम कर्तृत्वव्युदासेन षष्ठ्याः कर्माख्यविशेषेऽर्थतः पर्यवसानम् । परप्रत्यायनार्थे प्रयोगे विलम्बितधीहेतुर्न ग्राह्य इत्यभिप्रायेणाऽऽह—तथापि इति । न ह्यत्र अर्थलभ्ये शक्तिकल्पनम्, किंतु आक्षेप्यादुरवक्लृप्तशक्तिकशब्दोक्तमित्युच्यते । ननु 'आक्षेपतः'-इत्युक्तमयुक्तम्; आकृत्यधिकरणनीत्या सामान्यशक्तेः विशेषपर्यन्तत्वस्य वक्ष्यमाणत्वात् । [2]मैवम्—सा हि विशेषमात्रमुपादत्ते, न कर्मत्वादिकम्; न हि गोशब्दशक्तिर्विशेषतः खण्डत्वादि गृह्णाति(ग्राहिणी) । न चात्र आभिधानिकग्रहेऽपि अनुबन्धित्याग इति भ्रमितव्यम्; सामान्यतो धीस्थानुबन्धविषयत्वात् सर्वत्र जिज्ञासायाः ॥ एवमपि आक्षेपः स्वीकृत इति चेत्, सत्यम्—अन्यतरकर्मत्वस्यापि शाब्दत्वमुभयकर्मत्वाक्षेपाद् वरम्, किमुत प्रधानांशकर्मत्वस्याक्षेपात्[3]; एवकारः शीघ्रधीहेतोः बलीयस्त्वं व्यनक्ति । कथं ब्रह्मणः कर्मत्वं शाब्दम्, 'धातोः कर्मणः समानकर्तृकादिच्छायां वा' इति ज्ञानस्यैव [4]कर्मत्वात्; मैवम्—सन्नन्तत्वेऽपि प्रकृत्यनुसारेण सकर्मकत्वाकर्मकत्वविभागः। अत एव हि

1 कर्मार्थकषष्ठीत्वं विधेयम् । तेनोभयांशव्युदासः। 2 आकृत्यधिकरणे सामान्यशक्तेः =आकृतौ शक्तेः विशेषे =व्यक्तौ पर्यवसानमुक्तम् । इदं त्वन्यादृशमित्याशयेनाह—मैवमिति । 3 प्रधानांशकर्मत्वस्य शाब्दत्वमाक्षेपापेक्षया वरमिति किमुतेत्यर्थः। 4 कर्मत्वात् । सन्नन्तार्थेच्छां प्रतीति शेषः।

प्रकृत्यर्थकर्मापेक्षया, 'कर्तृकर्मणोः' इत्यनुशिष्टिः; "धर्मो जिज्ञासितव्य." इत्यादौ च धर्मादेरभिहितकर्मत्वम्।

(कर्मत्वस्य आभिधानिकत्वम्)

ननु तथापि नाऽऽभिधानिकत्वम्; उपपदविभक्तेरर्थाभावात्; प्रयोगमात्रात् तस्याः सार्थत्वे गाव्यादावपि प्रसक्तेः। न च तत्र शक्तिरस्ति।

**न शब्दशक्तिर्गाव्यादौ गोपदं स्मार्यते ततः। बुद्धिस्थेनैव [1]तेनाथ गोजातिः प्रतिबुध्यते ॥202**

आप्तप्रयोगस्तु अनर्थकत्वेऽपि साधुत्वात् स्यात्; [2]अन्यत्रापि तथा दृष्टेः, सम्मतेश्च। अनु शिष्टिश्च तावद्विशेषव्यवस्त्यर्था; तत्तदर्थधिरस्त्वन्यथा सिद्धेः, अन्यलभ्ये शक्तेरकल्प्यत्वात्, गत्यन्तराच्च बहुशक्तिकल्पनायोगात्। न[च] शक्ति[3]रौपयिकी।

तत्र[4]। यथा, 'कर्तृकरणयोः' इत्यादिवशात् कारकविभक्तिः सार्था अनेकार्था च, तथा, 'कर्तृकर्मणोः कृति' इत्यादिबलात् उपपदविभक्तिरपि; अन्यथाऽतिप्रसङ्गात्; कारकविभक्तेरुपपदविभक्तिदौर्बल्यं तु पदान्तरविमर्शसापेक्षतामात्रात्। तथापि न शक्तिभङ्गः। पदान्तरसंनिधिरत्र शक्तिं व्यनक्ति; न स्थापयते; यथा नानार्थगवादिशब्देषु। यद्वा अत्र अनाभिधानिकत्वेऽपि विशेषानुशासनानुमतवृत्तिविशेषवत् विभक्तिसिद्धस्य शाब्दत्वं व्यञ्जयितुम् आभिधानिकत्वोक्तिः। कर्मत्वस्य सूत्राभिधानसिद्धत्वमाभिधानिकशब्देन(शब्दद्वयेन) प्रतीयते; उपपदस्वरूपविमर्शस्य पदबोध्यविमर्शात् अविलम्बितत्वाच्च।

ननु न विग्रहवदिह समस्ते विभक्तिरस्ति; येनाभिदध्यात् लक्षयेद्वा। न च—अप्रयुक्ताऽपि स्मृता अभिधत्ताम्, प्रयोगस्यापि तद्धीमात्रार्थत्वादिति—वाच्यम्; समासतोऽर्थबुद्धौ विभक्तिस्मरणनियमे मानाभावात्, सर्वत्र च लक्षणाद्युच्छेदप्रसङ्गात्। [5]षष्ठ्या चाभिधानमिति तद्भिदा। तदेवमभिधायकाभावे कर्मत्वस्य कथमाभिधानिकत्वं तत्समत्वं वा॥

**[6]मैवं; सम्बन्धसामान्ये कर्मत्वे वा समीहिते। विभक्तिलोपात् सोढव्या प्रकृत्यैव हि [7]लक्षणा॥**

अथानुशासनाधीननिरूढलक्षणाया अभिधानसमत्वात् शाब्दत्वमिति मतम्, कर्मार्थत्वेऽपि समम्। [8]एवं तु केचित्—व्यासे समासे च सविभक्तिकाविभक्तिकशब्दयोः दधि-दध्युशब्दन्यायेन सैव शक्तिः। अतो लुप्तविभक्तिकयापि प्रकृत्या सम्बन्धो न लक्ष्यः; वाच्यसम्बन्धिनि वस्त्वन्तरे

---

1 तेनैव = गोशब्देनैव। 2 अन्यत्रापि = एकं द्वे त्रीणि इत्यादिवचनेषु। 3 औपयिकी = प्रकृतार्थसाधनोपायभूता। 4 नन्वित्याक्षेपं परिहरति तत्रेति। 5 अनया तु षष्ठ्या अर्थाभिधानम्, अन्यत्रार्थो लक्ष्य इति भेद इत्यर्थः। 6 ननु नेत्याक्षेपं परिहरति मैवमिति। 7 लक्षणेति। तथा च संबन्धसामान्यरूपभवदभिमतार्थेऽप्याभिधानिकत्वं नास्तीति सिद्धान्त्युक्तः। निरूढलक्षणाया इति। संबन्धसामान्ये इति शेषः। 8 शिष्यमाणं लुप्यमानार्थाभिधायि; न तु तत्र लक्षणेति वदतां पक्षमाह—एवंत्विति।

**न च "प्रतिपदविधाना *च षष्ठी न समस्यते" इति कर्मणि षष्ठ्याः समासनिषेधः शङ्कनीयः, "कृद्योगा च षष्ठी समस्यते" इति प्रतिप्रसवसद्भावात् ।**

---

वृत्तिर्हि लक्षणा ; [1]न च सम्बन्धः सम्बन्धी । कर्मत्वादिश्च सम्बन्धरूपः । एवं स्वपरनिर्वाहकतया सम्बन्धफलसिद्धावपि तथा विवेकरहितानामप्यत्र प्रकृत्या विभक्त्यर्थधीर्दृष्टा । सन्नपि चाजानतः सम्बन्धो न लक्षणाहेतुः, अतिप्रसङ्गात् । अतः प्रयोगस्यानन्यथासिद्धेरन्यथासिद्धिशङ्कायाश्चानुशासनेनोपरोधात् विभक्त्यर्थः समासेऽप्यभिधेयः । एवं विभक्तिव्यतिरिक्तलोपेष्वपि नीतिः ।

ननु निषादस्थपतिशब्दे विभक्त्यर्थलक्षणदोषानुत्त्ये षष्ठीसमासस्त्यज्यते ; तत् कथमाभिधानिकत्वम् । [2]तन्मुख्यत्वे तु बलवत्स्यार्थविरोधे बलवत्स्यैव प्रबलत्वात् नान्यत्राधिकारः स्यादिति ॥ मैवम्— "सामानाधिकरण्यस्य प्राग्वैयधिकरण्यतः । अविलम्बितधीयोगात् [3]भावस्यं प्रतिपादितम्" इति न्यायेन शीघ्रयात् शाब्द[त्व?]व्यवहारः [4]अथानुशासनस्वारस्यादर्थः ; तर्हि यथानिर्णये तु नादरः, अर्थाविरोधात् इति । उपपदविभक्तावुक्तमिदं समासेऽपि भाव्यम् ॥

**[5]सोऽयं वैभववादो वा परमार्थोक्तिरेव वा । आभिधानिकतोक्तिस्तु युक्ता धीशैघ्र्यबोधनात् ॥**

**(कर्मणि षष्ठ्यां समासनिषेधशङ्काया निरासः)**

एवं कर्मणि षष्ठ्यामनौचित्यं निरस्तम् । तत्र समासनिषेधशङ्कामपि निरस्यति--**न च** इति । कर्मणि षष्ठ्या इत्यनेन साधारणः **प्रतिपदविधान**शब्दः सङ्कोचार्ह इति सूच्यते । "ज्ञोऽविदर्थस्य करणे" इत्यनुशिष्टायामेव [7]समासापवादः । अविदनार्थस्य जानातेः कृद्योगः [8]क्वचित् सन्नपि तत्र करणषष्ठ्या नापेक्ष्यः ; "सर्पिषो जानीते" इत्युदाहरणात् । निषेधस्य सङ्कोचमाह-**कृद्योगा** इति । **प्रतिप्रसवः** = अपवादनिरासः, तस्य सद्भावात् । न केवलं प्रयोगदृष्ट्येति भावः। एवमैकपद्यहेतुः समासः प्रथमं [9]व्याख्यातः ।

---

* चकाररहितपाठो महाभाष्यारूढत्वादादर्तव्य इति पूर्वमुद्रण टि० ।

1 न चेति । संबन्धस्य प्रकृत्यर्थेन साकं संबन्धस्य कस्यचित् सत्त्वे हि संबन्धः संबन्धी स्यादित्यर्थः । ननु संबन्धस्य स्वपरनिर्वाहकतया संबन्धिबदप्रतीतिः इत्याशङ्कायामाह एवमिति । तथाविवेकेति । स्वपरनिर्वाहकत्वविवेकेत्यर्थः । ननु विवेकाभावेऽपि स्वपरनिर्वाहकत्वं वस्तुगत्याऽस्ति किलेति शंकायामाह सन्नपीति । अनन्यथासिद्धेः = लक्षणादिना निर्वाहाभावात् । 2 तन्मुख्यत्वे— लुप्तषष्ठीस्थलेऽप्यर्थस्य मुख्यत्वे । अन्यत्र = त्रैवर्णिकभिन्ने निषादे । 3 अविलम्बितेति । निषादत्वस्थपतित्वोभयविशिष्टैकाधर्मिप्रतीतिः झटिति । भेदे तु कः संबन्ध इति तद्विशेषजिज्ञासया विलम्ब इति भावः । 4 अथेति । सर्वत्र समासे अनुशासनबलात् शक्तौ, षष्ठीस्थले लक्षणेति निर्णये आदरो नास्ति । निषादस्यैवाधिकार इत्यर्थो हि न विरुध्यते इत्यर्थः । 5 शाब्दसमत्वादौ आभिधानिकत्वोक्तिर्वैभववादः । केचिदिति पक्षे च परमार्थोक्तिः । 6 समासापवादः = समासनिषेधः । 8 क्वचित् = सर्पिषो ज्ञानमित्यादिकृदन्तप्रयोगे । 9 ब्रह्मशब्दार्थशोधनात् पूर्वं समासविचारः तस्यार्थान्तरपक्षेऽपि षष्ठीसमासे विवादो नास्तीत्याशयेनेति भावः ।

**ब्रह्मशब्देन च स्वभावतो निरस्तनिखिलदोषोऽनवधिकातिशयासङ्ख्येयकल्याणगुणगणः पुरुषोत्तमोऽभिधीयते ।**

(परमतनिरसनपूर्वकं ब्रह्मशब्दमुख्यार्थकथनम् )

तत्राद्यप्रकृत्यंशस्य यौगिकार्थनिमित्तत्वश्रुतेः अन्यत्रापि यथादृष्टि मुख्यत्वशङ्कां, निर्विशेषचिन्मात्रभोक्तृ-भोग्यनियन्तृसमष्टितदंशिसन्मात्रादिपरेष्टार्थे, स्वेष्टे चोपचारवृत्तिं क्षिपन् [1]सर्वतः परिबृढत्वाय बृहत्त्वबृंहणत्वे चानवच्छिन्ने विवृणोति—**ब्रह्मशब्देन च** इति । चस्त्वर्थः शङ्कानिरासे । 'स्वभावत' इत्यादिना परकल्पितैः सदोषत्वनिर्गुणत्वावाच्यत्वावेद्यत्वैरजिज्ञास्यत्वप्रसङ्गोऽपास्तः । निरस्तनिखिलदोषत्वं च बृंहणत्वो-पयुक्तो बृहत्त्वविशेषः । गुणादिविधिनिषेधयोरुत्सर्गापवादादिनीतिविषयत्वं विशेषणद्वयेन व्यञ्जितम् ।

**विशेषविधिबाधेन तदन्यार्थत्वकल्पनात्। सामान्यवृत्तिसङ्कोचं वरंनीतिविदो विदुः ॥ २०५ ॥**

परपक्षे तु मिथ्यात्वसत्यत्वविवादेऽपि निरस्यत्वेनाभिमतानां दोषाणामारोपतः उपाध्यवच्छेदतः स्वाभाविकांशतो वा परब्रह्माश्रितत्वात्(श्रयत्वात् ) तत एव सार्वज्ञ्यादिभङ्गाच्च जिज्ञास्यत्वायोगः श्रुत्यादि-कोपश्च स्यादिति भावः । स्वरूपतो नामान्तरभजनार्हावस्थावन्तोऽचित्पदार्थाः ; तदभावेऽपि क्लेशादिमन्तो बद्धाः ; कतिपयक्लेशादिरहिता मुमुक्षवः ; तदत्यन्तोच्छेदवन्तो मुक्ताः ; तदत्यन्ताभाववत्त्वेऽपि पराधीन-तथात्वाः नित्याश्च बुद्ध्यवतारक्रमात्[2] **अस्तदोष** इत्यादिमुखेन प्रथमे विशेषणे व्यवच्छेद्याः। तत्र **स्वभावत** इति पदेनानादित्वविवक्षायां मुक्ताः, अनन्याधीनत्वविवक्षायां नित्याश्च व्यावर्त्यन्ते ।

द्वितीयेऽपि [3]ते सर्वे। अन्यासम्भाव्यगुणविधेः नित्या एव वा । तेषां ज्ञानादेर्ब्रह्मसाम्येऽपि हि पराधीनत्वं सिद्धम्। शक्तिस्तु ततो न्यूना । वक्ष्यति च **सत्यादिवाक्ये अनन्त**पदव्याख्याने—**सातिशयस्वरूपस्वगुणा नित्या व्यावृत्ताः** इति। न हि ते विश्वव्यापिनः ; नापि सर्वशरीरिणः; **अतिशयशब्देन** धातूक्ता वृद्धिः **अतिशायन**मिति व्यञ्जितम् । **अनवधिक**विशेषणेन शतगुणितोत्तरक्रम-प्रदर्शितनिरतिशयदशाशिरस्कत्वोक्तिः। 'ईश्वरस्य ज्ञानानन्दादिगुणयोगः कादाचित्कः; तच्छक्तिस्तु नित्या' इति पक्षः **स्वभावत** इति पदानुषङ्गात् प्रतिक्षिप्तः । ज्ञानाद्येकैकगुणविततिरूपावान्तरगुणवर्गख्यापनाय **गणशब्दः** । उक्तं च **षाड्गुण्यविवेके**—"तत्रानन्तगुणस्यापि षडेव प्रथमे गुणाः । [4]यैस्त्वयेव जगत्

---

1 सर्वतः परिबृढत्वं स्वरूपतो गुणतश्चातिशयः । बृहत्त्वबृंहणत्वे इत्यनेन पूर्वं, समुच्चयो वेत्युक्तस्वाभिमतपक्षप्रदर्शनम्। तत्र ग्रन्थे, 'अत्र ब्रूमः' इत्यारभ्य, 'अचक्ष्महे इति' इति वाक्यसमाप्तिः। तत्र ब्रूम इति पदसत्त्वे आचक्ष्महे इति न स्यात्। एतत्पदस्वीकारे ब्रूम इति पदं इतिपदञ्च न स्यात्। उपरि, 'तदयं संग्रहः' इत्यारभ्य कारिकालेखने स्वपक्षस्य कारिकया संग्रहो न दृश्यते । दृश्यमान-वाक्यं च अथवा...वा इति पुनरुक्तपदघटितमिति तत्रापि वाक्याशुद्धिः। एवमपि श्रुतप्रकाशि-कासामरस्येन तत्रैव वक्तव्यमुक्तमिति तदेवात्र विवक्षितम् । 2 अत्र अस्तदोष, निरस्तदोष, निरस्त-निखिलदोष इति पाठत्रयम् । क्रमस्यात्र विवक्षितत्वात् आदिपदेनान्यग्रहणम् । अस्तदोषत्वं निरस्त-दोषत्वं निरस्तनिखिलदोषत्वं च नालमिति स्वभावतो निरस्तनिखिलदोष इत्युक्तमित्यर्थः । 3. ते सर्वे =अचिद्बद्धमुमुक्षुमुक्तनित्याः । 4. यस्त्वयेव जगदिति इवकारघटित एव पाठः । त्वया जगदित्यस्योपमानत्वात् ।

**सर्वत्र बृहत्त्वगुणयोगेन हि ब्रह्मशब्दः। बृहत्त्वं च स्वरूपेण गुणैश्च यत्रानवधिकातिशयम् सोऽस्य मुख्योऽर्थः । स च सर्वेश्वर एव । अतो ब्रह्मशब्दस्तत्रैव मुख्यवृत्तः ; तस्मादन्यत्र तद्गुणलेशयोगादौपचारिकः; अनेकार्थकल्पनायोगात् । भगवच्छब्दवत् ।**

---

कुक्षावन्येऽप्यन्तर्निवेशिताः" इति ।

**अनवधिकातिशयशब्दोऽत्र** गणं विशिषन् प्रत्येकमतिशयपरश्रुत्या, 'विदुषी परिषत्' इति न्यायाच्चार्थतो गुणान् विशिनष्टि । [1]अन्यथा अन्यपदार्थासिद्धिः ; सत्यां गतौ व्यधिकरणबहुव्रीह्ययोगः । 'शैलजन्मा' इत्यादिषु अगत्या तत्स्वीकारः ।

(ब्रह्मशब्दस्य पुरुषोत्तमे मुख्यवृत्तत्वम्)

एतत्सूत्रसंवादिन्या, "परीक्ष्य" इत्यादिश्रुत्या ब्रह्मपुरुषशब्दोक्तजिज्ञास्यनिष्कर्षं, सर्वोपनिषदां पुंस्क्तैकार्थ्यम्, ईश्वरस्याध्यस्तत्वब्रह्मांशत्वासम्भवम्, ईदृशस्य गीतानिरुक्त्या प्रकृत्यादेर्देवतान्तरेभ्योऽपि विशेषव्यक्तिं चाभिप्रेत्याह—**पुरुषोत्तम इति** । अवधारणमिह ग्राह्यम् । [2]यद्यप्यत्र समानाधिकरणसमासे पौर्वापर्यव्यत्ययः ; निर्धारणे तु षष्ठ्या न समासः-तथापि, "द्वाविमौ पुरुषौ" इत्यारभ्य, "उत्तमः पुरुषस्त्वन्यः" इत्यवमप्रतियोगित्वोक्त्या सम्बन्धिशब्दतया समासः स्यात् । "अक्षरादपि चोत्तमः" इत्यनेन पञ्चमीसमासो वा सूच्यते । योगविभागस्तु यथाप्रयोगमिष्टः । अत एव सप्तमी निर्धारणेऽपि समस्यते । न गोत्तमादिशब्दाश्चैवं शब्दैः निरूढाः (निर्यूढाः) । "रूढ्या तु कामं पुरुषोत्तमोऽस्तु" इति वदन् श्रुत्यादिबाध्यः[3]; "अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः" इति सर्वविदुक्तेः । **अभिधीयते**=मुख्यवृत्त्या विषयीक्रियते । एतेन तदेकनाम्नो ब्रह्मशब्दस्य तत्रैव लक्षणामिच्छन्तो निरस्ताः। रूढि(ढ)विषये क्वचिल्लक्षणां वदन्तश्च निरस्ताः ।

ननु गवादिशब्दवत् जातिद्वारा, पाचकादिशब्दवत् क्रियाद्वारा, डित्थादिवत् यदृच्छया[4] वाऽन्यत्रापि मुख्यता स्यादित्यत्राह—**सर्वत्रेति** । प्रकृत्यादिष्वत्र(दिषु?) ब्रह्मशब्दस्थलेष्वित्यर्थः । तेषु मिथो विषमेषु तदन्यव्यावृत्ता जातिः क्रिया वा न दृष्टा । बृंहणत्वं तु बृहत्त्वापेक्षम् । अतस्तन्निमित्त्वे गौरवम् । बृहत्त्वं च किञ्चित् तत्र तत्र प्रहृतम् ; विवक्षितं च । ब्रह्मशब्दवृत्तिद्वारा तन्निरुपाधिकबृद्धिरूपधात्वर्थप्रसिद्धिश्च नोपेक्ष्या । अतः सम्भवद्वृत्त्यन्तरे न यदृच्छाऽपीति भावः। **हिः** प्रसिद्धौ; हेतौ वा। तर्हि **बृहच्छब्दवत्** असौ बृहत्त्वमात्रनिमित्तः स्यात् । नेत्याह—**बृहत्त्वम् इति** । सर्वतःप्रसृतत्वमसङ्कोचात् स्वरूपतो गुणतश्चेत्युच्यते । तेन परिच्छिन्नस्वरूपाणां गुणबृहत्त्वरहितस्य[5] गुणादेश्च व्यवच्छेदः । **अस्येत्यनेन** बृहच्छब्दात् व्यावृत्तिर्दर्शिता । न ह्यसौ, 'इत इदं ब्रह्म' इत्यवधिनिर्देशं तरप्प्रत्ययं च सहते। "सर्वे

---

1 अन्यथा = गुणशब्दे तत्पदान्वये । 2 यद्यपीति । गी 15 18. तात्पर्यचन्द्रिकायां विस्तरः । 3 बाध्य इति। तात्पर्यचन्द्रिकायाम् "इति प्रलपन् वेदबाह्यः प्रत्युक्तः" इत्युक्तम्। शैवो हरदत्तोऽयम्। 4 यदृच्छयेति । डित्थादिस्थले डित्थादिशब्द एव प्रवृत्तिनिमित्तम् । 5 स्वरूपतो बृहत्त्वं गुणेऽपि स्वीकृतम् । यथा धर्मभूतज्ञाने । गुणे गुणान्तराभावात् गुणकृतबृहत्त्वं न भवति ।

खल्विदं ब्रह्म", "सर्वं प्रोक्तं त्रिविधं ब्रह्ममेतत्", "त्रयं यदा विन्दते ब्रह्ममेतद्" इत्यादिष्वन्येषां तच्छरीरतया देवोऽहमित्यादिवत् सामानाधिकरण्यम्; न तु तद्वस्तुषु ब्रह्मशब्दप्रयोगः। त्रैविध्योक्तिश्च[1] प्रेरितृत्ववैशिष्ट्यं भोक्तृभोग्यवैशिष्ट्यं चापेक्ष्य। नारायण परं ब्रह्मेत्यत्र परमिति विशेषणं त्वौपचारिक-[2]व्यावृत्त्यर्थम्। अतो बृहत्त्वमात्रं नास्य निमित्तमिति भावः। प्रयोगनियत्या तत्र तत्र काष्ठाप्राप्तबृहत्त्वं स्यादित्यत्राह—स च इति। अपरिच्छिन्नबृहत्त्वाश्रय इति यावत्। सर्वेश्वर इति समाधिकदरिद्रत्वादि-श्रुतिव्यञ्जनी समाख्या; "अजस्सर्वेश्वरः" इति तन्नामपाठात्। एकस्यैव सर्वनियमनादिरूपं निरतिशय-बृहत्त्वं शास्त्रोक्तम्; तदन्येषां तु तादधीन्यात् तत्त्वं तादृक्त्वमपि नास्तीति अवधारणाभिप्रायः।

(प्रकृत्यादौ ब्रह्मशब्दप्रयोगनिर्वाहः)

अन्यत्र निमित्तासम्भवात् नैमित्तिकासम्भवस्य फलितत्वमाह-अत इति। कथं तद्वाचकत्वाभावे, सम्बन्धगुणयोगयोश्च सति सम्भवे क्वचित् प्रकृत्यादिषु नियतप्रयोग इत्यत्राह-तस्मात् इति। अयं भावः— न ह्यत्र सम्बन्धमात्राल्लक्षणा; न च किञ्चित्साम्यद्गौणी वृत्तिः; किंतु तद्गुणो निरतिशयबृहत्त्वम्; तल्लेशोऽपि लोकोत्तरबृहत्त्वम्। तन्निबन्धनोपचारनियमात् नातिप्रसङ्गः। प्रयुञ्जते च यथेष्टं स्तुतिनिन्दाभि-प्रायेण [3]मुख्यासक्ते तद्गुणप्रकर्षयोगिनि च तच्छब्दं नामतयेति।

ननु मुख्ये लभ्ये नोपचारः। न च अवयवशक्तित्वात्(क्विमत्त्वात्?) ब्रह्मशब्दस्यैकत्राप्यन्या शक्तिर्न कल्प्या, किमुतानेकत्रेति वाच्यम्; तादृशस्यापि प्रयोगनियत्यै रूढेः कल्प्यत्वात् पङ्कजादिषु पद्मत्वादिवच्चैकं नियामकं न दृष्टम्; अतो यावत्प्रयोगं शक्तिर्मेयेत्यत्राह —अनेके'ति। क्लृप्तशक्तेः शब्दस्य प्रयोगविमर्शे हि प्रथमं मुख्यानुसारः। शक्तिपरीक्षायां तु एकविषये शक्त्या प्रयोगान्तरान्यथासिद्धौ न शक्त्यन्तरं कल्प्यम्; गौरवात्। अन्यथोपचार एव लुप्येत। अस्ति चामा-विति गौणमुख्याधिकरणे स्थापितम्। क्वचित्तु अगत्या अनेकशक्तिक्लृप्तिरित्याशयः।

**नैघण्टुकैस्त्वनादृत्य शब्दनिष्कर्षणं गिराम्। प्रयोगप्रौढिशिक्षार्थं पठ्यतेऽनेकनामता ॥२०६**

यदत्र नियामकतयोक्तं लोकोत्तरबृहत्त्वम्, तेनैवैकेन निमित्तेनान्येष्वपि मुख्यत्वं स्यात; अन्यथा विपरिवृत्तिः किं न स्यादित्यत्र दत्तोत्तरत्वमभिप्रयन्, "प्रत्यक्षेऽपि विसंवादो येषां कः स्वयमुत्तरम्। तेभ्यो दद्यादिति ज्ञात्वा वृद्धानां मतमब्रवीत्" इति न्यायात् पुराणोक्ति(क्ती) निदर्शयति-भगवच्छब्दवत् इति। तत्र "शुद्धे महाविभूत्याख्ये" इत्यादिना, "अन्यत्र ह्युपचारतः" इत्यन्तेन भगवच्छब्दस्य यौगि-कार्थपौष्कल्यवत्येव मुख्यत्वमुक्तम्। पुराणान्तरेऽपि—"भगवानिति शब्दोऽयं तथा पुरुष इत्यपि।

---

1. त्रिविधं ब्रह्मेत्यस्य त्रीणि ब्रह्माणीति नार्थः। किं तर्हि? ब्रह्मगताः विधास्तस्त्राः ताश्च विधाः भोक्ता भोग्यं प्रेरितारं चेत्युक्ताः। 2 औपचारिकेति। यथा, 'नव ब्रह्माण इत्येते पुराणे निश्चयं गताः' इति औपचारिकब्रह्मणां व्यावृत्त्यर्थम्, 'आद्यब्रह्मा' इति प्रयोगः, तथेति भावः। 3 मुख्या-सक्तेति शक्यसंबन्धरूपलक्षणास्थलम्। गुणयोगिनीति गौणीस्थलम्। भाष्ये तद्गुणलेशयोगादि-त्यस्य तद्योगात् गुणलेशयोगाच्चेत्यर्थोऽपि संभवेदिव।

**तापत्रयातुरैरमृतत्वाय स एव जिज्ञास्यः। अतः सर्वेश्वर एव जिज्ञासाकर्मभूतं ब्रह्म।**

**ज्ञातुमिच्छा जिज्ञासा। इच्छाया इष्यमाणप्रधानत्वादिष्यमाणं ज्ञानमिह विधीयते।**

---

निरुपाधी च वर्तेते वासुदेवे सनातने" इति। दार्ष्टान्तिकमपि[1] **गारुडे** स्थापितम्—"वेदे भूरिप्रयोगाश्च गुणयोगाश्च शार्ङ्गिणि। तस्मिन्नेव ब्रह्मशब्दो मुख्यवृत्तो महामुने" इत्यारभ्य, "यस्मिन् प्रयुज्यमाने तु गुणयोगः सुपुष्कलः। तत्रैव मुख्यवृत्तोऽयमन्यत्र ह्युपचारतः" इति।

अस्त्वेकत्रैवास्य शक्तिः; अस्मिन् सूत्रे [2]भेदकाभावादमुख्यत्वं किं न स्यादित्यत्र, "नास्ति भेषजमन्यत्र नारायणरसायनात्", "वासुदेवं परित्यज्य योऽन्यं देवमुपासते। तृषितो जाह्नवीतीरे कूपं खनति दुर्मतिः" इत्यादिप्रमाणगत्या प्रत्याह-**तापे**ति। न ह्यत्र मुख्यस्य बाधः; भगवतः स्वतन्त्रस्वामित्वात्। [3]अस्वतन्त्रस्यान्यस्य चायम् अर्थसिद्धा(र्थः सिद्धः); "जुष्टं यदा पश्यत्यन्यमीशम्" इत्यादिभिः सोपबृंहणैः परोपास्तेरेव तापत्रयनिवर्तकत्वोक्तेः। स एव, "मन्तव्योऽन्वेष्टव्यः" इति विचार्यत्वेनापि श्रुत इति भावः। **"अनेकार्थत्वेऽपि** ब्रह्मशब्दस्य, अस्मिन् प्रयोगे असावेवार्थ इत्याह" इति **विवरणं** तु अन्वारोहेऽपि विशेषदार्ढ्यपरम्; जातिगुणादिनिमित्तत्व-बहुरूढत्वपक्षेष्वपि हि समभिव्याहृतपदान्तरादेरर्थविशेषः सिध्येत्। यद्वा मुख्यामुख्ययोस्तन्त्रेणा**नेकार्थ**त्वानुक्तिः। **अमृत**शब्देन **एव**कारेण च, "तमेवं विद्वान् अमृतः" इति, "तमेव विदित्वा" इति च वाक्यद्वयसूचनात् द्वयोरविरोधः ख्यापितः। ननु प्रत्यगात्मन्यपि, "सोऽन्वेष्टव्यः" इत्यादिदर्शनात्, "नात्मा श्रुतेः" इत्यादौ तस्यापि निरूपयिष्यमाणत्वाच्च स एवेत्यवधारणमिहाशक्यम्; तदिदं निगमनमुखेन व्युदस्यति **अत** इति। शब्दशक्त्या प्रस्तु(प्रकृ)तार्थलाभाच्चेत्यर्थः। तदुभयं **सर्वेश्वर** इत्यादिपदद्वयाभिप्रेतम्। **जिज्ञासाकर्मभूतं** जिज्ञासया प्राप्तुमिष्टतममित्यर्थः। प्रधानतया ह्यत्र जिज्ञास्यः परः। तद्भक्त्यारोहाय, अहंग्रहोपास्तौ विशेषणतया बोद्धुं च स्वात्माऽपि चिन्त्यः। प्रजापतिवाक्यादिषु च प्रत्यगात्मज्ञानं प्रकृतपरविद्यार्थतयैवोच्यत इति वक्ष्यते।

**(जिज्ञासापदस्थस्य सनः अमुख्यत्वम्)**

[ननु] सन् इहानिच्छार्थः इच्छार्थो वा? नाऽऽद्यः; "गुप्तिजकिद्भ्यस्सन्" इत्यादौ अपाठात्[4]। न द्वितीयः; विचारे विवक्षिते तदिच्छाभिधानविरोधात् [5]सूत्रलक्षणविरोधात् उपचारायोगाच्चेत्यत्र आद्यमनभ्युपगत्य, अन्त्यं समर्थयितुं विगृह्णाति **ज्ञातुमि**ति। ननु प्रत्ययार्थप्रधाने जिज्ञासापदे ज्ञानस्य निमग्नत्वात् न विधेयत्वम्; इच्छा तु न पुरुषतन्त्रा; न च सा स्वज्ञानजन्या; विषयानुकूल्यधीनिघ्नतया तदभावे तदनुपपत्तेः; अप्रतीयमानत्वाच्चेत्यत्राह—**इच्छाया** इति। स्वविषयसिद्ध्यर्थतया इच्छारूपक्रियायाः प्रोक्षणादेरिव

---

1. **दार्ष्टान्तिकम्=ब्रह्मशब्दः। 2 भेदकाभावात्=परब्रह्मजिज्ञासेत्येवं परत्वादिविशेषणाभावात्। 3 अयमित्यनेन पूर्वं पुंलिङ्गोक्तस्य ग्राह्यत्वात् बाध एव गृह्यते। जीवस्यास्वतन्त्रत्वात् जिज्ञास्यत्वबाधोऽर्थसिद्ध इत्यर्थः। 'अयमर्थः सिद्धः' इति पाठेऽप्ययमेवार्थः। यद्वा 'नायमर्थः सिद्धः' इति पाठः स्यात्। तदा अर्थः=जिज्ञास्यत्वम्। स नेत्यर्थः। भाष्यगत-एवकारार्थवर्णनमित्थम्। 4 अपाठादिति। ज्ञाधातोरिति शेषः। 5 सूत्रलक्षणेति। लक्षणम् अल्पाक्षरत्वादि। व्यर्थप्रयोगायोगादिति भावः।**

**मीमांसापूर्वभागज्ञातस्य कर्मणः अल्पास्थिरफलत्वात्, उपरितनभागावसेयस्य ब्रह्मज्ञानस्यानन्ताक्षयफलत्वाच्च पूर्ववृत्तात् कर्मज्ञानादनन्तरं तत एव हेतोर्ब्रह्म ज्ञातव्यमित्युक्तं भवति।**

**तदाह वृत्तिकारः—"वृत्तात् कर्माधिगमादनन्तरं ब्रह्म विविदिषा" इति। वक्ष्यति च कर्मब्रह्ममीमांसयोरैकशास्त्र्यम्, "संहितमेतच्छारीरकं जैमिनीयेन षोडशलक्षणेनेति शास्त्रैकत्वसिद्धिः" इति।**

---

स्वकर्मप्रधानत्वं सिद्धम्। "धातोः कर्मणः" इत्यत्र च धात्वर्थस्य प्राधान्यमार्थं ग्राह्यम्। अप्राप्तमेव विधेयम्। अत इच्छावाचिना तत्सम्बन्धिविवक्षाऽत्र न युक्तेति भावः। तर्हि ज्ञानमात्रं वाच्यम्; किमजागलस्तनकल्पेन प्रत्ययेनेत्यत्र, 'अधिकमधिकमर्थं सूचयति' इति नीत्या त्युक्तिः **इष्यमाणम्** इति। सन्दिग्धसप्रयोजनविषयतया रागप्राप्तं विचाररूपं ज्ञानं नोपासनादिवत् वैधमिति सूचनात् सार्थकः सन् इत्याशयः। ज्ञानशब्दश्चात्रौचित्यात् उक्तविशेषपरः। [1]रागविषयफलरूपज्ञानमुखेन विचाराक्षेपवल्ठनिस्तु न युक्ता, धीविलम्बात्, विवक्षितस्य च साक्षाद्वक्तुं शक्यत्वात्। **इह** = मीमांसाख्यशास्त्रोत्तभागारम्भे। एवमेव हि, "अथातो धर्मजिज्ञासा" इत्यादिष्वपीति भावः। ननु रागप्राप्ते विचारे, कथं **विधीयते** इत्युक्तिः? नाप्यत्र गुर्वभिगमनादिनियमांशापेक्षया विध्युक्तिः; न्यायानुपयोगात्; तादृशनियमनिषेधेन पूर्वपक्षानुत्थानाच्च॥ मैवम्; रागप्राप्तस्याप्यनारभ्यत्वभ्रमे तन्निषेधपरत्वादत्र विधिशब्दस्य।

**जातापि हि विचारेच्छा पूर्वपक्षोक्तयुक्तितः। सीदन्त्यु(त्यु)त्तभ्यते युक्त्या सिद्धव्युत्पत्तिपूर्वया॥**

**(सूत्रवाक्यार्थवर्णनम्)**

अत्र, **तापत्रये**ति ग्रन्थे **यादवप्रकाशोक्त** पूर्ववृत्तान्तरसङ्ग्रह दिविचारस्यानारभ्यता(त्व)स्थापनं च विवक्षितमिव प्रतिभाति; तत् व्युदस्यन् वाक्यार्थमाह—**मीमांसा** इति।

**(मीमांसापदव्युत्पत्तिप्रदर्शनम्)**

'माङ् माने' इत्यत्र [2]सन्नन्तत्वं(नान्तत्वं?) निपात्य वा 'मान पूजायाम्' इत्यत्र वा, 'मान्बध' इत्यादिना अनिच्छासन्नन्तोऽयं शब्दः। "मानेर्जिज्ञासायाम्" इति वैयाकरणोक्तिस्तु अदूरविप्रकर्षात्। जिज्ञासाविशेषोत्थाप्ये हि पूजितविचारे तदनुबन्धिनि प्रशस्तन्याये वा वृद्धप्रयोगादस्य शक्तिनिष्कर्षः।

---

1 अद्वैत्युक्तमस्याति रागेति।

2 अत्र सन्नन्तत्वं निपात्येत्यशुद्धम्। धातूनां सन्नन्तत्वस्यापि स्वत एव भावात् निपातनानपेक्षणात्। तदापि मित्सत इत्येव रूपं स्यात्; न तु मीमांसत इति। तत एव मीमांसत इति निपातनमिति चेन्न; तद्धातुमूलनिपातनतया मीमांसत इति पदस्य सूत्रादर्शितत्वात्। अतो मीमांसत इति रूपौपयिको यथाविधो निपातः, स इह वक्तव्यः। अतोऽस्मदाचार्याः इह, नान्तत्वं निपात्येति पठनीयमिति शोधयामासुः; उपरि भामतीञ्च दर्शयामासुः। यथा भामत्याम्—"नान्तत्वं निपात्य माङ माने इत्यस्माद्वा मान पूजायामित्यस्माद्वा धातोः मान्बधेत्यादिना अनिच्छार्थे सनि व्युत्पादितस्य मीमांसाशब्दस्य पूजितविचारवचनत्वात्" इति। ननु कथमनिच्छार्थकत्वम्; मानेर्जिज्ञासायामिति ज्ञानेच्छावाचित्वोक्तेरित्यत्राह मानेरिति। अदूरविप्रकर्षादिति। ज्ञानेच्छासमनन्तरमेव विचारोत्पत्तेः कारणवाचिजिज्ञासाशब्देन कार्योक्तिरिति। पूजार्थकमानधात्वनुरोधेन पूजितेत्युक्तिः।

आहुश्च—"मीमांसासंज्ञितस्तर्कः सर्वो वेदसमुद्भवः' इत्यादि । तादृशन्यायनिबन्धात्मनि तु शास्त्रे भाक्तो [1]**मीमांसा**शब्दः । [2]अतः पूर्वापरभागविभागेन **ज्ञातत्वावसेयत्वोक्तिरविरुद्धा । अत्र** पूर्ववृत्ता-दित्यादिना वाक्ययोजना ; शिष्टं तत्रत्यहेत्वंशसमर्थनम् ।

**विचारक्रमनिर्देशः सौत्रस्तद्व्यक्तये त्विह । शास्त्रैक्यतत्क्रमौ प्रोक्तौ सूत्रकाराभिसंहितौ ॥२०८**

**पूर्वभागोपरितनभाग**शब्दाभ्यां नियतक्रमस्य स्थानरूपप्रबन्धैक्यं व्यज्यते । तन्निदानं व्याख्ययेस्य वेदस्य क्रमवत्त्वं पदयोजनायां **सशिरस्क**शब्देन दर्शितम् । पदवाक्यनिर्वाहयोस्तात्पर्यभेदादपुनरुक्तिः ; **ज्ञातस्य** निर्णीतस्य । **अवसेयस्य** अबाधितापातधीस्थतया निर्णेतव्यस्य । **ब्रह्मज्ञानस्य** ब्रह्मोपासनस्य ; ब्रह्मस्वरूपमात्रविवक्षायामत्र **ज्ञान**शब्दाविषयात्, 'ज्ञातव्यस्य कर्मणः' इत्येतत्समशीर्षतया साध्यविशेष-ग्रहणौचित्यात्, विचाररूपस्य निर्णयरूपस्य वा ज्ञानस्य अवसेयत्वोक्त्ययोगात् । निर्दिश्यमानफलं प्रति अचोदितत्वाच्च । तदिह **समन्वयनीत्या** स्वयमनन्ताक्षयफलत्वेन प्रधानतया ज्ञातव्यमपि ब्रह्म स्वोपासनस्यानन्ताक्षयफलसाधनत्वेन तद्विषयतयाऽपि ज्ञातव्यमिति तदुपसर्जनतयोक्तिरपि सुसङ्गता । **ब्रह्म ज्ञातव्य**मित्यनेन तु तत्प्राधान्यं व्यज्यते । अत्र प्रयोजनवत्तयाऽऽपातधीस्थत्वं विचार्यत्वे हेतुः[3] ; कर्म-विचारात् पश्चाद्भावित्वस्य तु प्रतिबन्धशान्तौ तत्सापेक्षत्वम् ; आनन्तर्यस्य च तादृशापेक्षणीयान्तरा-भावः । अतः [4]श्रुत्युक्तनिर्वेदपूर्तिपर्यन्तविचारविशेषाभिप्रायेण **तत एवे**त्युक्तम् । अवधारणमिह हेतु-वैकल्प्य[5](स्य?) निवृत्त्यर्थम्, सावधारण(साधारण?)हेतुनिषेधायोगात् । केचित्तु, "हेत्वन्तराद्ब्रह्मविचारे अनावश्यकत्वशूद्राधिकारत्वयोः प्रसङ्गात् कर्मधीव्यतिरिक्तहेत्वनादरोद्देशोऽयम्" इत्याहुः । अत्र प्रधान-प्रतिज्ञा[न] तद्धेतुः प्रतिज्ञान्तरहेतुश्च नोक्तः स्यादिति बह्वनौचित्यम् । आकांक्षितहेतुपूर्वकसाध्यविशेषा-योगव्यवच्छित्त्यैवार्थतः हेत्वन्तरादिनिरासस्तु युक्तः । **ज्ञातव्यम्** विचार्यमित्यर्थः । **विचारः कर्तव्य** इति हि भाष्यते । अत्र अर्हार्थे कृत्यप्रत्ययः । **कर्मज्ञाना**दित्यत्रापि **ज्ञानं** विचारः ।

**(यादवप्रकाशीयसौत्रयोजनानिरासः)**

**'ब्रह्म ज्ञातव्यमित्युक्तं भवति'** इत्यनेन स्वारस्यं युक्तिं च सूचयता ब्रह्मैव ज्ञातव्यमिति वाक्यार्थं [6]वदन्तः प्रत्युक्ताः । इदं हि सूत्रमविचार्यत्वनिरासार्थम् । ब्रह्मणो ज्ञातव्यत्वस्य इतः पूर्वमसिद्धतया तदेव ज्ञातव्य-

---

1 भाक्त इति । अधिकृत्य कृते ग्रन्थे इति प्रत्ययाभावादिति भावः। 2 अत इति । विचारविषय-त्वादित्यर्थः। 3 हेतुः =कारणम् । ब्रह्मापातधीः ब्रह्मविचारे कारणमित्यर्थः । हेतुरित्यस्योत्तरत्राप्यन्वयः। कर्मापातप्रतीतेः प्रतिबन्धरूपत्वात् तच्छान्तेर्हि कर्मविचारसापेक्षत्वमस्ति । तदेव तत्पश्चाद्भावि-त्वे हेतुः कारणम् । पश्चाद्भावित्वांशे कारणमुक्तम् । अव्यहितत्वांशे कारणमाह आनन्तर्यस्य चेति । हेतुरित्यनुषंगः । 4 ब्राह्मणो निर्वेदमायादित्युक्तो निर्वेदः कर्मनिर्णयमूलः, 'नास्त्यकृतः कृतेन' इति ज्ञानमूलश्च । इदञ्च ज्ञानमकृतविषयकापातज्ञानाभावे कथम् । अतः प्राभाकरप्रत्यवस्थानखण्डनम् । अतस्तत्पर्यन्तत्वमेव कर्मविचारस्यविशेषः। 5 वैकल्प्येति न युक्तम् ; विकल्पाद्यर्थे तथाप्रयोगादर्शनात् वैकल्येति स्यात् । आपातधीस्थत्वरूपहेतोरभाव एव हि प्राभाकरेण शंकिष्यते । तन्निवर्तनम् एवका-राभिमतम् । न तु सहकारिभूतसाधारणहेतूनां निरसनम् । 6 वदन्तः—यादवप्रकाशानुयायिनः ।

मिति नियमो नोदेति। कथं[1] च शब्दानां सिद्धपरत्वसम्भवमसाधयित्वा सिद्धविशेषस्य विचार्यत्वोक्तिः। समन्वयसूत्रात्(त्रे) तत्साधनं साकाङ्क्षयोजना च न [2]युक्तम्। अत्र चोदनात्ववत् शब्दतोऽर्थतश्च अयोगान्ययोगव्यवच्छेदौ वाक्यभेदाभावश्चेत्यप्ययुक्तम्; अनुपयुक्तप्रतिज्ञामात्रानुपपत्तेः॥ ब्रह्मशब्दावर्थकतया अन्यनिषेधः प्रस्तुतोपयोगी इति च मन्दम्। तत्प्रतिज्ञानेऽपि हेतुश्चाल्लोह्यः; तदूहे तु ईक्षत्यधिकरणाद्यैस्तर्कवादान्तैस्साधनप्रसैः कृतकरत्वं च स्यात्। किञ्च शारीरकेऽनुक्तांशस्य सङ्कर्षयोगावगम्यत्वं वदद्भिः कथमिह तन्निषेधः प्रतिज्ञायते। वेदविरुद्धांशानादरणीयत्वं तु विरोधाधिकरणतः प्रागेव सिद्धम्। अतः 'ब्रह्म ज्ञातव्यमेवेति योजना युक्ता' इति वृद्धाः। अनेन श्रोतव्य इत्यादि(व्यादि)श्रुतिरनुसृता भवति।

अत्र स्वोक्तौ पदार्थवाक्यार्थौ वृत्त्याऽपि द्रढयन् तन्मतानुसारे तत्कृतिसंवादं दर्शयति—**तदाह** इति। अनन्यथासिद्धपूर्ववृत्त[3]विवक्षया कर्मविचारस्य हेतुत्वमपि वृत्त्यभिप्रेतम्। **अधिगमो**ऽत्र विचारः। **विविदिषोक्तिः** जिज्ञासोक्तिवन्नेया।

(शास्त्रैक्यसमर्थनम्)

स्वोक्तसूत्रार्थसिद्ध्यै सूचितं शास्त्रैक्यमपि संवादयति—**वक्ष्यति चे**ति। व्याख्यास्यमानप्रदेशान्तरविषयतया भविष्यन्निर्देशः। ऐकशास्त्र्यमिह न केवलमेकविद्यास्थानत्वम्, किन्तु ऐकप्रबन्ध्यमपीत्यभिप्रायेण संहितत्वोक्तिः। अधीतकृत्स्नवेदार्थरूपविचारैक्यसिद्धौ कर्मब्रह्मकाण्डयोः प्रत्येकमपूर्णार्थत्वेन परस्परसाकाङ्क्षत्वात् नष्टाश्वदग्धरथन्यायेन सङ्घटितमित्यर्थः। इयं च वृत्तिः शास्त्रभेदभ्रमहेतून् तत्परिहारांश्च सूचयति। सर्वशरीरिगोचरत्वं दर्शयता **शारीरक**शब्देन विषयभेदज्ञापनात् **एतत्** इति प्रयोजनाधिकारिभेदयोरर्थविरोधस्फुरणस्य च कृपालुरवैव निर्देशात् जैमिनीयेनेति [कर्तृभेदनिर्देशाच्च?) भेदशङ्काद्योतनम्; परिहारस्तु **षोडशलक्षणेन** इति। द्वादशाध्यायीचतुरध्यायीरूपकाण्डद्वयेन। अत्र,

"कर्मदेवताब्रह्मगोचरा सा त्रिधोद्धृतौ सूत्रकारतः। जैमिनेर्मुनेः काशकृत्स्नतो बादरायणादित्यतः क्रमात्॥"

इति **तत्त्वरत्नाकरो**क्तेश्च **वृत्ते**श्च क्वचिदुपचारेणाविरोधो ग्राह्यः। **षोडशलक्षणेन** इति प्रतिबन्दीमभिप्रयता अवान्तरविषयादिभेदानां न प्रबन्धैक्यविरोधित्वमिति दर्शितम्।

(जैमिनीये शारीरकार्थविरोधशङ्कानिरासः)

**जैमिनीयेन** इत्यनेनैवार्थविरोधशङ्का सूत्रतात्पर्यानभिज्ञतयेति सूच्यते। सूचयिष्यति हि शारीरकार्थेषु बहुषु जैमिनेः संवादम्। व्यामोहशान्त्यै, "धर्मं जैमिनिरत एव" इत्यादिषु क्वचिद्विसंवादोक्तितन्निरासौ। 'परामर्शं जैमिनिः' इत्यादौ नैष्ठिकाद्याश्रमाभावो जैमिन्यसूत्रितोऽपि नूनं सकामानां गृहस्थधर्मवैमुख्यनिवारणार्थं कदाचिदुक्तोऽनूद्य अपास्तः। अन्यथा, "तद्भूतस्य तु नातद्भावो जैमिनेरपि" इत्यादौ नैष्ठिकाद्याश्रमप्रच्युतिनिषेधस्य जैमिनिसंवादोक्त्ययोगात्। "मध्वादिष्वसम्भवादनधिकारं जैमिनिः", "भावं जैमिनिर्विकल्पामननात्" इत्यादिष्वपि न शास्त्रैक्यविरुद्धानूक्तिः; स्वोक्तव्याख्यभेदवत् स्वरूपा-

---

1 'व्युत्क्रमयात्राऽऽद्यतुर्यावमिदधाति नयौ(26)' इति सारावलिश्लोके इदं विशदम्। 2 युक्तमित्येवाऽऽभ्रमुद्रणपाठः। नपुंसकमनपुंसकेनेति क्लीबत्वैकत्वे। 3 विवक्षयेति। वृत्तपदेनेति शेषः।

न्योक्तेस्तदविरोधात् । **संहितत्वोक्त्या तु** कर्तृभेदाभेदयोः यथादृष्टि प्रबन्धभेदाभेदानापादकत्वं ख्यापितम्; अर्थसङ्गतौ सत्यां अन्यतराभिसन्धेरुभयाभिसन्धेर्वा सन्धायकत्वं युक्तम् ।

**अप्रसंवाददार्ढ्येन प्रधानार्थाविरोधतः । अप्रधानविरोधस्तु तात्पर्यादपनोद्यते ॥ २०९ ॥**
**पर(रि)कल्पितसूत्रार्थ(र्थे ? विरुद्धांशव्यपोहतः[1] । शेषपूरणवद्वाऽत्र संहितत्वोक्तिसम्भवः ॥**

कुतस्तर्हि तद्भेदप्रथा, सति वा भेदे कथं च प्रबन्धैक्यम् इत्यनवहितानुयोगे द्वितीयवृत्त्यभिप्रेतं व्यनक्ति—**अत इति** । सयुक्तिकसम्प्रदायादित्यर्थः **प्रतिपिपादयिषितत्वोक्त्या** कर्मकाण्डदेवताधिकरणादेः, देवतातत्त्वनिश्चयरहितानामपि, कर्मप्रशस्त्यादिप्रतिपादनपरत्वेन विग्रहादिनिराकरणादौ तात्पर्याभावः सूच्यते । उक्तं **ह्यागमप्रामाण्ये,** "यथैव हि भगवतो जैमिनेः कर्मणः फलोपन्यासः कर्मश्रद्धासंवर्धनाय" इति । विवृतं चैतत् **वेदार्थसंग्रहे,** "अश्रुतवेदान्तानां कर्मण्यश्रद्धा मा भूदिति देवताधिकरणेऽतिवादाः कृताः" इति । **अतिवादाः**—अन्यपरोक्तयः । तावताऽपि[2] बाह्योक्तानित्यसंयोगादिनिमित्ताप्रामाण्यशङ्कानिरासात् तत एव स्वाभीष्टसिद्धेः इत्याशयः ।

**(देवताविषयजैमिनिसूत्राणां यथावत् व्याख्यानम्)**

अपि चैवं नवमाद्यपादे, **"फलदेवतयोश्च", "न[3] चोदनातो हि तादृगुण्यम्"** इति प्रसक्तयोः फलदेवतयोर्मध्ये देवताविषयाणि, **"देवता वा प्रयोजयेत्"** इत्यादीनि सूत्राणि यानि, तानि व्याकुर्मः—

देवतोद्देशेन देयं [4]द्रव्यं देवता न प्रयोजयेत्; कुतः, कृष्यादिवत् फलसाधनभूतक्रियाया एव प्रयोजकत्वोपपत्तेः तत्राह —'**देवता वा प्रयोजयेदतिथिवद्भोजनस्य तदर्थत्वात्**" इति । **वाशब्दः** शङ्कानिवर्तकः । हविरुद्देश्या देवता फलार्थिनं स्वाराधने प्रयोजयेत् । **कुतः?** भोजनस्य तदर्थत्वात्= **भोजनस्य** हविषः तत्समर्पणस्य च **तदर्थत्वात्** तच्छेषत्वात् । सम्प्रदानभूता हि देवता प्रधानतया स्वार्थे द्रव्यतत्समर्पणे प्रयुङ्क्ते ।

**क्रियाप्रधानवाक्येषु न्यग्भूताऽपि हि देवता । तत्तन्मन्त्रादिसामर्थ्यादार्थप्राधान्यशालिनी ॥**

न च वाच्यं [5]विग्रहादिपञ्चकायोगात् न प्रयोक्त्री देवतेति; स्मृत्युपचारान्यार्थदर्शनैः अबाधितैः तत्सिद्धेः । अतो यथा विग्रहादिमान् अतिथिरारव्यः स्वार्थे स्वाभीष्टमुपचरणं प्रयुक्ते, तथा देवताऽपीति [6]**"आर्थं पत्याच्च"** (अर्थपत्याच्च)=[7] अर्यते प्राप्यत **इति अर्थः** विभूतिः, अर्थ्यत इति वा । अतः (वा अर्थः।?)

---

1 व्यपोहत इति चतुर्थपादेऽन्वेति । शेषपूरणवदिति । यथा गृहादिनानाकार्यनिर्माणे सावशेषे शेषपूरणेन निर्मितांशपरिष्करणेन चैककार्यतया संधानम्, तथेति । 2 तावताऽपि = साम्प्रदायिकार्थाबोधनेनापि । 3 न फलदेवताप्रयोजकत्वं कर्मणः, कर्मचोदनात् तद्गुणत्वं मन्त्रस्येत्यर्थः । 4 श्रुतप्रकाशिकाभूमिकायाम् उपयुक्तमीमांसायां सर्वमिदमस्माभिः प्रपञ्चितम् ।
5 विग्रहो हविरादानं युगपत् कर्मसंनिधिः । प्रीतिः फलप्रदत्वं(दानं) च देवतानां न विद्यते ।
6 अर्थपत्याच्चेत्येव वैव मतृकासु पाठः । 'स खलु देवता सर्वस्य ईष्टे' इत्युपरितनवाक्यार्थस्वारस्यानुगुण्येन मीमांसाभाष्यारूढत्वेन च आर्थपत्याच्चेति पूर्वमुद्रण एव शोधितमस्ति । 7 अर्यत इति प्राचीनसंमतं निर्वचनम् । अपौनरुक्त्याय तदत्र ग्राह्यम् । प्राप्यत इत्यर्थवर्णनाच्च ।

अतः तदभावादनाराध्या, अनीप्सितप्रदत्वादप्रयोजि(ज)केति न शङ्कनीयम् (शंक्यम्); परा खलु देवता सर्वस्य ईष्टे; तन्नियुक्ता चापरा यथाधिकारं तत्तद्विभूतीनाम् ॥ तथापि निरपेक्षा देवता न कुतश्चित् प्रीयेत; न कञ्चन(कश्चित्) प्रीणाति। अतः(तत) कथं प्रयोजिकेत्यत्राह—"**ततश्च तेन सम्बन्धः**" ततः=नैरपेक्ष्येऽपि नरदेवनीत्या दयौदार्यशालिन्याः परिचर्यमाणायाः प्रसेदुष्या देवताया एव हेतोः, परिचरतां स्वामीष्टफलेन सम्बन्धः स्मृत्युपचारादिभिरेवं सिद्धः। इति पूर्वः पक्षः।

राद्धान्तस्तु—"**अपि वा शब्दपूर्वत्वात् यज्ञकर्म प्रधानं स्यात्**"। अत्र अपि वा इति [2]सार्धाङ्गीकारे(रं) पक्षव्यावर्तनम्। यद्यपि देवताया विग्रहादि-पञ्चकं दुर्निषेधम्; द्रव्याद्यपेक्षया संप्रदानस्य प्राधान्यम्; यजेश्च देवताराधनवाचितया यागस्य तादर्थ्यम्; सिद्धपरवाक्येषु च परावरदेवतयोः स्वरूपादिकमनन्यार्थमाम्नायते—तथापि कर्तव्योपदेशेषु यज्ञादिरूपं कर्म [स्वर्गादि]फलसाधनतया चोदितत्वात् प्रधानं सत् साध्यतया बुद्ध्यारोहेण पुरुषं प्रवर्तयति। कृत्स्नं च देवतादि क्रियाशेषभूतम्। ननु फलप्रदाया देवताया आराध्यत्वेन प्राधान्यमनुशोश्रूयामहे; अत्राह, "**गुणत्वे देवताश्रुतिः**"। हविष्प्रदानं प्रति गुणीभूतां हि देवतामनुश्रृणुमः। मन्त्रार्थवादोपस्थापितं देवताप्रीतिरूपमपूर्वं चोदितस्य कर्मणः क्षणिकस्य कालान्तरभाविफलद्वारतया उपादीयेत। अतो वास्तवप्राधान्यशालिन्यपि देवता फलकामप्रवर्तकशाब्दप्राधान्य[शालि?]क्रियागुणीभूता न प्राधान्येन प्रयोजिकेति ॥ अतिथेस्तर्हि कथं प्रयोजकत्वम्? इत्थमित्याह, "**अतिथौ तत्प्रधानत्वमभावः कर्मणि स्यात्**"। आतिथ्यं प्रति अतिथेः प्रधानत्वं प्राप्तम्। अन्यथा हि तदर्थे कर्मणि प्रयोजकाभावात् तदभावः स्यात् ॥ तत्सपर्याविधिरेव तत्प्रयोजक इति चेत्—तत्र प्रत्याह, "**तस्य [3]प्रतिविधानत्वात्।**" आतिथ्यकर्मणो हि अतिथ्यागमनप्रतिविधानतयैव चोदना।

**क्रियाप्रयुक्त(प्रवृत्त)पुरुषसमाहूता तु देवता। संनिधत्ते तदिष्टार्थं न ततस्तत्प्रयुक्तता ॥ २१२**
**अतिथिस्तु स्वयं प्राप्तः स्वामीष्टं च प्रयोजयेत्। तदिष्टानुविधानेन तत्सपर्यार्थचोदना ॥ २१३**

अतः प्राप्ताप्राप्तविवेकादतिथिप्राधान्योक्तिरिति। यथा चातिथेर्विग्रहादिमत्त्वे तदुपचरणानुष्ठानस्य न कदाचित् क्षतिः, प्रत्युत स्वरूपलाभ एव; एवं देवतायास्तद्वत्त्वेऽपि। न चात्र तत्प्रतिक्षेपसाफल्यं पश्यामः॥[4]गुणीभावसाधनेऽपि किं फलमिति चेत्, अनिर्धारितवास्तवप्राधान्यानामपि कर्मश्रद्धासंवर्धनमिति।

---

1 अनीप्सितप्रदत्वात् = फलप्रदत्वाभावात्।
शंकनीयमिति। इयं शंका प्रकृतसूत्रावतारिकात्वेन भाव्या। सूत्रार्थस्तु परेत्यादिनोच्यते।
2 अपि वेत्यस्य अपि= तथापि, वा =वक्ष्यमाणमेवेत्यर्थः। 3 शाबरभाष्येऽपि प्रीतिप्रधानत्वादिति न; किंतु प्रीतिविधानत्वादिति। अतो न प्रधानपदम्। एवञ्च प्रीतिपदं वा प्रतिशब्दो वा तत्रापि स्यादिति विमृश्यम्। उपयुक्तमीमांसायामपीदमुपक्षितम्। अत्र सूत्रस्य खण्डशो व्याख्यानं वा, सूत्रभेदो वेत्यन्यदेतत्। 4 देवताया गुणत्वात् किं तद्विग्रहानुग्रहादिचिन्तया। कर्मैव अपूर्वद्वारा फलं दास्यतीति यदि नेष्यते, किमर्थं गुणत्वस्थापनमिति चेत्—अप्रधानत्वे, देवतायाथात्म्यानिर्धारणेऽपि मुख्यलोपो न भवतीति ज्ञापनार्थमेवेति भावः। वास्तवप्राधान्यमार्थप्राधान्यम्।

(देवतानां विग्रहादिनिरासकयुक्तेः प्रतिक्षेपः)

सूत्रेषु तावदेतेषु पूर्वपश्चिमपक्षयोः । देवताविग्रहादेर्न प्रतिक्षेप्यत्वसूचनम् ॥ २१४ ॥
[1]शाबरे पूर्वपक्षोक्तदेवताविग्रहादिषु । स्वतःप्रामाण्यवेदिभ्यः स्वदते न निराकृतिः ॥ २१५
स्मृत्योपचारादन्यार्थदर्शनैश्च स्वभाषितम् । न वाङ्मात्रेण निह्नोतुं शक्यते नास्तिकेतरैः ॥
अदर्शनकुतर्काभ्यां श्रुतार्थानामपह्नवे । चार्वाकादिमतापत्त्या सर्वोपप्लवसम्भवः (आपतेत् ?) ॥
श्रुतानां विग्रहादीनां कल्प्यत्वोक्तिश्च मोहजा । श्रुतशक्त्याद्यभावस्य कल्पने गौरवं तु वः ॥
क्षणिकस्य फलद्वारं किं भवेदिति चिन्तने । द्वारक्लृप्तेर्वरं [2]तत्र (ह्यत्र) श्रुतद्वारपरिग्रहः ॥ २१९
देवतानां क्रियार्थत्वं कर्मणां च तदर्थता । मुखभेदेन सिद्धत्वान्न मिथो बाधमर्हतः ॥ २२०
आदित्यादिमतीरङ्गे स्थापयन् बादरायणः । देवतानां प्रधानत्वमर्थसिद्धमसूत्रयत् ॥ २२१ ॥
नासिद्धदेवतारूपदृष्टिश्चान्यत्र युज्यते । [3]न च सर्वत्र निर्बाधे कल्प्यो दृष्टिविधिक्रमः ॥ २२२
देवतानां तपश्चर्याद्युक्तिश्च न विरुध्यते । स्वाधिकेश्वरतोषार्थप्रवृत्तेरुपपत्तितः ॥ २२३ ॥
[4]प्रशासितुश्च घृणया धर्मसंस्थापनार्थिनः । तत्तत्कर्म(द्धर्म)प्रवृत्तिः स्यात् कर्मवश्यानुसारिणः ॥
[5]तिर्यक्स्थावरनिर्जीवतत्प्रतीकगुणक्रियाः । [6]अभिमत्यनुबन्धेन देवतास्तदपि श्रुतम् ॥ २२५
हविर्भेदानुसारेण फलभेदप्रदायिता । प्रतिषिद्धैः प्रकोपश्च राजादिन्यायतो भवेत् ॥ २२६ ॥
यदि श्रुत्यनुसारेण स्वभावो हविरादिषु । तेनैव तत्तदाराध्यस्वभावस्वीक्रियोचिता ॥ २२७ ॥
मन्त्रार्थवादसिद्धेऽपि यत्र बाधा न दृश्यते । तन्मूला स्मृतिरप्यत्र न बाधार्हा स्वमूलवत् ॥
[7]पर्याये च विशिष्टे च देवताभेदकल्पनम् । तत्तच्छब्दोपधानेन तदुद्देश्यत्वसिद्धये ॥ २२९ ॥
अविदित्वा स्वमन्दत्वं नास्तिकैस्तर्केष्विह । यैरजल्प्यत मन्दत्वं शोच्यास्ते सूक्ष्मदर्शिभिः ॥
द्रव्यदैवतसामान्ये[8] बलीयो द्रव्यमित्यपि । प्रत्यक्षे च परोक्षे च प्रमाणप्रस्थितेर्वशात्[9] ॥
द्रव्यस्याध्यक्षसिद्धस्य हविष्टु शास्त्रगोचरः । देवतायाः स्वरूपं च धर्मत्वं चेति भेदतः ॥ २३१
प्रत्यक्षाद्युपजीवित्वाच्छास्त्रतो धीर्विलम्बिता । [10]ततो हि परदौर्बल्यं श्रुतिलिङ्गादिकेष्वपि ॥
द्रव्यदैवतवैषम्यं न सत्यासत्यभावतः । दैवतं यदि मिथ्या स्यात् कथं भेदादिधर्मभाक् ॥ २३४
अर्थोपश्लिष्टशब्दात्मा शब्दमात्रात्मिकापि वा । यथाश्रुतगृहीता वा सत्यैव खलु देवता ॥

---

1 शाबर इति । विग्रहादिविषयनिराकृतिः शाबरभाष्यस्था न सद्भ्यो रोचते ।

स्वभाषितम् = शब्दमुख्यार्थः । 2 तत्र श्रुतेति । विधिवाक्यशेषश्रुतेत्यर्थः । 3 देवतासु विग्रहादिमत्त्वं कल्पयित्वा तद्विशिष्टदेवतादृष्टिर्विधीयतामित्यत्राह—न चेति । 4 नन्वीश्वरोऽपि तपश्चर्यादौ प्रवृत्तस्तत्रतत्रोक्त इत्यत्र, स धर्मस्थापनार्थाभिनय इत्याह प्रशासितुश्चेति । 5 देवताभिन्ना अपि देवता भवन्ति, अभिमानिदेवतासांनिध्यादित्याह तिर्यगिति । 6 अभिमतिः—अभिमानिदेवताकृतोऽभिमानः । 7 पर्याये वायव्यं श्वेतमालभेत, मारुतं सप्तकपालमित्यत्र वायुमरुतोः पर्यायता । विशिष्टे महेन्द्र—अधिराजेन्द्रादौ इन्द्रात् भेदः । 8 एकस्य कर्मणः अन्येन कर्मणा द्रव्यैक्ये, तदितरकर्मणा देवतैक्ये च । 9 प्रत्यक्षवस्तु शीघ्रं प्रमाणग्राह्यम् ; परोक्षं विलम्बेन । द्रव्यस्य स्वरूपं प्रत्यक्षम् ; हविष्ट्वमात्रं शास्त्रवेद्यमित्यर्थः । 10 ततो हि = विलम्बनात् खलु ।

**मणिमन्त्रौषधाद्यैश्च सिद्धिरुक्ताऽभ्युपेयते । जन्मसिद्धाऽपि साऽश्रीता किं न देवेषु गृह्यते? ॥**
**न वस्तुदेश(ा)न्तरयोर्देवदृष्टिविधानवत् । इह कल्पयितुं युक्तं स्वरूपविधिसौस्थ्यतः॥२३७**
**रात्रिसत्रादिनीत्या च विध्यपेक्षानुसारतः । फलतः फलभूतत्वादपि सिध्यन्ति देवताः ॥**
**इत्थं प्राचीनया गत्या क्षिप्तं निर्देवतं मतम् । शेषं तदुपगीत्यादिसूत्रभाष्ये भविष्यति ॥२३९**

**द्रमिडभाष्यकारै**रप्युक्तम्— "अङ्गसैव विश्वसृजो रूपम्" इत्यारभ्य, "न ह्यरूपाया देवताया रूपम् उपदि( दि)श्यते । यथाभूतवादि हि शास्त्रम्" इति ॥ नन्वर्थवादानां विधिशेषत्वं पूर्वत्रोक्तम् ; समन्वयाधिकरणे त्वन्यथा । तत् कथमविरोधः ? इत्थम् — उत्सर्गापवादतः प्रवृत्तेः । दृष्टं चैतत् शास्त्रान्तरे काण्डान्तरे च । एवमन्यत्रापि कुदृष्टिकल्पितो विरोधः शमयितव्यः । **षट्कभेदवत्** इति कर्मकाण्डे प्रतिबन्दी । **अध्याय-भेदवत्** इति तु काण्डत्रयेऽपि । चकारोऽत्रानुक्तपादादिभेदसमुच्चये । देवताकाण्डात् शारीरकस्य पृथक्करणं च तत्पृथक्करणप्रतिबन्द्या निरुद्धम्(निरुद्धम्) । अथ भिन्नक्रमत्वभिन्नप्रबन्धत्वव्युदासं वृत्तिसिद्धं व्यनक्ति — **मीमांसाशास्त्र**मति । **सङ्गतिविशेषेण** । हेतुहेतुमद्भावादिना सम्बन्धेनेत्यर्थः । स[1] च विंशतिलक्षण्या-मेकप्रयोजनसाधनत्वेनैकप्रयत्नसाध्यत्वमिति **विवरणम्** । इद च ऐकप्रबन्ध्यव्यवस्थार्थम् । [2]**विशिष्टक्रमम्**— नियतक्रमम् । न हि शास्त्रान्तरवत् अवसरमात्रादिह क्वापि क्रम इत्याशयः । तत्र विशेषः —

**विचारः पूर्वमेवात्र प्राप्तमध्ययनविधेः । अतोऽनधीतवेदस्य विचारः श्रुतिवारितः ॥२४०॥**
**क्रमो विंशतिलक्षण्या न वैधः किंतु यौक्तिकः ।**
**अतो व्युत्क्रमचिन्तायामनौचित्यं[3] प्रकाश्यते ॥ २४१ ॥**

**आरभ्ये**त्यनेन धर्मजिज्ञासासूत्रे कृत्स्नवेदार्थविचारप्रतिज्ञा सूच्यते। **धर्म**शब्देन सिद्धसाध्य-परावर-कृत्स्नधृतिहेतु[4]सङ्ग्रहात् । कर्मभागमात्रप्रतिज्ञाऽपि तत्रैव तन्त्रतः आवृत्त्या वा सिध्येत् । तावतैव [5]**सारे** कर्मविचारार्थत्वोक्तिः। भागद्वयप्रतिज्ञाभ्यां [वा!]सामान्यप्रतिज्ञा गम्या; **न्यायसूत्रे**(5-अ) साधर्म्यवैधर्म्य-समोक्त्या प्रतिधर्मसमोक्तीतिवत् । तदेतत् सर्वं **सङ्गतिमालायामुक्तम्** । न च वाच्यम् आद्यप्रतिज्ञयैव तु कृत्स्नसिद्धौ किं भूयो विशेषप्रतिज्ञयेति ; शङ्काविशेषोद्धारादिप्रयोजनवशात् प्राचीनाध्यायेष्विवात्रापि तदुपपत्तेः । न चायम् **अथातो धर्मजिज्ञासे**त्यादिरप्रस्तुतार्थः ; यथाऽन्यत्र सङ्गत्या क्रमनियतिः, तथाऽत्रेति तात्पर्यात् । अत्र प्रमानकस्यानिरूप्यतया प्रमाणलक्षणेन प्रथमेनाभावि । कारस्न्येन वेदस्य प्रामाण्ये सिद्धे तदर्थेषु भेदाभावेऽङ्गत्वादेः सर्वस्यायोगात् मानचिन्तानन्तरं शास्त्रार्थभेदचिन्ता प्रावर्तिष्ट । शास्त्रभेदचिन्तेत्येके[7] । तत्र शब्दान्तराभ्याससंख्यागुणप्रक्रिया[8]नामधेयैः सिद्धे भेदे श्रुतिलिङ्गवाक्य-

---

1 स चेति । संबन्धश्चेत्यर्थः । 2 ननु संगतिविशेषविशिष्टत्वं क्रमस्योच्यते । तत् कथम् ? काण्डयोः किल तदित्याशंकायां संगतिविशेषबलात् नियतक्रममिति तदर्थमाह । विशिष्टं—व्यावृत्तं व्यवस्थितम् । 3 अनौचित्यम् । न तु विधिविरोधः । 4 धृतिहेत्विति । अयं धर्मशब्दार्थः । धृतिः प्रीतिः ; तद्धेतुः । श्रेयस्साधनत्वं धर्मत्वम् । 5 सारे =वेदान्तसारग्रन्थे । 6 अयं= श्रीभाष्यसूक्तिभागः । 7 एके= प्राभाकराः । 8 प्रक्रिया =प्रकरणान्तरम् ।

प्रकरणस्थानसमाख्याभि: शेषलक्षणं प्रवृत्तम् । शेषाणामेव शेषिभि: प्रयोज्यत्वाय चतुर्थे क्रत्वर्थपुरुषार्थजिज्ञासा, [1]विध्यपेक्षा(विध्यक्षेप)रूपोपादानचिन्तेति केचित् । प्रयुक्तेषु श्रुत्यर्थपाठप्रवृत्तिमुख्यकाण्डै:[2]पञ्चमे क्रमोऽनुक्रान्त:। सक्रमे शास्त्रार्थे स्थापिते तत्प्रयोक्ता षष्ठे प्रोक्त:। एवमुपदिष्टप्रकृतिनिश्चये विकृतावतिदेश: सामान्यत: सप्तमे स्थापित: । अष्टमेऽपि तदनुबन्धिविशेष: । अतिदिष्ट(ष्टे)मन्त्रादीनां नवमे बहुविध ऊह:। अतिदेशप्राप्तेषु क्वचित् प्रयोजनाभावात् , *अन्यतो वा तल्लाभात् , प्रतिषेधतो वा दशमे बाध: । उक्तेषु [3]पृथक्प्रयुक्तिशक्तिमदुभयगोचरत्वे देशकालाद्यैक्ये चैकादशे तन्त्रम् । द्वादशेऽपि कस्मिंश्चित्प्रयोगमध्यपातिनि अन्यस्मिंस्तत्प्रयोगोपजीविनि प्रसङ्ग इति । तदिदं सञ्जगृहु:—' [4]धर्मधीमा(र्मा?)नमेदाङ्गप्रयुक्ति-क्रम-कर्तृभि: । सातिदेश-विशेषोह-बाध-तन्त्र-प्रसक्तिभि: ॥" इति ।

एवं तर्किते कर्मणि सङ्कर्षणकाण्डे चतुर्लक्षण्या तत्तत्कर्माराध्यदेवतैव स्वरूपभेदगुणप्रकर्षै: निराकृष्यत । तत्समाप्तौ च, "अन्ते हरौ तद्दर्शनात्", "स विष्णुराह हि", "तं ब्रह्मेत्याचक्षते तं ब्रह्मेत्याचक्षते" इति विचारयिष्यमाणमुपचिक्षिपे(उपक्षिप्यत) इति तत्त्ववृद्धा:[5]। ततोऽन्तिमे काण्डे सद्वारकमद्वारकं च यथार्हं द्वादशलक्षण्युक्तसर्वधर्मसमाराध्यम् अनन्तरचतुर्लक्षण्यवधारितसर्वदेवतशरीरकं परं दैवतं परीचिक्षिषितम् । तत्र सर्वेषां कारणवाक्यानामयोगान्ययोगव्यवच्छेदेन ब्रह्मणि समन्वय: प्रथमेऽध्याये प्रतिपाद्यते । तदुक्तं **न्यायसुदर्शने**-"व्युदस्याविषयत्वान्यविषयत्वे समन्वय:। वाक्यानां ब्रह्मणि प्राच्या(चाऽ)-ध्यायेनेह प्रदर्श्यते(प्रदर्शित:)॥" इति। तत्र शङ्कितविरोधोद्धूननं द्वितीयेऽध्याये । ताभ्यां स्थापिते ब्रह्मण्युत्पत्तिक्रमात् तृतीयचतुर्थाभ्यां साधनफलशोधनम् । इति विंशत्यध्याय्या: विशिष्टक्रमत्वे दिङ्मात्रम् ।

(कर्मब्रह्मविचारयो: पौर्वापर्यनियम:)

इन्त्वेवमत्र कथं षोडशकचतुष्कपौर्वापर्यम् । व्युत्क्रमेऽपि हि न विरोध: । वेदप्रामाण्यादिकं तु उपजीव्यमपि यथास्थानं शारीरके निबन्धुं शक्यम्। तावन्मात्रं वा संश्रुत्य ब्रह्मचिन्ता स्यात् ; मैवम्--[6]अस्ति ह्यनाद्यभ्यस्ते त्रिवर्गे कर्मकृत् प्रथमम् आदोषदर्शनादभिनिविशत इत्यर्थक्रम: । उभयत्र परिमितापरिमितफलाप्रातप्रतीत्यविशेषेऽपि, "अर्के चेन्मधु विन्देत" इति न्यायात् कर्मसापेक्षविद्याप्रयासतो वरं तन्नैरपेक्ष्य-(तन्निरपेक्ष?)निर्धूतविकल्प-तत्समफलकर्मचिन्ता प्रथममिति च । यज्ञादिपदार्थसापेक्षश्च तदङ्गकवाक्यार्थ[धी]बोध:। विद्याभेदेषु तत्र तत्र यज्ञतदवयवदृष्टिविधिविमर्शश्च दृष्टिविशेषणनिर्धारणापेक्ष:। इष्टकचितादिदृष्टान्त-

1 केचित् प्राभाकरा: श्रुतिलिंगादिप्रमाणातिरिक्तमुपादानाख्यं प्रमाणमत्र विचार्यम्। तेन शेषत्वविशेषोऽप्येतदध्यायार्थ इति वदन्ति । शास्त्रदीपिकाव्याख्याने सोमनाथीये (4-1-1 अन्ते)।
2 इमानि क्रमनियामकप्रमाणानि । 3 प्रयुक्तिशक्तिमदिति । अनुष्ठेयेत्यर्थ:। 4 धर्मधी: = धर्मजिज्ञासेत्युपक्रान्तधर्मनिर्णय: मानादिभिर्द्वादशाध्यायप्रतिपादितैर्भवतीत्यर्थ: । 5 इमे आनन्दतीर्थीया इति केचित्। तत्तद्ग्रन्थतत्त्वज्ञानिन: केचिदिति वा तत्त्ववित्पदार्थ:। मध्य: काण्डश्च लुप्तस्थितिरित्युक्तं मीमांसापादुकायाम् । नेमानि सूत्राणि जैमिनीयसंकर्षकाण्डस्थानि । विस्तर: परमार्थभूषणे ।
6 अस्तीत्यादि। अत्र,"प्रावण्यं प्राक् त्रिवर्गे" इति अधिकरणसारावलिश्लोको विवृतो भवतीत्यवधेयम् ।
* अन्यतोवातल्लाभादित्येतेन प्रत्याम्नानादिति मीमांसकोक्तस्योक्ति: ।

**तथाहि—प्रथमं तावत्, "स्वाध्यायोऽध्येतव्यः" इत्यध्ययनेनैव स्वाध्यायशब्द वाच्यवेदाख्याक्षरराशेर्ग्रहणं विधीयते ।**

---

विषयश्च दार्ष्टान्तिकोपजीव्याः । कर्मब्रह्मप्रचुरस्वाध्यायभागस्य अनादिसम्प्रदायनियताध्ययनसंस्कारक्रमेण तद्विचारक्रमोऽपि युक्तः । स चात्र मुख्यक्रम एव । कर्माभासनारूपाङ्ग ब्रह्म प्रतिक्रमात् । तथा चोक्तं **न्याय-सुदर्शने**--"कर्मविज्ञानयोर्हेतुहेतुमद्भावसंमतेः । प्राग्भावः कर्मणः सिध्येत् पश्च द्भावोऽपरस्य च ॥ तयोश्च क्रमवत्त्वेन तद्विचारौ च तादृशौ । मुख्यक्रमनयादेव स्यातां सारस्वताङ्गवत् ॥ यथा, "सारस्वतौ भवतः । एतद्वै दैव्यं मिथुनम्" इत्यत्र [1]युगलोत्पन्ने यागद्वये कस्याङ्गानां प्राथम्यमित्यनिर्णये, सरस्वतीयागस्य याज्यानुवाक्याभ्यां प्राथम्ये सिद्धे तत्क्रमेण तदङ्गानामेव प्राथम्यमुक्तम्—'मुख्यक्रमेण वाऽङ्गानां तदर्थत्वात्' इति" इति ।

(शारीरकशास्त्रस्य सार्थत्वम्)

**पूर्वकाण्डप्रसिद्धानां न्यायानामिह सङ्ग्रहात् । ब्रह्मकाण्डो वृथेत्येतत् प्राच्याध्यायेष्वपि [2]स्मर ॥**
**व्युत्पादनमपूर्वाणामाक्षिप्य स्थापनं तथा । अपवादः क्व चचेति सार्थत्वमिह च स्थितम् । २४३**

ननु यदि, "अनावृत्तिश्शब्दात् अनावृत्तिश्शब्दात्" इत्यन्ता मीमांसा; तदा शारीरकस्य विरक्ताधिकारत्वस्वीकारात्, तत्र निर्दोषानन्तफलनिश्चयाच्च न स्वर्गादिफलसाधनानुष्ठाता कश्चित् सिध्येत् । ततश्च काम्यविधीनामननुष्ठानलक्षणमप्रामाण्यं स्यात् ॥ मैवम्—मोहात् विभ्रमाद्वा यः कर्ममात्रं विचार्य विश्रान्तः, यश्च ख्यातिलाभपूजाप्रवचनादिमात्रकाम्यध्ययन्तार्थं चिन्तयेत्, यो वा पश्चान्नियतिवशान्निवृत्तवैराग्यः, ते श्रुतशारीरका अपि प्रवृत्तिधर्मं न जह्युः ।

**पण्डितोऽप्यातुरः कश्चिदपथ्येषु प्रवर्तते । निषिद्धेष्वपि किं नैवं काम्यं प्राज्ञेऽपि सम्भवेत् ॥**
**कथ्यन्ते च महान्तोऽपि कामादूभयभावनाः । क्रममुक्तिश्च केषांचित् तत एवाभिधीयते ॥**

(सशिरस्कवेदाध्ययन-संपूर्णजिज्ञासोपपादनम्)

**प्रकृतस्यैकशास्त्रस्य ब्रह्मचिन्तोद्यमस्य च । क्रमादेश्चोपपत्त्यर्थं तथाहीत्यादि भाष्यते ॥ २४६**

अत्र कर्मविचारात्प्रागपि ब्रह्मविचारः स्यादिति पश्यन् किमध्ययनादपि तस्य पूर्वत्वमिच्छति, उताधीतवेदस्य कर्मनिरूपणात् प्राच्यत्वमिति विकल्पं हृदि निधाय आद्यं निषेधति—**प्रथम**मिति । **'तावच्छब्दोऽध्ययनानन्तर्यस्य सर्वसम्मतिं दर्शयति'** इति **विवरणम्** । एतेन विचारस्याध्ययनानन्तरभावित्ववत् व्याख्येयस्यैकविधिसिद्धाध्ययनसंस्कारगोचरनियतक्रमैकप्रबन्धत्वम्, अध्ययनस्य विधिबलात् कृत्स्नस्वाध्यायविषयत्वं, तत एव तद्विचारस्य तथात्वं च यथावत् कर्मब्रह्मचिन्तकैः सर्वैः दुस्त्यजमिति व्यज्यते । अवधारणार्थो वा तावच्छब्दः । तेन चाष्टवर्षाद्युपनीतस्यानन्तरं शौचाचारशिक्षणपूर्वकेण नियतेनाध्ययनेन शास्त्रान्तरावसरनिरोधात् तन्मूलत्वेन सम्भावनीयसाधनचतुष्टयादिपूर्ववृत्तान्तरनिरासः । "**स्वाध्यायोऽ**

---

1 युगलोत्पन्ने-युगलरूपेणोत्पन्ने । एकेनैव वाक्येन मिलिततयैव विहिते । 2 जैमिनीयेऽपि अनेकभागवैयर्थ्यं नारायणार्यैस्तथापादि, संग्रहश्चाकारीति मीमांसापादुकादावुक्तम् ।

तत्राध्ययनं किंरूपम्, कथं च कर्तव्यमित्यपेक्षायाम्, "अष्टवर्षं ब्राह्मणमुपनयीत, तमध्यापयेत्" इत्यनेन, "श्रावण्यां प्रोष्ठपद्यां वा उपाकृत्य यथाविधि। युक्तश्छन्दांस्यधीयीत मासान् विप्रोऽर्धपञ्चमान्" इत्यादिव्रतनियमविशेषोपदेशैश्चापेक्षितानि विधीयन्ते।

---

ध्येतव्यः" इति स्वविधि गृह्णता तत्प्रयुक्तिरभिप्रेता। अध्ययनेनाक्षरराशिग्रहणम् इत्यनेन स्वरूपफलं सूचितः। एवकार इह नियमस्य फलितत्वं द्योतयति। यद्यप्यकरणे प्रत्यवायात् निमित्तदृष्टेश्च नित्योऽयमध्ययनविधिः, तथापि दृष्टस्य फलस्य परित्यागायतया तत्स्वीकारात्[1]र्थादध्ययनादक्षरराशिग्रहणे सति अन्यस्य ग्रहणहेतोर्नावकाशः। अध्ययनस्य नियोगार्थत्वं वदताऽपि ह्यर्थात् पुस्तकपाठादि प्रतिषेध्यम्; अत एव हि लिखितपाठकनिन्दाऽपि। स्वाध्यायशब्दवाच्येत्यादिभिस्त्रिभिः स्वशाखैकदेशमात्रं वा शास्त्रान्तरं वा विचार्यो वेदार्थो वा न स्वाध्यायशब्दवाच्य इति व्यज्यते। यथाक्रमाध्ययनं परम्पराप्राप्तं विध्यनुमतमिति च भावः। ग्रहणं विधीयते=फलत्वेन बोध्यते। सम्भवदुपायान्तरं फलमिदमुपायविशेषतो नियम्यत इत्यर्थः। यत [2]एवकारस्ततोऽन्यत्र हि नियमः। यद्यप्यक्षरग्रहणस्य अन्यतोऽपि शक्यत्वान्न स्वरूपतो नियमः, तथापि जपाद्युपयोगोऽध्ययनगृहीतेनैवेति नियमोपपत्तिः। अर्थज्ञाने नियमं वदतामप्येवमेव निस्तारः।

नन्वध्ययनविधिना स्वाध्यायस्याध्येतव्यत्वमात्रं प्रतीयते; न तावता साधनचतुष्टयसंपत्त्यादिहेतुभूतशास्त्रान्तरावसरनिरोधः; ततः पश्चादप्यध्ययनोपपत्तेः; निरर्थं वा, सकृदधीत्य वा शास्त्रान्तरमभ्यस्यतामित्यत्र, अध्ययनस्वरूपकालाधिकार्यादिकं व्यनक्ति तदिति। सर्वसंमतनित्यविधिसिद्धम् आद्याध्ययनमित्यर्थः। किंरूपम्। किं जपादिवत् स्वतन्त्रोच्चारणम्, उतानूच्चारणम्, किं वा अपन्यायमूलगौडाध्ययनवत् पारायणवच्चानावृत्तम्, उतावघातव[3]च्चाऽऽवृत्तमित्यर्थः। "रूपशब्देन फलग्रहणम्" इति तूलिकाया अपि यावद्ग्रहणमावृत्तरूपत्वे तात्पर्यम्। कथमिति इतिकर्तव्यतापरम्। अध्यापनार्थ[त्व?]शङ्कां हस्योपबृंहणीयस्य अध्ययनार्थतया सम्प्रतिपन्नानामुपबृंहणानां च विशेषम् ऐकरस्यावश्यम्भावं चाभिप्रेत्य 'अनेन' 'उपदेशैश्च' इति विभज्य निर्देशः। 'उपाकृत्याधीयीत' इत्येतत्, 'उपनीतोऽधीयीत' इति श्रुतितात्पर्यक्लृप्तेः स्थापकम्। उपनीतस्य ह्यध्ययनार्थतयोपाकर्मादि निर्दिश्यते। युक्तः अवहितः, व्रतादियुक्तो वा। अर्धं पञ्चमं येषां ते अर्धपञ्चमाः। आदिशब्देन, "अत ऊर्ध्वं तु छन्दांसि शुक्लेषु नियतः पठेत्। वेदाङ्गानि च सर्वाणि कृष्णपक्षेषु संपठेत् ॥" इत्यादीनि प्रागुक्तसाङ्गाध्ययनानुगुणवचनानि गृह्यन्ते। व्रतविशेषाः सोपाकृतयः प्राजापत्यसौम्यादयः। नियमविशेषाः शुक्लकृष्णपक्षार्धपञ्चममासादिविभक्ताङ्गाङ्ग्यध्ययनकालभेदविषयाः, शूद्रसमीपे नाध्येतव्यमित्याद्युक्तदेशादिविषयाश्च।

ननु "उपनयीत, तमध्यापयेत्" इति श्रुत्या आचार्यकर्तव्यताङ्गत्वे कथमध्ययनापेक्षितविधिः?

---

1 तत्स्वीकारात्—दृष्टफलस्वीकारात्। निमित्तश्रवणे तदर्थविहितमध्ययनं सकृदनूच्चारणरूपमेव पर्याप्तम्। नित्यत्वात् सर्वकार्यस्यास्यैवाक्षरराशिग्रहणार्थत्वसंभवात् अर्थात् अन्यस्य पठनादेर्हेतुत्वाकल्पनेन फलपर्यन्तानूच्चारणसमुदायविधिरिति। 2 यत एवकार इति। यदर्थवाचिपदानन्तरमेवकार इत्यर्थः। 3 चकारो न स्यात्। अपरसमुच्चयो वा। अन्यदृष्टान्तार्थप्रयुक्तपदशेषो वा।

**एवं सत्सन्तानप्रसूतसदाचारनिष्ठात्मगुणोपेतवेदविदाचार्योपनीतस्य व्रतनियमविशेषयुक्तस्य आचार्योच्चारणानूच्चारणरूपमक्षरराशिग्रहणफलमध्ययनमित्यवगम्यते ॥**

कथं चात्रोपात्तश्रुत्यादेरपि शास्त्रान्तरावसरनिरोधादिसिद्धिः? इत्यत्राह-**एव**मिति। प्रदर्शितश्रुतिस्मृतिसहकृतस्वविधिसिद्धसाङ्गाध्ययनविधानप्रकारेणेत्यर्थः। '**अभिजनविद्यासमुद्देतम्**[1]' इत्यादिभिराचार्यगुणग्रहणात् नाध्यापनविधिपरत्वं शङ्क्यम्, ऋत्विग्गुणोक्तिन्यायादित्यभिप्रायेण **सत्सन्ताने**त्याद्युक्तिः। अत्र आचारात्मगुणौ **समाहित**शब्दाभिप्रेतौ। **वेदविदि**ति **विद्यासमुद्देत**त्वविशदीकरणम्। निषिध्यते च अयोग्यात् अध्ययनम्; तद् गुणहानौ प्रतिसमाधीयते च। तथा च, "तमसो वा एष तमः प्रविशति" इत्यादिभिः शिष्यस्य हानिरुक्ता। "**संस्कर्तारमीप्सेत्; तस्मिंश्चैव विद्याकर्मान्तम्**"इत्यादिना च तद्गुणानां माणवकार्थत्वं व्यक्तम्। यथा अध्यापनविधिवादिनामष्टवर्षत्वादिमाणवकविशेषणमाचार्यार्थम्, तद्वत् आचार्यविशेषणं माणवकार्थमिति प्रतिबन्दीसूचनाय **व्रतनियमविशेषयुक्तस्ये**त्यादि उदाहृतम्; षष्ठ्यन्तपदाभ्यामधिकारिस्वरूपेतिकर्तव्यतयोः सिद्धिः। तेन अध्ययनस्याङ्गाध्ययनसाहित्यं शास्त्रान्तरावसरनिरोधकत्वञ्च सिद्धम्। अङ्गाध्ययनस्यापि नियमविशेषत्वात् अष्टवर्षमुपनीतमध्ययनविधयव(वि)(नि)रुद्धं वाक्य। **आचार्योच्चारणानूच्चारण**मित्यनेन स्वतन्त्रोच्चारणं विचारस्याध्ययनशास्त्रार्थानुप्रवेशशङ्का चापास्यते। उपनयनस्य यथा अध्यापनानुगुणशिष्यासत्तिदृष्टफलतयोपकारिका मतान्तरे, तथा अनूच्चारणानुगुणप्रत्यासत्तिरस्मिन् मते स्यादिति च भावः। अस्मिन् प्रथमाध्ययने अवघातन्यायात् सकृदसकृत् द्विस्त्रिरित्यादिविशेषानादरेण यावत्फलमावृत्तेरर्थसिद्धिमभिप्रेत्याह **अक्षरराशिग्रहणफल**मिति। अनेन अक्षरग्रहणकामत्वमधिकारिविशेषणमित्यपि व्यञ्जितम्।

**फलत्वेनाश्रि(श्रु?)तस्यापि तथात्वं वितुषत्ववत्। उपयोगश्च यागादौ ग्रहणस्यापि दुस्त्यजः॥**
**विधितोऽनुज्ञया वाऽर्थज्ञानं फलमिहेच्छता। फलानुबन्धाभिमतत्वं प्रहीयेतेति दुर्वचम्॥**

ये तु पूर्वपक्षे नित्याध्ययनविधौ विश्वजिन्न्यायात् सर्वाविशिष्टं[2] स्वर्गं फलमिति कल्पयन्ति, सिद्धान्ते चार्थज्ञानम्—तेऽप्यनेन प्रतिचिक्षिपिरे। अक्षरग्रहणस्य हि दृष्टस्य सुखाद्यन्यस्यापि अर्थज्ञानादेरिव सुखादिपर्यवसानात् फलत्वं युक्तम्। तदेवम् **अनूच्चारणम्**, **अक्षरराशिग्रहणफलम्** इत्युभाभ्यां किंरूपमिति बुभुत्सितमाद्याध्ययन[3]भावार्थस्वरूपं प्रदर्शितम्। तथाच **विवरणम्**—"एकफलावच्छिन्नक्रियाक्षणनिचये हि धातोर्वृत्तिः, यथा ओदनं पचतीति। इतरथा वर्तमाननिर्देशभङ्गप्रसङ्गात्। प्रारब्धोऽपरिसमाप्तो हि वर्तमानशब्दार्थः। क्षणभङ्गिन्यास्तु क्रियाया धात्वर्थत्वे शब्दप्रयोगात्पूर्वमेव ज्ञातस्य(जातस्य?) क्रियाक्षणस्य नष्टत्वात्, उत्तरस्य च भविष्यत्त्वात् समकालयाज्ञाततया शब्दाविषयत्वात्, च क्षुण्णत्वेऽपि

1 "अभिजनविद्यासमुद्देतं समाहितं संस्कर्तारमीप्सेत्" इति सूत्रं मनसि निधायाऽऽह।

2 येऽवित्युक्ताः भाट्टाः। 2 'स स्वर्गः स्यात् सर्वान् प्रति अविशिष्टत्वात्' इति सूत्रम्। अविशिष्टत्वं साधारणत्वम्। सर्वापेक्षितमिति यावत्।

3 भावार्थः= धात्वर्थः। अक्षरराशिग्रहणपर्यन्तानूच्चारणसमुदायोऽध्ययनमिति भावः।

क्षणध्वंसपात् आदिमध्यान्तानिरूपणाच्च न प्रारम्भपरिसमाप्त्योः सिद्धिरित्यतो ग्रहणफलावच्छिन्नक्रियाक्षण-निचयेऽध्ययनशब्दस्य वृत्तिरित्याह" इति। अध्ययनस्याचार्योपनीतकर्तृकानूच्चारणत्वोक्तिः, 'उपनयीत', 'तमध्यापयेत्' इत्युभाभ्यामाचार्यकर्तृकोपनयनादपूर्वकत्वं विधीयत इति व्यनक्ति ।

(अध्यापनविधिवादिप्राभाकरनिरासविस्तरः)

ननु "अध्यापयेत्" इति वृत्त्युपायनियमार्थत्व(र्थं) स्यात्। मैवम्; अनुपनेतुरपि तदर्थाध्यापनदृष्टेः उपनयनविधानानर्थक्यात्। नापि उपनीतमेवाध्यापयेदिति कर्म(क्रम)नियमोऽपि; तथाप्यष्टवर्षं ब्राह्मण-मित्यादेरनपेक्षितवचनत्वप्रसङ्गात् । अन्यथैमिह तदुपदेशस्त्वसङ्गत एव । न चात्र उपनीतौ नियमः शक्यः; प्रा(तत्प्रा)पकान्तरादृष्टेः ॥ स्मृतिर्दृश्यत इति चेन्न; अष्टवर्षोक्तेरनुपयोगादेव । न चात्र वृत्त्युपायद्वयोक्तिः; उपनयनस्य तदुपायत्वेनापरिसंख्यानात् । तथात्वेऽपि प्रापकाभावेन नियमानुप पत्तिरुक्तैव [दत्तोत्तरत्व च] । अतोऽध्ययनापेक्षितविधिरेवायम् । प्रयोजके चात्र विधिः 'याजयेत्' इतिवत् स्यात् । अध्यापनमपि हि याजनवत् वृत्त्यर्थतया प्राप्तत्वान्न विधेयम् । तदत्र, 'अष्टवर्षो ब्राह्मणः स्वाध्यायग्रहणकाम उक्तप्रकाराचार्योपनीतस्तदुपगत्या यथोक्तव्रतनियमवान् अधीयीत' इति सोपबृंहणाऽऽ-ध्ययनशास्त्रार्थस्थापना । अत एव अध्ययनविधौ नियोज्याश्रवणादन्यप्रयुक्तानुष्ठानत्वक्लृप्तिरयुक्ता । अध्यापन-विधावप्यश्रवणाच्च । क्लृप्तेश्चोभयत्राविशेषात् । न चेह तत्क्लृप्तिः; ब्राह्मणमित्यादेः प्रजाकामादिवत् विभक्तिविपरिणाममात्रेण तत्सिद्धेः । 'विप्रोऽधीयीत' इति स्मृत्यनुग्रहाच्च ॥ बालस्य स्वाधिकाराज्ञानात् न स्वविधिप्रयुक्तिरिति चेन्न; निषादस्थपतिन्यायादन्यैस्तदभिज्ञैरनुष्ठानोपपत्तेः । हितैषिण एव हि बालादीना-मविदितस्वाधिकाराणां जातकर्मादिसंस्कारानपि स्वयंविदितोपयोगाः कुर्वन्ति; अध्ययने तु बालस्याप्याप्त-प्रेरणादिभिः साफल्यानुमानात् प्रवृत्तिर्युक्ता ।

**नित्यमध्ययनं [1]काम्यप्रयुक्तमिति वादिनाम् । कथं तत्र नियोगस्य कृत्युद्देश्यत्वलक्षणम् ॥**

**प्रबुद्धानां स्वविधिनाऽबुद्धाना(ऽप्यन्येषा ?)मन्यतस्त्विति ।**

**प्रयुक्तिभेदक्लृप्तौ च स्यादर्धजरतीयता ॥ २५० ॥**

यत्तु—'निस्तीर्णाध्ययनदुःखे माणवके विचारात्पूर्वमध्ययनविधेरधिकारपर्यवसानाय दृष्टमर्थज्ञानं [2]विषयसाध्यप्रयोजनतया स्वीक्रियते' इति—तदपि मन्दम्; अध्ययनस्यान्यतः[3]सिद्धौ तदप्रयोजकेन [4]सिध्यता कार्येण तस्य प्रयोजनान्तरक्लृप्तेरयोगात् नित्यान्तरवदस्यापि ते नियोगमात्रप्रयोजनत्वोपपत्तेः॥

1 काम्यप्रयुक्तं = कामिनियोज्यकत्वाभाववत्; कामयननुष्ठितम् । 2 कृतिविषयो धात्वर्थो विषयशब्दवाच्यो गुरुमते । 3 अन्यतः = अध्यापनविध्यादिना । 4 अप्रयोजकेन सिध्यता = अप्रयोजकभूतेन, कार्येण = नियोगेन । 5 अतः तत् अर्थज्ञानं विध्यननुज्ञातमेव स्वयं शब्दसामर्थ्येन उत्पादितं रागाद्विचार्यं निष्पादितमपेक्षितत्वादनुष्ठाने उपयुज्यत इत्यर्थः । पाठान्तरम्, 'अर्थत-स्तदनुज्ञातम्' इति । तदाऽपि तत् = अर्थज्ञानमेव अनुज्ञातत्वाभ्युपगमेनोक्तमिति भाव्यम् । अनु-ज्ञाया निरस्तत्वादिति वक्ष्यति । यथोक्तं सेश्वरमीमांसायाम्, स्वतश्शक्तौ सत्यां किमनुज्ञयेति ।

दृष्टत्वादन्यदप्यनुज्ञातमिति चेन्न ; आनुषङ्गिकस्य लाभपूजादेरत्र विध्यनुज्ञातत्वेन स्वीकारप्रसङ्गात् । न च—धर्मानुष्ठानोपयुक्ततयाऽर्थज्ञानमेव विधिरनुजानाति, नान्यदिति वाच्यम् ; धनादेरपि तदुपयुक्तत्वेन तस्याप्यनुमतिप्राप्तेः ।

**सर्वविध्युपकारित्वमर्थज्ञानस्य संभवेत् । नैतावता विशेषेण दृष्टमन्यदुपेक्ष्यते ॥ २५१ ॥**
**धनादेरुपकर्तृत्वं स्वशक्त्यैवेति चेन्मतम् । अर्थज्ञानं च तद्वत् स्यात्, न विधिप्रवशंवदम् ॥**
**अतस्तदननुज्ञातं शब्दशक्त्यैव भावितम् । सापेक्षैर्यागदानादिनियोगैरुपजीव्यताम् ॥ २५३**
**अपि चैकस्य वैरूप्यं [1]विध्यनुज्ञात्मकत्वतः । प्रधानगुणकर्मत्वविषये(विषया?) च प्रसज्यते ॥**

तस्मादध्ययनारम्भवेलायामेव माणवकस्य हिततमाचार्यादयोऽभिसन्धाय [2]परबुद्धे(परबुद्धै)(परवृद्धै ?)-रुपदिश्य वा तत्र प्रवर्तका इति युष्मदस्मदादिष्वपि वृत्तान्तः । न पुनः, अन्यस्याऽऽचार्यकं मया भावनीयमिति बुद्ध्या कश्चित् प्रवर्तमानो दृश्यते । शिक्षयन्तश्च हितैषिणो बालस्यैवागामि फलं व्यपदिशन्ति । छान्दोग्ये च, "ब्रह्मचर्यं भगवति वत्स्यामि; उपेयां भगवन्तम्" इति जाबालो गौतममाह । तेन च प्रत्युक्तम् , "समिधं सोम्य ! आहर । उप त्वा नेष्ये" इत्यादि । अतः शिष्यार्थमेवाऽऽचार्यः प्रवर्तते ; ततस्तु वरादिकं तेन प्राप्यमिति सिद्धम्। अत एव द्रव्यार्जनादिलुब्धाचार्यरागप्रयुक्तमध्ययनमिति यत् कैश्चिदुक्तम् , तत् स्वविधि-प्रयुक्त्यसम्भवेऽप्यध्यापनविधिप्रयुक्तिस्तावदयुक्तेति स्थापयितुम् । न हि माणवकस्य प्रयोजनमबोधयित्वा तत्प्रवर्तन-तन्मूलद्रव्यार्जनादिसम्भवः । अन्यथा हठात्प्रवृत्तिराचार्यस्य स्यात् । अतः साङ्गाध्ययनविधौ कण्ठोक्तो [3]विप्रादिः स्वहिताभिसन्धिरधिकर्तेति नान्यतः प्रयुक्तिः ।

एतेन आचार्यकरणविधिप्रयुक्त्यनङ्गीकारे क्रतुविधिप्रयुक्तेरप्यवश्याश्रयणीयतया तत्तत्फलकाम-शूद्रादेरप्यध्ययनाधिकारः स्यादिति कैश्चिदुक्तं निरस्तम् । आधानवत् नियतकर्तृकेण स्वविधिनैव अध्ययनस्य प्रयुक्तेः । अध्ययनविधावधिकाराश्रवणचोद्यमपि वैदुष्यवत् दृष्टस्याक्षरग्रहणस्य फलत्वोक्त्या प्रत्युक्तम् । उप-नीयेत्यादिस्मृतिरपि नाध्यापनं विधत्ते ; नाप्याचार्यकं तत्फलत्वेनोपादत्ते ; अन्यतः प्राप्तविशिष्टाध्यापना-नुवादेनाऽऽचार्यशब्दव्युत्पादनपरत्वात् उपाध्यायादिशब्दव्युत्पादनवत् । न ह्यत्र तदतिरिक्ततात्पर्य-क्लृप्तिहेतुः । न च [4]आचार्यकमेकमन्यादृशम् , मानाभावात् ॥ [5]निमित्तान्तरादृष्ट्या तत्क्लृप्तिरिति चेन्न—सनियमकोपनयनाध्यापनात्यन्तायोगव्यवच्छेदमेलकस्य निमित्तस्य दृष्टेः । अत एव उपनयनादे-

---

1 अध्ययनस्य नित्यत्वे विधिः; फलार्थत्वे अनुज्ञा । स्वाध्यायप्राप्त्याद्यर्थत्वे गुणकर्मता, स्वर्गार्थित्ववत् अर्थज्ञानार्थत्वे प्रधानकर्मतेति वैरूप्यमित्यर्थः । अतो नार्थज्ञानमुद्देश्यमिति ।

2 परबुद्धेरिति आन्ध्रलिपौ । प्रकृष्टबुद्धिं माणवकं प्रतीत्यर्थः । परबुद्धैरित्यन्यः पाठः । तत्र परवृद्धैरिति स्यात् । ज्ञान्यन्तरमूलमुपदिश्येत्यर्थः । प्रबुद्धैरित्यादिपाठो वा । स्थितमपि निरूढम् ।

3 विप्रोऽधीयीत इत्युक्तविप्रक्षत्रियादिः । 4 आचार्यकमेकम्—आचार्यकमात्रम् । एकमिति अध्यापकत्वादिव्यावृत्तये । अन्यादृशम्—अध्यापनविधिमूलकादृष्टरूपम् । 5 निमित्तम्=प्रवृत्ति-निमित्तम् । उपनयनादिक्रियोत्तरकालयोरपि प्रवृत्तिनिमित्तरक्षणाय तदुपलक्षितत्वं वक्तव्यम् । उप-लक्षितत्वमत्यन्तायोगव्यवच्छेद एव । मेलकः मेलनं संबन्धः। तथाऽमरकोशात् । तन्मेलकः तद्वत्त्वम् ।

त्तरकालेऽध्युपाध्यायादिनवात् आचार्यशब्दप्रयोगोपपत्तिः । पूर्वं त्वनागतावेक्षणस्य [1]दुःशकतया निमित्त(ता?)ज्ञानसन्देहाभ्यामप्रयोगः । अपिच स्मृतेरत्र शब्दव्युत्पादनमात्रपरत्वे वृद्धव्यवहार एव मूलं दृष्टम् ; आचार्यकरणविध्यर्थत्वे तु अलौकिकार्थश्रुतिमूलत्वं कल्प्यम् ; क्लृप्तकल्प्ययोश्च विरोधे क्लृप्तमेव ग्राह्यम् । त्वादिश्रुतिश्चात्र, "दर्शपूर्णमासाभ्यामिष्ट्वा" इत्यादिवत् अनङ्गत्वेऽपि सूत्रोक्तसमानकर्तृकत्वादि[2]साधर्म्य(?)मात्रेण घटते ।

ननु समानकर्तृकत्वस्य त्वस्यात् बाधकाभावाच्चैकप्रयोगतयाऽङ्गित्वसिद्धिः स्यात् ; तत्र—

[3]त्वाश्रुतेः स्मृतिसंस्थत्वादनुवादतयाऽपि च । श्रुतिस्थं लिङ्गमेवात्र बलीयो ह्यविलम्बतः ॥

ब्राह्मणमिति माणवकैकसंस्कारतया श्रुतमुपनयनं प्रयोज्यप्रयोजकव्यापारतया अध्ययनाध्यापनयोर्द्वयोः फलवतोः सन्निधावपि, कर्मस्थतया अन्तरङ्गलिङ्गादुपनीतगताध्ययनाङ्गमेव । अन्यार्थत्वे तु प्रमाणं न स्यात् । एवं श्रौतलिङ्गतोऽध्ययने विनियुक्तस्याध्यापनाङ्गत्वकल्पनौ विनियुक्तविनियोगविरोधः ; न हि विलम्बद्वयेन स्मृतिस्था त्वाश्रुतिः श्रौतं लिङ्गं बाधितुं क्षमा । स्मृतिः समूलम्, अनूक्तिः पुरोक्तिमपेक्षत इति प्रतिरोधात् ।

(उपनयीतेत्यात्मनेपदस्य कर्त्रभिप्रायनिमित्तत्वायोगः)

ननु "स्वरित...." इत्यादिविहितादात्मनेपदादुपनयनमुपनेतृगताध्यापनाङ्गं स्यात् ॥ न स्यात् ; सम्माननादिसूत्रविहितत्वात् ; 'अकर्त्रभिप्रायार्थोऽयमारम्भः' इति शाङ्करः ॥ कर्त्रैव फलान्वयः कर्त्रभिप्रायत्वम्, अकर्त्रभिप्रायत्वं तु नियमाभाव इति चेन्न–"आदधीत" इत्यत्र, "स्वरित" इत्यादिसूत्रोक्तात्मनेपदेऽपि फलस्योभयान्वयात्[4] । न च क्रियाफलस्य चेतनद्वयेऽनन्वयस्तत् ; "जायापती अग्निमादधीयाताम्" इत्यत्रापि तद्दृष्टेः ॥ कर्तृव्यतिरिक्तचेतनेऽनन्वयस्तदित्यपि निरस्तम् । प्रामाणिकदृष्ट्या सर्वेषु शास्त्रार्थेषु अकर्तरि आराध्ये प्रीतिरूपफलश्रुतेः आराधनादिष्वात्मनेपदलोपप्रसङ्गात्, "अभिचरन् यजेत" इत्यादौ अकर्तृप्येऽपि तदुचितफलसम्मतेश्च । "ऋत्विजो वृणीते" इत्यत्र च वरणीयेष्वपि फलं सिद्धम् । 'अव्यवहितफलस्य क्रियाफलशब्देन विवक्षितत्वात् तस्य कर्त्रन्वयः कर्त्रभिप्रायत्वम् ; सम्माननादिसूत्रं तु व्यवहितफलस्य कर्त्रन्वयार्थं स्यात्' इत्येतदपि दत्तोत्तरम्, "आदधीत" इत्यादावेव व्यभिचारात् । अस्ति हि अव्यवहिताग्निसंस्कारव्यवहितमाधातरि आहिताग्नित्वं फलम् ॥ ननु आगामिनित्यकाम्यादिप्रयोगोपजीव्य-संस्कृताग्निसिद्धिरेवाऽऽधातुः फलमिति न व्यवहितफलान्वयः ॥ नैवम् ; अतोऽप्युपनयन

1 दुःशकतयेति । अत एव भविष्यतः अदृष्टरूपाचार्यकस्याप्यनिश्चितत्वादाचार्यशब्दप्रयोगः प्राभाकरमते दुष्कर इति । 2 साधर्म्येत्यधिकम् । समानकर्तृकत्वस्य साधर्म्यरूपत्वेऽपि पूर्वोत्तरकालसंबन्धस्य आदिपदग्राह्यस्य न तथात्वमिति । यद्वा समानकर्तृकत्वादितः साधर्म्यं समप्रधानत्वमित्यर्थः । 3 त्वाश्रुतेरिति कारिकाव्याख्यानमेव ब्राह्मणमित्यादिवाक्यम् । तदन्तिमवाक्यं कारिकार्थकथनरूपम् । तदुक्तमेव विलम्बद्वयम् । ननु स्वरितेति । प्राभाकरखण्डनप्रकार इह स्थितः सर्वः मीमांसापादुकायां (72–80 श्लो) व्याख्यातश्च विशदमवगन्तव्यः । 4 उभयान्वयादिति । आधानस्याग्निसंस्कारकत्वात् अग्नौ फलान्वयः, आधानजन्याग्निमत्त्वं पुरुषस्य चेति उभयत्रान्वय इति ।

**अध्ययनश्च स्वाध्यायसंस्कारः। "स्वाध्यायोऽध्येतव्यः" इति स्वाध्यायस्य कर्मत्वावगमात्।**

संस्कृताध्येतृसिद्धिरेवोपनेतुः फलमिति सम्माननादिसूत्रवैयर्थ्यप्रसङ्गात्॥ अव्यवहितफलस्य कर्त्रभिमत-त्वानभिमतत्वाभ्यां सूत्रद्व(य)[म्य]साफल्यमिति चेन्न—आचार्यकर्थिनोऽप्युपनेतुरुपनेयसंस्कारानभिमत्य-योगात्। अतः [1]कर्त्रन्वयसिद्ध(सिद्ध्यर्थ)मेवात्रात्मनेपदम्। एवमध्यापयेदित्यनेनापि न फलस्य कर्तृ-गामित्वम्। तदेवं न विध्यन्तरप्रयुक्तमध्ययनम्।

(विचारविषये प्राभाकरोक्तनिरासः)

विचारश्च किमध्ययनविधिना प्रयुज्यते, उत अध्यापनविधिना; न प्रथमः—[2]विषयफलानु-ज्ञाया निरस्तत्वात्। न द्वितीयः, यावच्छ्रुतानतिक्रमणात्।

**स्वाध्यायं ग्राहयित्वा हि गुरुणाऽपि विरम्यताम्। दयादिप्रेरितत्वे तु प्रागप्येवमिति स्थितिः॥**

**(प्राभाकरनिरसननिगमनम्)**

**अतो गुरुमते कृत्स्नमीमांसैव न सिध्यति। इति मत्वा विधूतं तत् प्रकृतस्थापनार्थिभिः॥**

**(अध्ययनस्य स्वाध्यायार्थत्वम्)**

यद्यप्येवमक्षरग्रहणावधि शब्द(?)न्तरावसरो निरुद्धः, तथापि गृहीताक्षरस्यासौ स्यादिति शङ्काया-मुत्तरत्रापि तन्निरोधार्थमध्ययनस्य नियोगविषयत्वपक्षप्रतिक्षेपेण प्रागसूचितं स्वाध्यायसंस्कारत्वं व्यनक्ति—**अध्ययनमिति**। चः शङ्कानिवृत्त्यर्थः। यद्वा भिन्नक्रमः [3]असकृदनूच्चारणत्वादिना सह संस्काररूपत्वस्य समुच्चयार्थः। "संस्कारः पुंस एवेष्टो [4]मन्त्रणप्रोक्षणादिभिः" इति वदद्भिरध्ययनसंस्कारोऽपि कर्तुरेवेति स्वीकृतः। तेन विवक्षितासिद्धिरिति शङ्कां निवर्तयितुमाह—**स्वाध्यायेति**। उक्तं च बृहट्टीकायाम्—"संस्कारगणनायां च युक्तैवाक्षरसंस्क्रिया। स्वाध्यायो हि स्फुटं कर्म; साक्षात्संस्क्रियते हि सः" इति।

**पुरुषातिशयाधानं प्रोक्षणाद्यैश्च ये विदुः। तेऽपि [5]संस्कारकर्मत्वं तत्र तत्र न तत्यजुः॥२५८**

**तत्तत्कर्मक्रियाजन्यः संस्कारः पुरुषाश्रयः। तत्तत्सहकृतं कार्यं करोतीत्यवधारणात्॥ २५९**

अत्राध्ययनस्य स्वाध्यायसंस्कारत्वे [6]कर्मत्वं हेतुरिति न वैयधिकरण्यम्। अयं भावः—अत्र हि तव्यप्रत्ययस्यार्थान्तरं न घटते ततश्च द्वितीयाश्रुतेस्तव्यादेर्वा कर्मार्थत्वे विशेषाभावात् कारकाणां क्रियार्थत्वेऽपि [7]द्रव्यनिष्ठस्य भावार्थस्य द्रव्यार्थत्वाद्व्रीहन्त्यादिनयोऽत्र युक्त इति। सिद्धं चावहन्त्यादेः

1 कर्त्रन्वयसिद्धमिति। 'व्यवहितमव्यवहितं वा फलं यत्र कर्त्रभिप्रायम्, तत्र स्वरितेत्यात्मनेपदम्' (से. मी.)। 2 विषयफलेति। विषयसाध्यप्रयोजनेति प्रागुक्तम्। विषयो धात्वर्थः। फलानुज्ञायाः—विधिना अर्थज्ञानमनुज्ञातमित्यस्य। 3 अध्ययनस्यासकृदनूच्चारणत्वं पूर्वभाष्यवाक्यविहितम्। 4 अस्यां कुसुमाञ्जलिकारिकायां प्रोक्षणाभ्युक्षणादिभिरिति तत्रत्यः पाठः। मन्त्रणं जलाद्यभिमन्त्रणमिति तत्रैव व्यक्तम्। 5 संस्कारकर्मत्वं क्रियायाः कर्मकारके फलजनकत्वम्; प्रोक्षणजन्यजलसंयोगाश्रयो व्रीह्यादिरित्युक्तेः। 6 कर्मत्वमिति अध्ययनस्यात्मनिष्ठत्वात् वैयधिकरण्यात्। यद्यपि कर्मत्वस्य स्वाध्यायनिष्ठत्वात् हेतुः अध्ययने पक्षे नास्ति, अथापि स्वाध्यायस्य सकर्मत्वमित्युक्तौ स्वस्य स्वाध्यायकर्मकत्वमुक्तप्रायम्। स्वाध्यायरूपपक्षे संस्कार्यत्वसाधनमप्युपरि वक्ष्यते। 7 द्रव्यनिष्ठस्य=द्रव्यकर्मकस्य।

**संस्कारो हि नाम कार्यान्तरयोग्यताकरणम् । संस्कार्यत्वं च स्वाध्यायस्य युक्तम् ; धर्मार्थ-काममोक्षरूपपुरुषार्थचतुष्टय-तत्साधनावबोधित्वात् ; जपादिना स्वरूपेणापि तत्साधनत्वाच्च॥**

तत्तद्द्रव्य[स्य][1]संस्कारत्वं [2]भेदलक्षणे, "तानि द्वैधं गुणप्रधानभूतानि" इति । स्वाध्यायस्य इत्यनेन[3] निर्वर्त्यत्वाद्यनुपपत्तिः सूचिता । न खल्वसौ निर्वर्त्यः ; अनादिसिद्धक्रमत्वात् ; यथापूर्वोच्चारणे वाक्यनिर्माण व्यवहाराभावाच्च । नापि विकार्यः ; दुग्धदध्यादिवदन्यथाभावादृष्टेः । नापि प्राप्यत्वमात्र[4]रूपः ; उपयोगान्तरवत्त्वे तदयोगात् । अतः परिशेषसहकृतकर्मत्वावगतिः संस्कार्यत्वे हेतुरिति ।

ननु कर्मत्वावगमेऽपि श्रुत्यादिभिरविनियुक्तस्याद्रव्यस्य स्वाध्यायस्य कथं संस्कार्यत्वमित्यत्राह— **संस्कार** इति । **हिः** प्रसिद्धौ । **नाम**शब्दः[5] परसम्मतिपर्यन्ते तत्प्रकर्षे ; [6]स्वाध्यायसम्भावितभाव्युप-योगिसंस्काराभिप्रायेणात्र **कार्यान्तरयोग्यताकरणो**क्तिः । यद्वा कस्यचित् सतोऽतिशयाधानं संस्कार इति लक्षणमत्र विवक्षितम् । ततश्च भूतोपयोगिन्यपि तदनुगुणोपयोगविवक्षयाऽत्र **कार्यान्तरयोग्यता**-शब्दः कथञ्चिद्योज्यः । प्रहृता[7] अपि परिधयः तेनैव रूपेण भूतोपकाररूपकार्यान्तरयोग्याः श्रूयन्ते । अयं भावः–न तावत् अविनियुक्तत्वादसंस्कार्यत्वम् ; विनियोगाभावेऽप्युपयोगदृष्ट्यैव संस्कार्यत्वसम्भवात् । अस्ति च, "ऋग्वेदेन होता करोति" इत्यादिभिः सामान्यतो विशेषतश्च विनियोगः । नाप्यद्रव्यत्वात् असंस्कार्यत्वम् ; यथोक्ताध्ययनगृहीतत्वे विरोधाभावात् । ग्रहणविषयत्वादेश्च गुणादावपि सर्वसम्मतेः । चोदितक्रियासाध्यस्येश्वरानुग्रहरूपस्यातिशयस्य स्वाध्यायाधारत्वाभावेऽप्यध्ययनप्राप्ततया [8]आराध्य-बुद्धिसंगृहीतेन तेनैव यथार्होत्तरक्रियायाः शक्तो नियमान्नातिप्रसङ्गः । व्रीह्यादिष्वपि प्रोक्षणादिभिः अतीन्द्रियातिशयो भवतु वा, मा वा ; उक्तन्यायः सार्वत्रिक इति। ननु, "सक्तून् जुहोति", "सुवर्णं भार्यम्" (मी० ४-4-12) इत्यादिषु निर्वर्त्यत्वादिरहितकर्मत्वावगमेऽपि भावार्थस्य न [9]द्रव्यार्थता(संस्कार्यता ?) । तथा, "स्वाध्यायोऽध्येतव्यः", "स्वाध्यायमधीयीत" इत्यादिजपविधावपि कर्मत्वावगतिरविशिष्टा । अतस्तत्रानैकान्त्यम् ; तत्रापि वा असंस्कार्यत्वप्रसङ्ग इत्यत्राह—**संस्कार्यत्वमि**ति । अयं भावः— सक्त्वादीनां भूतभाव्युपयोगासंभवात् , जपादेश्च गृहीताक्षरविषयत्वावश्यम्भावात् , अनेकसंस्कारक्लृप्तौ गौरवात् , जपादिसंस्कारसाध्योपयोगान्तरादर्शनात् , फलश्रवणाच्च [10]तत्र संस्कारपरित्यागः ; न त्विह

1 संस्कारत्वम् द्रव्योद्देशेन विहितत्वम् । 2 भेदलक्षणे = कर्मभेदाध्याये द्वितीये । 3 इत्यनेनेति । स्वपदेन अध्यायपदेन च पूर्वमेव स्थितत्वज्ञापनादिति भावः । 4 अध्ययनेन स्वाध्यायस्य प्राप्यमाण-त्वात् तन्निषेधो न भवतीति मात्रपदप्रयोगः । 5 धूमो हि वह्नि व्याप्य इतिवत् प्रसिद्धेरन्यथापि संभवात् । विधेयस्य संस्कारशब्दार्थतया निविष्टत्वमपीह नामशब्दज्ञाप्यम् । 6 भूतोपयोगप्रतिपत्ति-कर्मणि अव्याप्तिशंकायामाह स्वाध्यायसंभावितेति । 7 प्रहृताः = अग्नौ हुताः । 8 मीमांसकैरी-दृशक्रियाणां संस्कार्यद्रव्येषु अतिशयरूपादृष्टजनकत्वमिष्टम् । अध्ययनस्थले तु अवहननादाविव दृष्टफलार्थत्वमेव मन्यते । अत्र तु अध्ययनस्य नित्यत्वादकरणे प्रत्यवायाच्च ईश्वरानुग्रहोऽपि स्वीकार्य इति एवं स्वरसं योजितम् । 9 पूर्वं परिशेषसहकृतकर्मत्वावगतिः संस्कार्यत्वे हेतुरित्युक्तत्वात् संस्कार्यतेति पदं युक्तम् । द्रव्यार्थता ह्यन्यत्रापि । 10 तत्र = सक्तुहोम-सुवर्णभरण-स्वाध्यायजपादौ ।

तथा स्यात । तथापि [1]अवगतकर्मत्वस्य निर्बाधत्वादिति । अत्रैव(वं?) न्यायसुदर्शनम्—
"आद्याध्ययनमिच्छामः संस्कारं [2]कर्मतामितेः । स्वाध्यायस्योपयोगित्वात् फलाश्रवणतोऽपि च ॥ जपादेरपि संस्कारकर्मतेष्येत चेत्, तदा । [3]आद्य तु आद्यन्त?(अन्यत्र ?) सर्वे॰ध्यायानुपयोगात् असंगतिः* । ध्यायानुपयोगादसंगतिः ॥ सर्वत्र कर्मताबाधः स्वाध्यायस्य प्रसज्यते । तेन संस्कार आद्यं स्यादपरे[4] त्वर्थ-कर्मणी(णि) ॥ आर्थवादिकमेवात्र[5] फलं स्यात् रात्रिसत्रवत् ॥ [6]अत्रानीप्सितकर्मत्वं स्वाध्यायस्येष्यते बुधैः । आद्ये त्वीप्सितकर्मत्वं तदर्थैव(र्था च) क्रिया मता ॥ जपादेरपि संस्कारकर्मत्वे सर्वसंस्कारसंस्कार्यस्य(साध्य) स्वाध्यायस्यार्थावबोध एव भाव्युपयोगः स्यात् । तस्य च [7]अनधिकृतकर्मभागे हुमादिषु च वैयर्थ्यात् सर्वाणि अध्ययनानि अर्थकर्माणि स्युः तदा स्वाध्यायस्य कर्मताभङ्गः स्यात् । तस्माद् याध्ययनमेकमेव संस्कारः" इति।

ननु अत्राप्युपयोगादर्शनादयुक्तिः सिद्धा; संस्कार्यत्वादेवोपयोगकल्पनावन्योन्याश्रयणात् । आहुश्च—'संस्कारविधिश्च न संस्कार्यं विनियुङ्क्ते; प्रमाणान्तरावसितोपयोगस्य संस्कारपर्यवसायी तु संस्कारविधिर्न संस्कार्यस्य कार्यं कल्पयति" इति; तत्राह—धर्मार्थकामेति । उपयोगादर्शनाद्धि सक्त्वादौ कर्मश्रुतिबाधः; स्वाध्यायस्य तु भाविदृष्टादृष्टविविधप्रयोजनदर्शनात् सक्तादिवन्नासंस्कार्यत्वं युक्तमिति भावः । अत्र पुरुषार्थचतुष्टयस्य वेदवेद्यत्ववचनं सर्वभागानुवृत्तप्रयोजनसामान्यदर्शनेन कृत्स्नस्य मीमांसितव्यत्वख्यापनार्थम्; बाह्यागमोक्तानां तेष मश्रद्धेयत्वार्थं च; अर्थकामतदुपायानां केषाञ्चिल्लोक-सिद्धत्वेऽपि त्रलोक्यविभवादिरूपयोरर्थकामयोस्तत्साधनानां च वेदवेद्यत्वं युक्तम् । लौकिकार्थकामयोरपि कारीर्यादिषूपायेषु शास्त्रव्यापारः सिद्धः; धर्मस्तु द्रव्याद्यात्मना प्रत्यक्षोऽपि धृतिसाधनत्वेन शास्त्रमेयः । यथाहुः—"श्रेयस्साधनता ह्येषां नित्यं वेदात् प्रतीयते । तद्रूप्येण च धर्मत्वं तस्मान्नेन्द्रियगोचरः" इति । मोक्षश्च नासदादिप्रत्यक्षः; [8]आत्मा कदाचित् समस्तविशेषगुणशून्यः, अनित्यविशेषगुणवत्त्वात् घटवदित्यादीनां तु विपक्षे बाधकाभावान्नानुमानत्वम्; मुक्तिपरशास्त्रोपजीवनेन विपक्षे बाधकोक्तौ च अनुमानवैफल्यम्; निरतिशयानन्दब्रह्मानुभवात्मनि तु मोक्षे हेतुप्रवृत्तेर्न प्रसङ्गः; तद्विपरीतसाधने तु आगमबाधः । अपि च जीवः कदाचित् समस्तविशेषगुणशून्यो न भवति; आत्मत्वात् ईश्वरवदित्यपि वक्तुं शक्यम् ॥ अत्र अर्थस्येव धर्मस्यापि समीहितसाधनतया पुमर्थस्य सतो धर्मविशेषः साधनम्; अतः

1 तथाऽपि=निर्बर्त्यत्वाद्यभावेन संस्कार्यत्वोपगमेऽपीत्यर्थः । 2 कर्मतामितेः=कर्मत्वावगमात् । 3 आद्य तु—आद्यन्त इति पाठद्वयमशुद्धम्; अन्यत्रेति पाठ्यम् । अक्षराकृतिसाम्याच्च । *असंगतिरिति अधोनिर्दिष्टपाठ एव संगतः । न तु असंस्कृतिरिति । 4 अपरे=जपधारणरूपे अध्ययने अर्थकर्मणी=प्रधानकर्मभूते । न तु तयोः संस्कारकर्मत्वम् । अर्थकर्मणि इति सप्तम्यन्त-पाठोऽशुद्धः । 5 अत्र=जपाध्ययने धारणाध्ययने च । 6 जपविधिस्थले धारणाध्ययनस्थले च संस्कार्यत्वाभावे स्वाध्यायस्य कर्मतया निर्देशः कथमित्यत्राह अत्रेति । तथायुक्तञ्चानीप्सित-मित्युक्तं कर्मत्वमेव । फलमेवेप्सितकर्म । सक्तून् जुहोतीतिवत् करणत्व एव पर्यवसानमिति भावः।
7 अनधिकृतकर्म—ब्राह्मणस्य राजसूयादि । 8 पाषाणकल्पदशारूपमोक्षवादितार्किकमतं निरस्यति—आत्मेति ।

सोऽपि तत्साधनशब्दोक्तः। मन्त्रार्थवादयोरपि यथार्हं चतुर्वर्गबोधकत्वं तद्बोधकोपकारकत्वं च ग्राह्यम्।

श्येनेषु वज्रप्रभृतिष्वपि [1]नानर्थचोदना। इष्टस्यारातिभङ्गादेरुपायांशोपदेशतः ॥ २६० ॥
घोरापायान्तरेभ्यश्च लभ्येतात्र निवारणम्। लघुनिष्कृतिनिस्तार्यं ह्यभिचारं प्रचक्षते ॥ २६१
किंचानभिचरन् दुष्टस्तु [2]पतेदित्यपि शिष्यते। तेन धर्मोपयुक्तत्वमाततायिवधे विदुः ॥ २६२

ननु अलौकिकपुरुषार्थादिबोधकत्वं स्मृत्यादावप्यस्ति। अतोऽन्यसाध्ये प्रयोजने किं वेदस्य संस्कारेण? अर्थबोधश्च दुमादौ नास्ति। पुरुषभेदेनानधिगताचिकीर्षितभागयोश्च सन्नप्यसौ अनुष्ठान-पर्यन्तत्वाभावात् नोपयोगी स्यात्। तदिह स्वाध्यायस्यान्य[साध्यप्रयोजनस्य?][3]लभ्योपयोगत्वादध्ययनस्य कृत्स्नस्वाध्यायसंस्कारत्वायोगात् एकदेशसंस्कारस्याशाब्दत्वाच्च, "अध्येतव्यः" इत्यस्य संस्कारविधित्वाभावे नियोगार्थत्वपक्ष एव प्राप्त इत्यत आह–जपादिनेति। आदिशब्देन धारणं गृह्यते। स्वरूपेणापि— न केवलमर्थज्ञानद्वारेणेत्यर्थः। यद्वा अध्यापनमादिशब्दग्राह्यम्, तदा, स्वरूपेणापि धृतस्वरूपमात्रेण चेति यावत्। "ऋग्वेदं धारयन् विप्रः" इत्यादिस्मृतेः। अयं भावः–अध्ययनगृहीतस्वाध्यायसाध्यमेव ज्ञानं विधिभिरुपजीव्यम्। उपबृंहणानां तु न स्वातन्त्र्येण धर्मादिसाधनत्वम्। अस्ति च(?) [4]श्रुतेः(श्रुतिसिद्धम्,?) "वेदाभ्यासेन सततं सत्येन (शौचेन)तपसैव च। अद्रोहेण च भूतानां जातिं स्मरति पौर्विकीम् ॥" इत्यादिप्रसिद्धम् अनन्यसाध्यं जपादिप्रयोजनम्। तेनैवानर्थकानधिकृताचिकीर्षितभागेष्वपि संस्कार्यत्वोपपत्तिः। अपि चैष निरर्थकोच्चारणविषयोऽपि स्वाध्यायस्यार्थपरतां न बाधते; सर्वविधिविरोधेन स्वव्याघातप्रसक्तेरिति। न च उभयार्थत्वे[ऽपि] विनियुक्तविनियोगविरोधः; एकेनैव रूपेणानेकार्थत्वाभावात्। तथा च न्याय-सुदर्शनम्–"स्वरूपेण जपार्थः स्वशक्त्याऽर्थावबोधकः। रूपभेदात् विरोधो न यथाऽग्नेर्दाहभासयोः॥" इति।

तदिहाध्ययनसंस्कृतात् वेदात् अनन्तप्रयोजनसम्भवेन तद्विचारमन्तरेणान्यत्र शास्त्राभासे कः प्रवर्तेतेति तात्पर्यम्।

ननु एवं विदितोपयोगेनाध्येता अर्थज्ञानमपि विधिफलतया स्वीकार्यम्; अविदितोपयोगेन तु अक्षरग्रहणमपि न फलत्वेन प्रतिपत्तुं शक्यम्; अतोऽनुष्ठानं प्रति अव्यवहितोपयुक्तमर्थज्ञानमपि ग्रहणवत् अध्ययनविधेर्दृष्टं फलमस्त्विति शङ्कां परस्तु(क)नोपसंहारव्याजेन प्रतिक्षिपति एवमिति; विधेयस्वरूपफलादि-

---

1 न विहितस्य यागस्यानिष्टसाधनत्वम्; अपितु साध्यस्य अभिचाररूपस्यारातिवधादेरेव।

2 'अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः। क्षेत्रदारापहारी च षडेते आततायिनः।'

3 स्मृत्यादिसाध्यप्रयोजनत्वं प्रागुक्तम्। संस्कृतस्य सर्वस्योपरि उपयोगाभाव इहोच्यते। अतः अलभ्योपयोगत्वादिति युक्तम्। अन्यपदस्थानात् तु उपरि शोधितरीत्या मध्ये घटनीयम्।

4 उपबृंहणीयश्रुतिसद्भावस्य निर्विवादत्वात् अस्ति च श्रुतिरिति तत्साधनं व्यर्थम्; प्रयोजनमेव साधनीयम्; अस्तीत्यस्य प्रयोजनेऽन्वयः; श्रुतिरिति पदं निष्कास्यमिति अभिप्रायाचार्याः। श्रुत्यभावस्थले स्मृत्यादितस्तस्या उन्नेयत्वेऽपि श्रुतिसत्त्वे कथमुपेक्षेति वा तात्पर्यम्। एतदपेक्षया श्रुतिसिद्धमिति स्यात्; उपरि 264 कारिकायां श्रौततत्तत्फलेति वक्ष्यमाणत्वात्। श्रुतिश्च 'यदृचोऽधीते पयसः कुल्या' इत्यादिः न्यायरत्नमालायां 35–कारिकाविवरणे द्रष्टव्या।

**एवमध्ययनविधिर्मन्त्रवन्नियमवदक्षरराशिग्रहणमात्रे पर्यवस्यति ।**

निरूपणप्रकारेणेत्यर्थः । मन्त्रवत्त्वं नियमवत्त्वं च अनुष्ठानस्थं तत्फले गृहीत्वोपचरितम् । **मन्त्राः** काण्डव्रताद्यङ्गभूताः, अध्ययनदशाजप्याश्च "शं नो मित्रः" इत्याद्याः । **नियमाः** [1]प्रागुक्ताः । [2]**एवं मन्त्रवदित्येतत्** दृष्टान्तोक्तिरित्येके—यथा मन्त्रे चोद्यमानमध्ययनमक्षरग्रहणमात्रपर्यवसायीति स्वीक्रियते, तथेहापीति । अपरे तु यथा उपनयनदशोच्चारणीयेषु, उपनीतमात्रस्य समिदाधानादिमन्त्रेषु च, तथेहापीति वेदितव्यमिति । हुमादिवदित्यन्ये; विषहरणादिमन्त्रविशेषवदिति च । **मात्रचा**[3] **पर्यवसानशब्देन च** अक्षरग्रहणात् पश्चात् पूर्वं च विधिविश्रान्तिर्निषिध्यते । अयं भावः—अध्ययनशब्दस्य न तावत् अर्थज्ञानवाचकत्वम्; अव्युत्पत्तेः, "किञ्चिदधीत्य ब्राह्मणः" इत्यादौ च तस्यार्थपरत्वासम्भवात् । विधिविषयमध्ययनं प्रति अव्यवहितसाध्यमभिव्याप्तमवर्जनीयं च फलं दृश्यते । तदन्यस्यापि तत्फलत्वकल्पने गौरवं स्यात् । व्यवहितसाध्यस्यापि फलत्वकल्पने ज्ञानवत् तत्साध्यस्यानुष्ठानस्यापि तत्त्वकल्पनप्रसङ्गः । उत्तरविध्यव्यवहितापेक्षितत्वमपि ग्रहणज्ञानयोः समम् । यदि चार्थज्ञानं कर्मविषयतयाऽऽम्नातम्, तदा तु अन्यथापि निव्यवहितेऽपि तस्मिन् सम्प्रत्ययः स्यात् । न त्वेतदस्ति । अतोऽर्थावबोधे उपयोगितयैव स्वीकार्या इति ।

ननु समन्वयाधिकरणन्यायादर्थज्ञानस्यैव स्वतःप्रयोजनतया फलत्वकल्पनं युक्ता ॥ मैवम्; निरतिशयानन्दब्रह्मप्रतिपादकागमत्वे तदुक्तेः । अत्र तु कृत्स्नाध्ययनफलविमर्शात् । विरूपकल्पनत्वयोगात् ॥ ननु, 'वृद्धवाक्यानि शृणु' इत्यादौ वाक्यश्रवणविधेरर्थधीपर्यन्तत्वं लोके दृष्टमिति चेन्न; वृक्षादिवत् मार्गलक्षणभूतस्य कस्यचिद्वाक्यस्य श्रोतव्यत्वोपदेशे तात्पर्यात् तदभावस्यापि दृष्टेः । किञ्च क्वचिद्वाक्यश्रवणोपदेशस्यार्थपरत्वमगत्या; इह तु न तथा; यथाश्रुते बाधाभावात् । न च वाक्यश्रवणवत् तदनूच्चारणमर्थज्ञानार्थं युक्तम् । [4]आहत्य स्वप्रयोगानुगुणाक्षरग्रहणार्थतैव लोके दृष्टा । ननु, "यो ह वा अविदितार्षेयच्छन्दोदैवतेन मन्त्रेण" इत्यादिश्रुतिभिः, "अविदित्वा ऋषिं छन्दः", "यदधीतमविज्ञातम्" इत्यादिभिः स्मृतिभिश्च विपर्यये दोषोक्त्या अर्थज्ञानमवश्यसम्पाद्यत्वेन स्थापितम् । तदभावेऽध्ययनस्य नैष्फल्यं तत्सद्भावे सर्वपुरुषार्थावाप्तिश्चोच्यते 'स्थाणुरयं भारहारः(वहः) किल भूदधीत्य वेदं न विजानाति योऽर्थम् । योऽर्थज्ञ इत् सकलं भद्रमश्नुते स नाकमेति ज्ञानविधूतपाप्मा ॥" इति । तस्मात् वैधो वेदार्थविचारः ॥ मैवम्—यथा रागप्राप्तस्य [5]ऋतुगमनादेरकरणे दोषः, विधिवत्करणे सन्तत्यादिलाभश्च फलत्वेन स्मर्यते—एवमिहापि स्यात् । विधिवत्समाप्ताध्ययनानुवादेन चार्थज्ञानाभावे दोषं वदन्ति वाक्यानि नार्थधीपर्यन्तमध्ययनं विधातुं क्षमन्ते । तस्मात्, "एतानि मन्त्रे मन्त्रे विद्यात्" इत्येतत्तु प्रयोगकाले प्रतिमन्त्रं प्रज्ञात ऋष्याद्यनुस्मरणपरम् । अत एव अविदितार्षेयत्वादिनिषेधश्च तावन्मात्रविषयः । अतः, "यदधीतम्" "स्थाणुरयम्", "यश्च मीमांसतेऽध्वरम्" इत्यादिभिरर्थज्ञानप्रशंसया स्वतः प्रवृत्तिरुत्तम्भ्यते । एतेन च

1 प्रागुक्ताः = अङ्गाङ्ग्यध्ययनकालदेशदशाव्यवस्थादयः । 2 एवं = मतुबर्थमुखेन विशेषणोक्तिवत् । 3 जानुदघ्नमित्यादाविव मात्रच् इह उपरितनांशव्यावर्तकः । पर्यवस्यतिः प्राभाविफलांशे उपरितनांशव्यावर्तक इति भावः । 4 आहत्य = साक्षात् । 5 ऋतौ भार्यामुपेयादिति विधिः ।

**अध्ययनगृहीतस्य स्वाध्यायस्य स्वभावत एव प्रयोजनवदर्थावबोधित्वदर्शनात् गृहीतात्**

अर्थज्ञानस्यावश्यापेक्षितत्वेन विधावपि नाध्ययनविधेस्तत्पर्यन्तत्वं कल्प्यम्; नैरपेक्ष्यात्, अन्यतः प्राप्ते विधेरौदासीन्याच्च तावत्पर्यन्तधावनेऽपि स्वतः पुरुषार्थपर्यवसानाच्च।

यत्तु[1] कैश्चित् प्रत्यवस्थीयते—अध्ययनविधेरर्थज्ञानपर्यन्तत्वात्, "आचार्यकुलात् वेदमधीत्य यथाविधानं गुरोः कर्मातिशेषेणाभिसमावृत्त्य कुटुम्बे शुचौ देशे स्वाध्यायमधीयानो धार्मिकान् विदधत्" इत्यादिभिः श्रुतिभिः, "अधीत्य स्नायात्" इत्यादिभिः स्मृतिभिश्च आत्मरूपार्थज्ञानस्यापि कर्मार्थतया तत्कर्तृसंस्कारत्वेन विनियोगात्; "द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः", "सोऽन्वेष्टव्यः; स विजिज्ञासितव्यः" इति जिज्ञास्यतयोक्तस्याऽऽत्मनोऽवहन्तव्यव्रीहिवत् स्वरसावगतसंस्कार्यत्वाबाधेन कर्मशेषत्वसिद्धेः, "तत्त्वमसि", "अयमात्मा ब्रह्म" इत्यादिभिः कर्मवश्यस्यैव ब्रह्मत्वोक्तेः, विश्वकर्तृत्वस्य च कर्मण्यारोपपत्तेः, क्लृप्तकल्प्यविरोधे क्लृप्तगृहीतेर्न्याय्यत्वात्, जीवस्य कर्मसु कर्तृतया प्राप्तस्य तदर्थं संस्कारार्हत्वाच्च जीवपरे वेदान्ते सति तदतिरिक्तेश्वरविषयशास्त्रासम्भवात् कस्यैकशास्त्र्यं क्रमश्च कल्प्यत इति—

तदपि **अक्षरग्रहणमात्र**पर्यवसानभाषणात् प्रत्युक्तम्। सूत्रकारोऽपि एतदेव चोद्यम्, "तद्वतो विधानात्" इत्यनूद्य, "अध्ययनमात्रवतः" इति परिहरिष्यति। अध्ययनविधेरर्थज्ञानपर्यन्तत्वेऽपि, 'अधीत्य', 'अभिसमावृत्य' इत्यादिभिरर्थज्ञानस्य कर्मशेषत्वेन विनियोगः; त्वाश्रुतेः समानकर्तृत्वादिमात्रे विश्रमात्। तथा विनियोगेऽपि कर्मानुष्ठानोपयुक्तार्थज्ञानादन्यदेवोपासनात्मकं ज्ञानं वेदान्तवाक्यैर्विधित्सितम्। उपास्यश्चात्मा जीवातिरिक्तः श्रुत्यैव सिद्धः; न तु कल्प्यः। जीवब्रह्मसामानाधिकरण्यं च अचिद्ब्रह्मसामानाधिकरण्यवत् ऐक्यविरोधादन्यार्थम्॥ तिष्ठतु च [2]तथाविधज्ञान[विधान]म्; तथापि न विरोधः; कर्तुरिवाराध्यस्यापि कर्मार्थत्वेन विचार्यत्वात्। तस्य च कर्मवश्यादन्यत्वेन श्रुतिसिद्धत्वात् तद्विचारार्थकाण्डान्तरादिसिद्धिः। यद्यपि अत्राप्यर्थज्ञानस्यानुष्ठानशेषत्वेऽपि यथांशं परब्रह्मोपासनशेषत्वमपि स्यादित्युत्तरं प्राप्तम्; तथापि अर्थज्ञानपर्यन्ततामूले चोद्ये प्रथमपर्वस्थोद्भटापराधोपेक्षायोगात् अन्वारुह्यवादमनादृत्य मूलच्छेद एवात्र कर्तव्य इत्यभिप्रायेण सूत्रभाष्ययोर्मात्र[3]शब्दः।

ननु अध्ययनविधौ अक्षरग्रहणपर्यवसिते, अन्यार्थतयैवाधीतस्य स्वाध्यायस्य प्रतीतोऽप्यर्थस्तात्पर्यविषयत्वायोगादविचार्यः। ततो निरर्थको वेदः। अध्ययनविधिश्च न पुरुषार्थपर्यन्तः। निर्विषयतया, "अधीत्य स्नायात्" इति स्मृतिनिरुद्धावसरतया च मीमांसाऽपि नारभ्येत कुतस्तदैक्यादि स्यात्—इति शङ्कामपनुदन्, एकविषयतया वेदस्यैककण्ठ्यरूपेयत्ता रूप नाम कश्चित्त्रयमपि दर्शयन् मीमांसारम्भसूत्रार्थं च सूचयति **अध्ययनेति**। [4]**अत्र स्वाध्याय-निर्णय-विचाररूप-अधीतवेद**शब्दैः मीमांसायाविषय-फल-स्वरूप-अधिकार्यैक्य-

---

1 'पुरुषार्थोऽतश्शब्दादिति बादरायणः' इत्यधिकरणपूर्वपक्ष्याशयमुपक्षिपति यत्त्विति। 2 तथाविधेति। कर्मार्थेत्यर्थः। 3 अध्ययनमात्रवत इति सूत्रे 'अक्षरराशिग्रहणमात्रे पर्यवस्यति' इति भाष्ये मात्रशब्दः। 4 अध्ययनेत्यारभ्य प्रवर्तत इत्यन्तमेकं वाक्यमिति पदद्वाक्यतः स्पष्टम्।

**स्वाध्यायात् अवगम्यमानान् प्रयोजनवतोऽर्थान् आपाततो दृष्ट्वा तत्स्वरूपप्रकारविशेष-निर्णयफलवेदवाक्यविचाररूपमीमांसाश्रवणे अधीतवेदः पुरुषः स्वयमेव प्रवर्तते ।**

व्यञ्जनम् । **गृहीतस्येत्यनेन** विधिव्यापारस्य विश्रमोक्तिः । प्रयोजनवदर्थदर्शनोक्तिस्तु पुरुषार्थपर्यवसानज्ञापनार्था । **स्वभावत एव** — विधिव्यापारमनपेक्ष्येत्यर्थः; व्युत्पन्नपदपदार्थादेरिति शेषः । अयं भावः—

**ग्रहणार्थमुपात्तोऽपि स्वाध्यायो वह्निवत् स्वयम् । प्रकाशयति यत्, तत्र स्वतो मानमबाधतः ॥**
**जपाद([1]य?)ध्ययनं श्रौततत्तत्फलसमन्वितम् । न रुन्द्धे शब्दसामर्थ्यं ; ग्रहणार्थं [2]तु किं पुनः ॥**
**विनियोगविशेषेण वेदेऽर्थपरतां क्षिपन् । विनियोगार्थधीबाधात् स्वाध्यायघातेन बाधितः ॥**
**विव क्षितार्थेव(र्थैव?)न वा स्यादध्ययनचोदना । आद्ये व्याहतिः, अन्त्ये तु पूर्वपक्षस्य नोत्थितिः॥**
**अर्थज्ञानफलत्वेन मानत्वं चात्र दुर्भणम् । तत्फलत्वे हि तन्मानं तन्मानत्वे च तच्चिति ॥**
**स्वीकरोत्यर्थपरतां नियोगार्थोऽपि चेत् विधिः ।**
**संस्कारार्थोऽपि तद्वत् स्यात् [3]स्वसिद्ध्यौत्सुक्यसामवत् (साम्यतः?) ॥ [4]इति ।**

**वेदः** निरपेक्षवेदकः ; न तु पुंवाक्यवत् मूलभूतमानान्तरमपेक्ष्येत्यर्थः । अत एव न मूलदोष[विचार]-शङ्कया विचारस्तम्भनमिति भावः । प्रयोजनमत्र चतुर्वर्गः । तद्वन्तोऽर्थास्तदुपायाः कर्मोपासनारूपाः । अवबोधित्वम् इह निर्णयजननानुगुणत्वं दृष्टं दुरपह्नवम् । न च दृष्टे अनुपपन्नं नामेत्यभिप्रायेण **दर्शनात्** इत्युक्तम् । स्वत एव बोधकत्वेऽपि साध्याभावान्न मीमांस्यमित्यत्राह—**गृहीता**दिति । "अर्थान् आपाततोऽवगम्यमानान् दृष्ट्वा" इति तत्कालविशेषणतयाऽन्वयः। आपातधीरेव दृष्टं ; अतः संशयादिनिरासः साध्य इत्याशयः (इत्यत्राशयः) । पूर्वः **प्रयोजनवदर्थ**शब्दः काकदन्तोक्तिव्यावृत्त्या श्रुतिप्रामाण्यार्थः ; उत्तरस्त्वापातधियः स्वविषयविचाररागजननेन प्रेरकत्वज्ञापकः ।

**प्रतीतमप्रतीतं वा न मीमांस्येत कि(क)ञ्चन । इति चोद्यमपि क्षिप्तमापातज्ञाततोक्तितः ॥**

[5]यदि शब्दस्वभावादापातधीः, तर्हि अव्युत्पन्नानामपि स्यात् ; न चात्र व्युत्पत्तिमतामेव तद्विधिरस्ति अतोऽङ्गेष्वप्यङ्गिवदक्षरग्रहणान्ते विधौ तदसम्भवात् विध्यैकरूप्ये चाङ्गाध्ययनस्यार्थज्ञानपर्यन्तत्वे विशेषहेत्वभावात् । अत्र ब्रूमः—

**यस्य संस्कृतभाषैव बाल्यात्प्रभृति शीलिता । तदा तु तस्य [6]सा; तत्र स्यादापातमतिः स्वयम् ॥**

---

1 जपादीति आदिना धारणग्रहणम् । 2 ग्रहणार्थमिति । आद्याध्ययनमित्यर्थः ।
3 अत्र पाठो निरीक्ष्यः । स्तुतिसाधनत्वेन विहितं साम स्वसिद्ध्यर्थं ऋचः संस्कारकं भवत् ऋगक्षराभिव्यञ्जनमुखेनार्थमपि गमयति । स्वसिद्धौ औत्सुक्यं यस्य, तादृशसामवत् इत्यर्थः। अथापि नियोगार्थविधिवत् संस्कारार्थविधेरपि स्वसिद्धावौत्सुक्यं सममित्येतावदर्थकपाठ एव स्यात्।
4 इतीत्यस्य अयं भाव इति पूर्वेणान्वयः । 5 स्वाध्यायाध्ययनवत् अंगाध्ययनस्यापि अक्षरराशिग्रहणमात्रार्थत्वात् व्युत्पत्त्यभावात् कथमापातार्थप्रतीतिरिति शंकते यदीति । परिहरति अत्र ब्रून इति ।
6 सेति । सा = व्युत्पत्तिः तस्य तदा स्यात् । तत्र = एवं व्युत्पत्तौ वेदे आपातमतिः स्वयं स्यादित्यर्थः।

निरङ्गाध्ययनेऽप्येवं साङ्गाधीतौ तु किं पुनः । वेदार्थापातधीवृद्धिमङ्गार्थापातधीर्दिशेत् ॥
हितैषि[1]वाक्यजातां च केचिदापातसंविदम् । प्राप्नुवन्तो विचारे हि प्रवर्तन्ते मनीषिणः ॥
[2]केचित्त्वङ्गयुपकारार्हरूपेणाङ्गाक्षरग्रहे । स र्थज्ञानत्वमाचख्युर्दृष्टार्थत्वं तु लप्स्यति ॥ २७३॥

अस्त्वेवमापातधीः ; तदतिरिक्तमपि ज्ञानं विद्यास्थानान्तरैरेव साध्यतामित्यतोत्तरम्--तत्स्वरूप इत्यादि । पूर्वपक्षोक्तात् व्यावृत्तरूपावधारणमिहान्यैरसाध्यं फलमिति भावः । वेदवाक्यविचाररूप इत्यनेन विद्यास्थानान्तरव्यावृत्तमीमांसाशरीरव्यञ्जनम् । मीमांसाया विचाररूपत्वोक्तिस्तदभेदोपचारात्, विचारशब्दस्य करणव्युत्पत्त्या वा । विधिविषये कृत्यशेषं नास्तीत्यभिप्रायेणाधीतवेदत्वोक्तिः आपातधीमत्त्वादिति हेत्वभिप्राया च । पुरुष इति हेतुगर्भं, प्रयोजनार्थित्वादिति । स्वयमेव— विधिनिरपेक्षस्वेच्छयेत्यर्थः ।

(विचारस्य रागप्राप्तत्वम्)

[3]आपातस्योपयुक्तार्थे भाते(क्वार्थभाने?) तन्निर्णयार्थिनः ।
तदुपाये प्रवृत्तस्य विधानं ह्यनपेक्षितम् ॥ २७४ ॥
स्वेष्टनिश्चयहेतुत्वमन्वयव्यतिरेकतः । सिद्धमेव विचारस्य तत्रापि ह्यफलो विधिः ॥ २७५ ॥
संप्रेक्ष्य निधिरत्नादीन् तद्यथार्थनिरूपणे । [4]अपरप्रेरिता एव प्रवर्तन्ते तदर्थिनः ॥ २७६ ॥
अतो न विधिसिद्धोऽत्र विचारस्तत्क्रमोऽपि वा ।
[5]अन्यथा दोषदृष्ट्यैव द्वितीय(द्वितय?)स्योपपत्तितः ॥ २७७ ॥

[6]स्वयं प्रवृत्तावप्याचार्यनैरपेक्ष्यव्युदासाय श्रवण(श्रवणे इति । यदि स्वयमस्य?) तदश्रवणे प्रवृत्तिः । अकरणे तर्ह्यदोषः स्यात् ; तत्र—तदधीननिश्चयतत्सापेक्षहितप्रवृत्त्यादीनामभावस्यैव दोषत्वात् । तदभिप्रायेण ह्येतदप्युच्यते—"अधीत्य वेदान् साङ्गांस्तु यो विचारमुपेक्षते । स प्रयासं च विस्मृत्य प्रभ्रष्टः स्यात् प्रयोजनात्[7]" ॥ इति ।

नन्वेवं विचारस्यावैधत्वे, "अधीत्य स्नायात्" इत्यादिविधिनिरुद्धावसरः कथं मीमांसताम् ; दुःखात्मकगुरुकुलवासान्निवृत्तेः स्वतः प्राप्तत्वात् आनन्तर्यमेव ह्यत्र विधेयम् ॥ नैवम् ; सनियमकसमावृत्तियुक्तस्नानरूपसंस्कार एव ह्यत्र विधीयते । अन्यथा निवृत्त्यानन्तर्यस्यापि स्वतः प्राप्तत्वाद्विधेयत्वं स्यात् । किञ्च विचारस्य वैधत्वेऽपि कथमवसरः ॥ श्रुत्या स्मृतेर्बाधादिति चेन्न ; श्रुतावपि अधीत्याभि-

1 संस्कृतभाषाव्यवहारिकुटुम्बाभावेऽपि आपातप्रतीतिवादिनां केषाञ्चित् पक्षमाह हितैषीति । अयं द्वितीयः प्रकारः । 2 तृतीयमाह केचिदिति । अङ्गाध्ययनं यदि अर्थं विना, तदा तस्याङ्गत्वासिद्धेरिति भावः । 3 आपातपदस्य भाधात्वर्थं एवान्वयात् समस्तपदं युक्तम् । आपातादिति पृथक्पदं वा । 4 अपरप्रेरिताः = परैरप्रेरिताः । 5 अन्यथा = विचारतत्क्रमयोरभावे । 6 श्रवणे इति पदस्य कृत्यमाह स्वयमिति । एतदनुगुणं शोधनीयम् । तदाश्रवणे = आचार्याश्रयणे । 7 प्रयोजनात् प्रभ्रष्टः स्यादित्येवोक्तम् ; न तु विचाराकरणात् प्रत्यवेयादिति । अतो न वैधता ।

समावृत्य इत्युक्तेः[1] ॥ तत्र समानकर्तृकत्वपूर्वकालत्वमात्रपरतया आनन्तर्ये तात्पर्यं नास्तीति चेत्, स्मृतावपि किं न तथा स्यात् । न च श्रुतावध्ययनशब्दोऽर्थज्ञानपर्यन्तः, स एव स्मृतावक्षरग्रहणपर्यन्त इति नियन्तुं शक्यम् ॥ "यदधीतम्" इत्यादिवत् स्यादिति चेन्न ; विरोधाविरोधाभ्यां विशेषात् । अस्तु तर्हि श्रुतिस्मृत्योर्द्वयोरप्यर्थज्ञानपर्यन्ताध्ययनानुवादः ; तथा सति स्नानविधिः वैधस्य विचारस्यावसरं न वि(नि?)रुन्ध्यादिति चेत्—तर्हि रागप्राप्तस्यापि स्वोपयुक्तद्रव्यार्जनादेरिव श्रवणावसरं न वि(नि?)रुन्ध्यादेव ।

**ज्ञात्वाऽनुष्ठानमिच्छन्तः स्नानादिविधयः स्वतः । [2]प्राचीमेव स्वविषयां मीमांसां परिगृह्णते ॥**
**किं चात्र [3]मानमेतावत्क्रमकर्त्राद्यवेदिनः । न स्नानविधिमप्येकं यथावद्वेदितुं क्षमाः ॥ ७९**
**अगत्याऽध्ययनादौ प्रागविचार्य प्रवर्तते । स्नाने तु गतिमद्भावात् न स्यादगतिका गतिः ॥**
**[4]अनुज्ञातं च सर्वत्र न स्वाङ्गं व्यवधायकम् । अतो मीमांसया नात्र व्यवधानं विरोधकृत् ॥**

यद्वा अध्ययनस्नाननैरन्तर्येऽपि न विरोधः । अविचारितधर्म(र्मा)णामुत्तरानुष्ठानासिद्धिप्रसङ्गात् विरोध इति चेन्न ; स्नातस्यापि यावद्विचारं हितकामैर्ब्रह्मचारिण इवानुष्ठापनोपपत्तेः । न च हितैषिवाक्यादनुष्ठाने अपशूद्राधिकरणविरोधः तत्तदुचितधर्मेषु हितैषिभिः प्रवर्तनात्, "न चास्योपदिशेत् धर्मं" इत्यादिनिषेधदृष्टेश्च ॥ अन्यथाऽप्यनुष्ठानसिद्धौ मीमांसाश्रवणं निरर्थकं स्यादिति चेत्, तत्र-वैपरीत्यशङ्कायां मूलजिज्ञासया परनैरपेक्ष्यप्रवचनरुच्यादिश्रद्धया च तदुपपत्तेः । एवमेव पूर्वेषामुत्तरेषामपीत्यविच्छेदसिद्धिः । कश्चिदालस्यात् पित्रादीनेव सर्वथा प्रमाणयेदिति चेत्—ततः किम् ? अनलसैरन्यैः शास्त्रश्रवणोपपत्तेः ॥ स्नातस्य शृण्वतो गुर्वर्थोपचारैः स्वधर्मोपरोधः स्यादिति चेत्—न ; अध्ययनविधिनियुक्तानां तेषां निवृत्तेः । यथोक्तं **न्याय-सुदर्शने**—"अक्षरग्रहणोपायनियमार्थो ह्ययं विधिः । तद्ग्रहावधिका धर्मस्थितिरित्यब्रवीत् स्मृतिः ॥ अधीतात् वेदतः पश्चादर्थज्ञानं स्वतो भवेत् । तत्तु नाध्ययनं नापि धर्माणां च प्रयोजकम्" इति ।

किमर्थं तर्हि मीमांसामाचार्यः श्रावयेत् । लाभाद्यर्थं वा धर्मार्थं वा । गृहस्थधर्मोपरुद्धस्य कः श्रोतुमवसरः ? को वाऽऽचार्यस्य प्रवक्तुम् ? तस्य वृत्त्यर्थिनोऽस्ति द्रव्यार्जनकाल इति चेत्, तर्हि विध्यनुज्ञातदृष्टार्थप्रवृत्त्यन्तरवत् श्रवणस्यापि [5]स्यात् । इतिहासाद्यर्थतया च गृहिणोऽप्यस्ति कश्चिद्विचारकालः । तदा च वेदोपबृंहणैस्तैः स्वस्वाध्यायानुगुणत्वेन मीमांसाऽप्युपादीयेत । वेदाभ्यासं चैवं विभजन्ते—'वेदस्वीकरणं पूर्वं विचारोऽभ्यसनं जपः । तद्दानं चैव शिष्येभ्यो वेदाभ्यासो हि पञ्चधा" ॥ इति ।

कुलक्रमागतधनादेः, दैवादागतधनादेर्वा कस्यचित् तदार्जनकालोऽप्यपेक्षितश्रवणस्य कालः । गृहस्थादयश्चाविचारितवर्णादिधर्मास्तद्धर्मश्रोतारः श्रुतिस्मृतिषु दृश्यन्ते । गृहस्थस्याप्यतिशयितविद्यार्थं प्रत्यब्दं द्वौ द्वौ मासौ गुरुकुलवासश्च केनचिदनुज्ञातः । यथाऽनूद्यते—"निवेशे वृत्ते संवत्सरे द्वौ द्वौ मासौ समाहित आचार्यकुले वसेत् भूयश्श्रुतिमिच्छन्निति श्वेतकेतुः", "एतेन ह्यहं योगेन भूयः पूर्वस्मात्

1 इत्युक्तेरिति । उभयत्र ल्यबन्तप्रयोगाविशेषात् कथं विरोध इति । 2 प्राचीमेव = स्नानात् पूर्वभावितयैव । पक्षान्तरमुपरि वक्ष्यते । 3 मानेत्यादिना मीमांसाध्ययार्थानां क्रमेणोक्तिः । अश्रुतमीमांसा इति यावत् । 4 स्वाङ्गस्यानुज्ञातत्वात् न व्यवधायकत्वम् । स्वांगं न स्वव्यवधायकमिति हि प्रसिद्धम् । 5 प्रवृत्त्यन्तरस्येव कालः स्यादित्यर्थः ।

**तत्र कर्मविधिस्वरूपे निरूपिते कर्मणामल्पास्थिरफलत्वं दृष्ट्वा अध्ययनगृहीतस्वाध्यायैकदेशोपनिषद्वाक्येषु चामृतत्वरूपानन्तस्थिरफलप्राप्तिप्रतीतेस्तन्निर्णयफलवेदान्तवाक्यविचाररूपशारीरकमीमांसायामधिकरोति ।**

कालमुच्छ्रम् अकुर्वि" इति । नन्वत्र, "तच्छास्त्रैर्विप्रतिषिद्धम्, निवेशे हि वृत्ते नैयमिकानि श्रूयन्ते, अग्निहोत्रमतिथयश्च" इत्यादिनाऽऽपस्तम्बः स्वमतमाह ॥ सत्यम्; तेनापि तदा मासद्वयं निरन्तरगुरुकुलवासमात्रं निषिध्यते ; न तु प्रवक्तृवत् श्रोतुरसिध्यन् विचारावसरः क्षिप्यते ।

[1]अस्त्वध्ययनानन्तरं विचारः; स च रागतः कृत्स्नविषयश्च ; तथापि—

**अवैधत्वे विचारस्य [2]क्रमस्य च यथारुचि । अप्रवृत्तेः प्रवृत्तेश्च प्राप्तौ तत्रेति भाष्यते ॥ २८२**
**दुस्त्यजत्वाद्विचारस्य यौगपद्यविरोधतः । व्युत्क्रमे दोषदृष्ट्या च क्रमश्रौत्रो ह्यसाविति ॥**

**तत्र**=वेदे ; मीमांसायां वा ; स्वेच्छातः प्रवृत्तौ सत्यामिति वाऽर्थः । **कर्मविधि**रिह काम्यकर्मचोदना काम्यानुष्ठानं वा ; अविशेषाद्वा नित्यादेरपि संग्रहः । **स्वरूप**शब्देन त्यक्तफलस्य परविद्या[3]ङ्गविनियोगो न चिन्तित(चिन्त्यत) इति सूच्यते । स हि साधनलक्षणे शोध्यः तन्निरूपणे हि अनन्तस्थिरपर्यन्तत्वं बुद्ध्येत । यद्वा केवलकर्मणामल्पास्थिरफलत्वस्य [4]कचिदमी(कश्चिन्मी)मांसितत्वेऽपीति भावः । **निरूपिते** इत्यनेन कर्मनिरूपणस्य वृत्तत्वावश्यम्भावोऽभिप्रेतः । प्रपञ्चितं चैतत् **तात्पर्यतूलिकायाम्**—
"तत्रेदं नियतं कर्म नैव शक्यमुपेक्षितुम् । तद्धि सर्वास्ववस्थासु पुमांसमनुवर्तते ॥ बुभुक्षुर्वा मुमुक्षुर्वा यो यो गृह्णीत पूरुषः । तस्य सर्वस्य बहुना कर्मणाऽनुगमोऽस्ति हि ॥ नित्यं नैमित्तिकं कर्म प्रतिषिद्धं च सर्वदा । सर्वैरपि परीक्ष्यं हि [5]प्रत्यवायजिहासया ॥ न ये बिभ्यति दुःखेभ्यस्ते मा कार्षुर्विचारणाम् । इतरेषामियत् कर्म विचार्यमिति तु स्फुटम् ॥ काम्यं तु कर्म भोगाय विनापि ब्रह्मणा क्षमम् । न कर्मणा विना ब्रह्म मोक्षसामर्थ्यमश्नुते ॥ सर्वापेक्षा च यज्ञादिश्रुतेरिति हि वक्ष्यते । वेदैकदेशचिन्ताऽपि प्रोक्ता कृत्स्नप्रयोजिका ॥ तस्मादवश्यचिन्त्यत्वे कर्मैवाग्रे विचार्यते ॥" इति ।

**कर्मणामल्पास्थिरफलत्वं दृष्ट्वा**—तत्तद्वाक्यैरेवार्थतो विशदं निश्चित्येत्यर्थः । [6]ज्योतिष्टोमाग्निहोत्रादिस्वरूपनिरूपणे हि यथोपायं गुरुलघुस्वर्गभेदवल्क्लृप्तिः स्यात् । "ज्योतिष्टोमोऽग्निष्टोमः" इत्यनेन ज्योतिष्टोमस्याग्निष्टोमरूपत्वे निश्चिते च तत्साध्यस्य स्वर्गस्य, "यावदग्निष्टोमेनोपाप्नोति" इत्यादिना देशकालादिपरिच्छेदनिश्चयः । तत्रावृत्तिविधिरप्यनावृत्तस्य फलाल्पत्वे लिङ्गम् । नित्यकर्मणामपि कस्मिंश्चिद्-

1 'तत्र कर्मविधिस्वरूपे', इत्यादिकमुत्तरभाष्यमवतारयति—अस्त्वित्यादिना । तत्रेति भाष्यत इति । तत्रेत्यादिभाष्यारम्भ इत्यर्थः । 2 क्रमस्य=कर्मब्रह्मविचारयोः क्रमस्य । 3 अङ्गविनियोगः= अङ्गं यथा भवेत्, तथा विनियोगः । 4 केवलकर्माणि अल्पास्थिरफलानि न वेति विचारार्थमेकाधिकरणाप्रवृत्त्या तन्मीमांसनेऽपीत्यर्थः । तद्विचारनिरपेक्षमेवेति यावत् । अर्थसिद्धत्वात् तदविचार इति भावः । 5 अकरणे प्रत्यवायः नित्यनैमित्तिकयोः; करणे तु स प्रतिषिद्धविषये । 6 विशिष्यास्थिरफलकत्वविचारार्थोऽधिकरणाभावेऽप्यत एव विचारात् अस्थिरफलत्वविशदज्ञानरूपं दर्शनं यथा भवति, तद् विवृणोति ज्योतिरित्यादिना ।

**तथा च वेदान्तवाक्यानि केवलकर्मफलस्य क्षयित्वं ब्रह्मज्ञानस्य चाक्षयफलत्वं**

---

धिकारिणि, "प्राजापत्यं ब्राह्मणानाम्" इत्यादिभिर्वर्णाश्रमभेदेन फलतारतम्यं स्मर्यते । वैश्वदेववरुणप्रघासा[1]दीनां चातुर्मास्यानां स्वरूपेऽवगते हि, "एषा वै वैश्वदेवस्य मात्रा, ऐन्द्रा एतेषामवमम्, अतोऽन्यो वा उत्तराणि श्रेयांसि भवन्ति" इति वैश्वदेवादेर्मितफलत्वदर्शनात्, "अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतम्" इत्यत्र चिरोपभोग्यत्वमात्रे तात्पर्यमाहुः । यद्यप्यक्षयफलत्वमिदं विद्याङ्गत्वेन परम्परया नेतुं शक्यम्, तथाप्यत्र तद्विवक्षाविरहान्न तथा नीयते । एवं परिमितफल[2]सोमहविष्कर्मस्वरूपनिश्चये सत्येव, "अपाम सोमम्" इत्याद्यमृतत्वस्य, "आभूतसंप्लवं स्थानममृतत्वम्" इत्यादिस्मृत्या नियमः। स्वर्गस्वाराज्यादिफलभेदसाधककर्मस्वरूपभेदसिद्धौ च तत्र स्वर्गशब्दोक्तस्याल्पत्वसिद्धिः । "यं यं क्रतुमधीते" इत्यादिषु च फलतारतम्यक्लृप्तिः गुरुलघुकर्मस्वरूपनिश्चयादेव । [3]उत्पत्तिनाशवदाराध्यप्रीणनकर्मस्वरूपनिश्चयाच्च तत्साध्यस्य तत्स युज्यादेरस्थिरत्वदृष्टेरिति ।

तदेवं निरस्तप्रतिबन्धब्रह्मविचारार्थस्य शारीरकस्य विद्यास्थानान्तरव्यावृत्तस्वरूपफलाभ्यां मीमांसैकदेशत्वव्यवस्थार्थं निर्णेतव्यविशेषसङ्ग्रहार्थं च पुनः **अध्ययने** इत्यादिकमुक्तम् । अत्र **मृतत्व**शब्देन ब्रह्यन्तप्रधानवेद्यफलोक्तिः ; तेनार्वाचीनानामानुषङ्गिकत्वेन उक्तानां [4]सङ्गत्यन्तरघटितदृष्टिविध्यादिफलानां च व्यवच्छेदः । कर्मभागोक्तममृतत्वमापेक्षिकं साधितम् ; इदं तु बाधादर्शनात् निर्णीतागसंवादिवेदान्तैकदेशोपष्टम्भाच्च न प्राच्यवदिति प्रत्यायितप्रायमित्यभिप्रायेण, **अनन्तस्थिरफलापातप्रतीतेः** इत्युक्तम् ; न ह्यत्र फलत्वाद्यनुमानैरेवाल्पास्थिरत्वादिक्लृप्तिः शक्या अतिप्रसङ्गादिति । अनवच्छेदादिह सर्वशरीरः **शारीरः** तमधिकृत्य प्रवृत्तं शास्त्रं **शारीरकम्** । वक्ष्यति हि **आनन्दमयाधिकरणे** –"स एव निरुपाधिकः शारीर आत्मा, अत एवेदं परं ब्रह्माधिकृत्य प्रवृत्तं शास्त्रं शारीरकमित्यभियुक्तैरभिधीयते" इति । सैव मीमांसेति **शारीरकमीमांसा ;** तस्याम् । **अधिकरोति** स्वार्थबुद्ध्या तत्रोद्युक्तो भवति, न तु पूर्ववृत्तान्तरादधिकरोतीत्यर्थः । ब्रह्मविचारानन्तर्ये युक्तिसिद्धे तद्विषयशास्त्रानन्तर्यमपि सिध्येदिति भावः ।

**[5]ग्रहणश्च(ग्रहणस्य?) फलत्वं च सार्थता[6] च स्वतः श्रुतेः ।**
**शागात्कृत्स्नविचारश्चेत्यपूर्वमिह भाषितम् ॥ २८९ ॥**

ननु कर्मफलाल्पत्वादौ लिङ्गमात्रं दृष्टम् ; यथाश्रुतविरुद्धप्रत्ययदार्ढ्याय [7]प्राप्तिरपि वक्तव्या ; कर्मस्वरूपनिरूपणं चात्र स्वयंप्रवृत्तेः प्रतिबन्धशान्त्यर्थम् ; हेतुस्त्वनन्तस्थिरफलापातप्रतीतिरेव, सा [8]कुतस्त्येत्यत्राह—**तथा** इति । उक्तप्रकारेणास्य सूत्रस्यापि ऐदमर्थ्यं यथा स्यात्, तथेत्यर्थः । **चो**ऽवधारणे ।

---

1 आदिना साकमेधशुनासीरीययोर्ग्रहणम् । 2 सोमहविष्कर्म =ज्योतिष्टोमादि । चातुर्मास्यंत्विष्टिः । 3 उत्पत्तिनाशवन्त आराध्याः चतुर्मुखादयः । 4 उपासनत्व—ब्रह्मविषयकत्व—मुख्योपासनशेषत्वरूपसंगतिवशात् उपनिषदि निवेशिताः दृष्टिविधयः । 5 तथाहीत्यारभ्य भाषिते निष्कृष्टमपूर्वमुद्गृह्णाति ग्रहणस्येति । 6 श्रुतेर्गृहीतायाः स्वतः =स्वरूपेण जपादिना सार्थता= सप्रयोजनत्वमित्यर्थः । अर्थबोधकत्वरूपसार्थता तु मीमांसकस्यापीष्टा ।
7 प्राप्तिः प्रापकप्रमाणवाक्यम् । 8 कुतस्त्या =कीदृशवाक्यजन्या ।

**दर्शयन्ति—"तद् यथेह कर्मचितो लोकः क्षीयते, एवमेवामुत्र पुण्यचितो लोकः क्षीयते", "अन्तवदेवास्य तद् भवति", "न ह्यध्रुवैः प्राप्यते" "प्लवा ह्येते अदृढा यज्ञरूपाः", "परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायात् नास्त्यकृतः कृतेन । तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम् । तस्मै स विद्वान् उपसन्नाय सम्यक् प्रशान्तचित्ताय शमान्विताय । येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्याम्",**

---

अत्र क्षयित्वोक्तिरक्षयित्वोक्तिश्चापरत्वादेरुपलक्षिका । नाश्वत संवादेनानाश्वतऽर्थान्तरेऽपि श्रद्धाभिवृद्ध्यै पूर्वं **तद्यथेत्या**दिवाक्योदाहृतिः । **लोकः**=लोक्यः, भोग्यः । देशपरत्वे तिइहामुत्रेत्याभ्यामनन्वयः । **कर्मचितः** लौकिककर्मलब्धः । **पुण्यचित** इत्यविशेषोक्त्या निवृत्तिधर्मसाध्यस्यापि क्षयित्वभ्रमं निवारयितुमाह—**अन्तवदि**ति । उपात्तवाक्यैकार्थ्याय क्रियास्वरूपान्तवत्त्वस्यानपेक्षितत्वचनत्वाच्च फलद्वारा अत्रान्तवत्त्वोक्तिः । "यो वा एतदक्षरं गार्ग्यविदित्वाऽस्मिन् लोके जुहोति यजते तपस्तप्यते बहूनि वर्षसहस्राणि" इति पूर्ववाक्यात, "यो वा एतदक्षरं गार्ग्यविदित्वास्माल्लोकात् प्रैति स कृपणः" इत्युत्तरवाक्याच्च; अन्तवदित्यस्य ब्रह्मवेदनरहितकर्मविषयत्वसिद्धौ, 'पुण्यचितः' इत्यत्र, उत्तरेषु च तद्विषयत्वं सुगमम् । ज्ञानरहितकर्मसु स्वर्गस्वाराज्यादिफलभेदवत् केषुचिन्नित्य[1]फलभेदसम्भवात्, "सर्वेभ्य[2] कामेभ्यो ज्योतिष्टोमः" इति श्रवणाच्चात्रोपात्तं वाक्यं प्रायिकविषयं स्यादित्यत्राह—**नहि** इति । **अध्रुवैः** अध्रुवफलसाधनतया चोदितैरित्यर्थः । "ध्रुवं तत्" इति वाक्यखण्डान्वयात् नित्यफलार्थत्वाभावः ख्याप्यते । पुनरावृत्तिनियमवतः सर्वकर्मनिर्मूलनत्वायोगेन ध्रुवफलभावनत्वाभावं द्रढयति—**प्लवा** इति । **अदृढाः** तमसः पारं गमयितुमक्षमाः । "अष्टादशोक्तमवरं येषु कर्म । एतच्छ्रेयो येऽभिनन्दन्ति मूढाः जरामृत्यू(त्युं) ते पुनरेवापि यन्ति" इति ह्यत्र वाक्यशेषः ।

(प्रथमसूत्रपूर्णार्थगर्भश्रुत्यर्थः)

अथ सूत्रार्थानुगुणं कर्मणां नित्यफलसाधनत्वाभावनिश्चयस्य निर्वेदहेतुत्वं ब्रह्मज्ञानस्यानन्तफलत्वं च समुच्चित्य वदत् वाक्यमाह—**परीक्ष्ये**ति ।

इयं श्रुतिः **सारे** व्याख्याता—"**ब्राह्मणः** वेदाभ्यासरतः, **कर्मचितान्** कर्मणा सम्पादितान् । **लोकान्**—आराध्यक्षयित्वेन क्षयस्वभावान्, कर्ममीमांसया **परीक्ष्य, अकृतः** नित्यः परमपुरुषः, **कृतेन**—कर्मणा **नास्ति** न सम्पद्यते इति यो **निर्वेदमायात्**, स तद्विज्ञानार्थं **गुरुमेवाभिगच्छेत्** समित्पाणिः **श्रोत्रियं** वेदान्तवेदिनम्, **ब्रह्मनिष्ठं** साक्षात्कृतपरमपुरुषस्वरूपम् । स च गुरुः सम्यगुपसन्नाय तस्मै, **येन**[3] विद्याविशेषेण तमक्षरं सत्यं परमपुरुषं विद्यात्, तां ब्रह्मविद्याम् । **प्रोवाच** प्रब्रूयादित्यर्थः । स गुरुमेवाभिगच्छेत् तस्मै स विद्वान् प्रोवाचेत्यनन्वयात्, अप्राप्तत्वाच्च । विधावपि लिटो विधानात; 'छन्दसि लुङ्लङ्लिटः' इति" इति ।

---

1 **नित्यफलभेदेति । नित्यस्यापि फलविशेषस्येत्यर्थः ।** 2 **सर्वपदेन नित्यफलमपि ग्राह्यमित्यभिमानः ।** 3 **विद्यापदस्य पूर्वमप्रयुक्तत्वात् सामान्यतो येनेति नपुंसकादरणम् ।**

अत्र न्यायसिद्धानुवादांशे जातिवाचिनोऽपि **ब्राह्मणशब्दस्य** प्रकृतकर्मपरीक्षणौपयिकसाङ्गाध्ययेतृसमर्पणेनाजहल्लक्षणया त्रैवर्णिकविषयत्वार्थं "वेदाभ्यासरतः" इत्युक्तम्। [1]ब्रह्म अणतीत्यपि ब्राह्मणशब्दं निर्ब्रुवन्ति। **आराध्यक्षयित्वेनेति** सुकृतविनाशोपलक्षणम्। **कर्ममीमांसयेत्यर्थलभ्योक्तिः**। **अकृत**-शब्दस्य पुंलिङ्गानुरोधात् वाक्यशेषस्वरसत्या च परमपुरुषो विशेष्यो दर्शितः। **अत्र नास्तिशब्देनाकृतस्य** स्वरूपनिषेधायोगात् **कर्मणा** इत्यनेन च नन्वयात् उत्पत्तिनिषेधस्यानपेक्षितत्वात् **न सम्पद्यत** इत्युक्तम्। **कृत**शब्दस्य भावार्थव्यवच्छित्त्यै **कर्मणेति** प्रतिपदम्। **तद्विज्ञानार्थम्**—आपातधीस्थस्याकृतस्य तस्य विशदबोधायेत्यर्थः। समित्पाणित्वमिह ब्रह्मविद्याश्रवणार्थोपनयनान्तरव्यञ्जनार्थमिति केचित्। उक्तं हि **छान्दोग्ये** जाबालं प्रति गौतमेन, "नैतदब्राह्मणो विवक्तुमर्हति। समिधं सोम्याहर; उप त्वा नेष्ये" इति। अन्ये त्वाहुः—"अनुपनीते जाबाले युक्तमुपनयनम्; अन्यत्र तु समित्पाणित्वोक्तिः अरिक्त-पाणित्वोपलक्षणार्था। दृश्यते हि **वैश्वानरविद्यायाम्**—"ते ह समित्पाणयः पूर्वाह्णे [च] प्रतिचक्रमिरे तान् हानुपनीयैवैतदुवाच" इति। **प्रजापतिवाक्ये** च एकस्यैवेन्द्रस्य बहुषु प्रश्नेषु, "समित्पाणिः पुनरेयाय" इत्यावर्तते। न हि तत्र बहुवारमुपनयनं दृष्टमिष्टं वा। सूत्रकारश्च, "संस्कारपरामर्शात्" इत्येतावन्मात्रं वक्ष्यतीति। "एकां शाखामधीत्य श्रोत्रियः" इत्युक्तस्याधीतस्वाध्यायमात्रस्य प्रकृतानुपकारकतया, 'वेदान्तवेदिनम्' इति श्रोत्रियशब्दस्यात्र अकामहतश्रोत्रियपरत्वं दर्शितम्। स्फुटप्रवचन-क्षमत्वम्, अदृष्टत उपकारकतमत्वं च ब्रह्मनिष्ठशब्दाभिप्रेतमित्याह—**साक्षात्कृतपरमपुरुषस्वरूपम्** इति। प्रशान्तचित्तायेत्युक्तत्वात् **शमोऽत्र** बाह्यकरणव्यापारान्तरनिवृत्तिः। शमदमाविह श्रवणौपयिकावधानार्थौ, "तस्मादेवंविच्छान्तो दान्तः" इत्यादौ तु श्रवणतो विदितार्थस्य विध्यर्थौ। येनेत्यत्र लिङ्गव्यत्ययस्य क्लिष्टत्वात् सामान्योक्तत्वं द्योतयति **विद्याविशेषेणेति**। तथा च प्रयुञ्जते, "तत्र बाधकमभवत् क्षणभङ्गो वा बाह्यार्थभङ्गो वा" इत्यादि। स्वरूपतः स्वभावतश्च विकारं निवर्तयद्भ्याम् **अक्षर-सत्यपदाभ्यां** प्रधान-क्षेत्रज्ञव्यवच्छेद इत्यभिप्रायेणाह **परमपुरुषमिति**। संशयविपर्ययार्हवचनम्, अपूर्णवचनं च क्षेप्तु **तत्त्वतः** इति विशेषणम्, "आचार्योऽप्यनाचार्यो भवति श्रुतात्परिहरमाणः" इति स्मरन्ति। वृत्तार्थकथनभ्रमनिरासायाह **प्रब्रूयादिति** 'अभिगच्छेत्' इत्युपक्रमप्रतीतविधिबाधेन व्यत्ययानुसरणं क्लिष्टम्। अतः **प्रोवाचे**त्यस्य भूतपरत्वेनानन्वय इत्यभिप्रायेणाह **स गुरुमेवेति**। नियमविधित्वमवधारणेन व्यञ्जितम्। प्रोवाचेत्यस्य विधिपरत्वे हेत्वन्तरमाह—**अप्राप्तत्वात्** इति। यद्यपि लाभाद्यपेक्षया कस्यचित् रागतः प्रवृत्तिः, तथापि (सति) तन्निरपेक्षस्य गुरोः सच्छिष्यविषये धर्मार्थमिदं(मेवेदं) विधीयत इति न विरोधः। लिटो लिङर्थत्वस्य विशेषतोऽनुशिष्टत्वमप्याह—**विधावपीति**।

---

1 तर्हि ब्रह्माण इति प्रयोगः स्यात्; न तु ब्राह्मण इति इति चेत्, **तात्पर्यचन्द्रिकायां** शकन्ध्वादेः प्रज्ञादेश्चाऽऽकृतिगणत्वादुपपत्तिरित्युक्तं 'ब्रह्मणस्य विजानतः' इत्यत्र। तत्रास्मदीयं भूमिकाभूतं दूषणोक्तिपरीक्षणं द्रष्टव्यम्।

"ब्रह्मविदाप्नोति परम्", "न पुनर्मृत्यवे तदेकं पश्यति", "न पश्यो मृत्युं पश्यति", "स स्वराड् भवति", "तमेवं विद्वानमृत इह भवति। नान्यः पन्था अयनाय विद्यते", "पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनामृतत्वमेति" इत्यादीनि।

ननु च साङ्गवेदाध्ययनादेः कर्मणः स्वर्गादिफलत्वे स्वर्गादीनां च क्षयित्वे ब्रह्मोपा-

---

ब्रह्मज्ञानस्य परशब्दनिर्दिष्टब्रह्मप्रापकतया प्राकरणिकनित्यनिरतिशयानन्दप्रापकत्वमभिप्रेत्याह **ब्रह्मविदिति**। ब्रह्म प्राप्तस्यापि स्वर्गादिन्यायात्, "इमान् लोकान्" इत्यादिभिश्च पुनरावृत्त्यादिशङ्कां परिहर्तुमाह **न पुनरिति**। **मृत्युरिह** मरणम्; "मोहो मृत्युः संमतो यः कवीनाम्" इत्युक्तं वा। पाप्मनां निश्शेषक्षये मृत्यूपलक्षितं सर्वमनिष्टं न स्यात्; लोकानुसरणं चैच्छिकमिति भावः। तदेकदर्शनमिहोपायः, फलं वा। "न प्रेत्य संज्ञाऽस्ति" इति विद्याप्रकरणस्थवाक्येन मुक्तस्य ज्ञानलोपशङ्कां निवर्तयन् मृत्युतत्कार्यनिवृत्तिं च व्यनक्ति—**न पश्य** इति। मुक्तस्य तदातनपरदुःख-प्राक्तनस्वदुःखदर्शनेऽपि तयोः स्वाश्रितत्ववर्तमानत्वाभावान्न तं प्रति प्रतिकूलत्वम्। एवं हि बन्धदशायामपि दृष्टम्। तत्र तु परदुःखदुःखित्वं, गतानुशोचनं च कर्मोपाधिकमेव; "न रोगं नोत दुःखतां सर्वं ह पश्यः पश्यति" इत्यादिना विशेषेण दृश्यमानेष्वपि स्वप्रातिकूल्यदर्शनं नास्तीति हि स्थाप्यते। **पश्योऽत्र**, 'तदेकं पश्यति', इति समानप्रकरणात् ब्रह्मदर्शी जीवः। पश्यतीति व्युत्पत्त्या परमात्मन्यपि। "पश्यः पश्यति पश्यन्तम्" इत्यादि**प्रयोगदृष्टेः**। ब्रह्मात्मकतया सर्वस्य दर्शनात् तदेकदर्शनसर्वदर्शनयोर्न विरोधः। न केवलं निरपायपारमैश्वर्यमात्रम्; "अन्यराजानस्ते क्षय्यलोका भवन्ति" इत्याम्नातकर्ममूलानीश्वरपारतन्त्र्यनिवृत्त्या स्वच्छन्दवृत्तिश्च स्यादित्यभिप्रेत्याह **स स्वराडिति**। अत एवेश्वरपारतन्त्र्यस्थितावपि "स्वराट् स्वतन्त्रः" इति **नैघण्टुकोक्तिर्न** विरुध्यते। अमृतत्वस्योपायान्तरनिषेधश्रुत्या कर्मसाध्यामृतत्वोक्तेरन्यपरत्वं द्रढयति **तमेवमि(वे)ति**। अत्र च गुणविभूतिविशिष्टमहापुरुषपरामर्शात् जीवस्यैव निर्विशेष-स्वरूपधियः पुरुषान्तरधिया वा मुक्तिः स्यादिति **परेष्टं** निरस्तम्। ऐक्यभेदाभेदबुद्ध्योरमृतहेतुत्वं श्रुत्यैव क्षिप्तमित्याह—**पृथगिति**। **ततः** उपासनरूपात् पृथक्त्वमननादित्यर्थः। **तेन जुष्टः**—प्रेरकेण प्रीतिविषयीकृतः। अनेन स्थिरस्य परानुग्रहस्यैव फलद्वारतोक्तिः। "धातुः प्रसादात्" इति च श्रूयते। नन्वत्र आत्मानं प्रेरितारं चेति समुच्चित्य मननमुक्तम्; अतोऽन्यज्ञानस्यापि मोक्षहेतुत्वं भाति॥ सत्यम्; न तावता प्रेरकप्राधान्यमपह्नियते। "कश्चित् धीरः प्रत्यगात्मानमैक्षत् आवृत्तचक्षुरमृतत्वमिच्छन्" इत्यादावपि परविद्याङ्गजीवदर्शनपरम्। **आदिशब्दः**, "भूयसां स्यात् बलीयस्त्वम्" इति न्यायेन वाक्यान्तरैरप्युक्तदृढीकरणार्थः।

**(विस्पष्टवाक्यसद्भावमूलकर्मविचारवैयर्थ्यशंकातत्परिहारौ)**

अथैभिरेव वाक्यैरपेक्षितज्ञप्तिं यथारुचि विचारप्रवृत्तिसम्भवं च मन्वानः कश्चित् ब्रह्मविचारस्य कर्मविचारानपेक्षत्वं चोदयति **नन्विति**। चकार उद्ग्रन्थैरपि प्रत्युक्तिव्यञ्जितैः [1]पूर्वचोद्यैः समुच्चयार्थः।

---

1 पूर्वचोद्यैः=अंगाध्ययन-सर्वापातप्रतीत्यादौ मानाभावादिचोद्यैः तथाहीत्यादिना परिहृतैः।

सनस्यामृतत्वफलत्वं च ज्ञायत एव । अनन्तरं मुमुक्षुः ब्रह्मजिज्ञासायामेव प्रवर्तताम्; किमर्था धर्मविचारापेक्षा ॥

एवं तर्हि शारीरकमीमांसायामपि न प्रवर्तताम्; साङ्गाध्ययनादेव कृत्स्नस्य ज्ञातत्वात् ॥

सत्यम्; आपातप्रतीतिर्विद्यत एव; तथाऽपि न्यायानुगृहीतस्य वाक्यस्यार्थनिश्चायकत्वादापातप्रतीतोऽप्यर्थः संशयविपर्ययौ नातिवर्तते । अतस्तन्निर्णयाय वेदान्तवाक्यविचारः कर्तव्य इति चेत्—तथैव धर्मविचारोऽपि कर्तव्य इति पश्यतु भवान् ।

॥ लघुपूर्वपक्षः ॥

ननु च ब्रह्मजिज्ञासा यदेव नियमेनापेक्षते तदेव पूर्ववृत्तं वक्तव्यम् । न धर्मविचारापेक्षा

आद्य एवकारो विचारनैरपेक्ष्यपरः । द्वितीयस्तु ज्ञानानुत्पत्तिनिरासार्थः । मुमुक्षुः प्राग्भवीयपुण्यमहिमक्षीणकाम्यरुचिरित्याशयः । किमर्था । न दृष्टार्था; अन्यथापि मुमुक्षुत्वस्य ब्रह्मविचारस्य च सम्भवात् । नाप्यदृष्टार्था; अवैधत्वादिति भावः । अत्र प्रतिबन्द्या प्रतिवक्ति एवं तर्हीति । धीमात्रतुष्ट्या त्यक्तकर्मविचारश्चेदित्यर्थः । [1]एवं न प्रवर्ततामिति वाऽन्वयः । अपिशब्दाभिप्रेतं हेतुं विवृणोति साङ्गेति । त्वदुक्तादेवेत्यवधारणाभिप्रायः । कृत्स्नस्य=ब्रह्मतदुपास्त्यादेः । अत्राऽऽपातधीश्चेत्, इष्टप्रसङ्गः; न तया विचार्यत्वाभावः । निर्णयस्त्वमीमांसिते कथं स्यादिति मत्वा चोदकः पुनराह सत्यमिति । अङ्गीकृतमर्थं व्यनक्ति आपातेति । तावताऽपि न्यायैरनिर्णीततया, [2]"अन्नमत्ति" इत्यादिभिरल्पास्थिरफलधीः, असदव्याकृताकाशप्राणादिकारणत्वसंशयः, "तान्येवानुविनश्यति" इत्यादिभिरात्मनाशभ्रमश्च न निवर्ततेत्यभिप्रायेणाह—तथापीति । अनिस्तीर्णा प्रतिबन्दिरिति पश्यन् तत्फलत्वेनोत्तरमाह तथैवेति । भवान् । क्वचिदप्यापातधीमात्रादतृप्तो वाक्यान्तराण्यपि निर्दिधारयिषुस्त्वमिति भावः । अत्र हि कर्मभागेऽपि, "अनन्तं ह वा अपारमक्षय्यं लोकं जयति, योऽग्निं नाचिकेतं चिनुते" इत्यादिभिरापाततः अनन्तस्थिरफलधीरस्ति । ब्रह्मज्ञानफलं चानुविनाशादिश्रुत्या आत्यन्तिकप्रलयत्वस्मृत्या चानर्थरूपमिव भाति । अतः स्वरसवृत्त्या प्रथमातिक्रमे कारणाभावात् कर्मविचारनैरपेक्ष्यहेतुर्नास्ति । तदिदमभिप्रेत्योक्तं सारे—"अधीतवेदस्य हि पुरुषस्य कर्मप्रतिपादनोपक्रमत्वात् वेदानां कर्मविचारः प्रथमं कर्तव्य इति, 'अथातो धर्मजिज्ञासा' इत्युक्तम्" इति ।

अथ विद्यापेक्षितमेव तत्त्वविवेकादिकं विचारापेक्षितमिति भ्राम्यन्, कर्मणश्च विद्याविरुद्धतया तद्विचारवृतत्वायोगं मन्वानो गूढाभिप्रायः पर्श्चोदयति—ननु इति । यदेवेति स्वाभिमतचतुष्कव्यतिरिक्तनैरपेक्ष्यपरम् । तस्य परम्परया उपयोगेऽपि विचारजन्मनि तन्नियमो नास्तीति व्यक्तये नियमशब्दः । नियतापेक्षितचतुष्कव्यतिरिक्तस्यापि न सूत्रसूच्यत्वमित्यभिप्रायेण तदेवेत्युक्तम् । तदिहानपेक्षितमेव

1 तर्हीत्यस्य चेदित्यर्थे मानाभावात्, एवं चेत् तर्हीत्यर्थो वक्तव्यः । तद्गौरवपरिहाराय एवमित्येतत् संभवात् उपरि योजयति एवमिति । 2 अन्नमत्ति इति संवर्गविद्यावैश्वानरविद्यादौ ब्रह्मानुभवोक्तिः ।

**ब्रह्मजिज्ञासायाः ; अधीतवेदान्तस्यानधिगतकर्मणोऽपि वेदान्तवाक्यार्थविचारोपपत्तेः ॥**

**कर्माङ्गाश्रयाण्युद्गीथाद्युपासनान्यत्रैव चिन्त्यन्ते ; तत्र अनधिगतकर्मणो न शक्यं**

---

त्वदुक्तमित्याह **न धर्मे**ति । स्वेष्टमपेक्षितांशं सूचयितुमाह **अधीतवेदान्तस्ये**ति । [1]अवयुत्याध्ययने सत्यनाभावेऽपि आपदि वेदान्तमात्राध्यायिन इत्यर्थः । तस्य हि न कर्मण्यापातधीः ; नतरां बुभुत्सा, नतमां विचार इति नियमभङ्गः । यद्वा कृत्स्नाध्येतुरपि स्वापेक्षितांशस्याप्यधीततया सुकृतविशेषमृदितकषायतया च ब्रह्मविचारस्य शक्यत्वात् अधीतत्वमात्रेण ज्ञानार्थेनापि न कर्मणश्चिन्त्यत्वमपीति भावः । एतेन, "धर्मजिज्ञासायाः प्रागपि अधीतवेदान्तस्य ब्रह्मजिज्ञासोपपत्तेः" इति ब्रह्माज्ञानवादिभाष्योक्तमनूदितं मन्तव्यम् । सिद्धान्तिसम्मतां प्रधानयुक्तिमप्रधानीकृत्य, तत्तदुद्गीथादिधीनां साक्षात् ब्रह्मविद्यापेक्षितत्वं प्रकरण्य वा कर्मविचारपूर्वत्वं शङ्कते **कर्मे**ति । **उद्गीथाद्युपासनानी**ति पक्षोक्तिः ; अनधिगतकर्मणोऽशक्यचिन्तनत्वं साध्योऽर्थः ; **कर्माङ्गाश्रयाणी**ति हेतुपरम् । **आश्रय**शब्द इह विषयार्थः ; प्रणयनाश्रयगोदोहनादिवत् उद्गीथादिकमङ्गमाश्रित्य प्रविशत उपासनस्य फलान्तरार्थतया कर्मानङ्गत्वसूचनपरश्च । **आदि**शब्देन उद्गीथैकदेशप्रणवस्य पञ्चविधसामादेश्च ग्रहणम् । **अत्रैव** । न तु कर्मकाण्डे चिन्तितानीति भावः । **अनधिगतकर्मण** इत्यनेन कर्मतदङ्गरूपपदार्थानवगमे वाक्यार्थस्य दुर्ग्रहत्वं सूच्यते ।

[2]ननु, "अव्युत्पन्नपदोपेतवाक्यार्थसत्यभिज्ञानमुपमानम्" इति कैश्चिदुक्तम् ॥ अन्यैरनङ्गीकारात् तत् तथा न । अथापि प्रकृताविरोधं ब्रूमः—न हि ते, 'गोसदृशो गवयः' इत्यादिवाक्ये गवयत्वादिविशिष्टः पिण्डः पदार्थतया अन्वेतीत्याहुः ; किंतु[गवयशब्दवत् पिण्डोऽन्वेतीति ?] 'गोसादृश्यवान् गवयशब्दवाच्यः' इत्येतावति तात्पर्यात् । गवयशब्दादयस्तु पदेन बोधितास्तत्रान्वीयेरन् इति ॥ ननु च आद्यव्युत्पत्तिदशायामविदितपदवाच्यभेदस्य वाक्यार्थधीरस्ति ॥ तत्र किम् ? तत्र हि प्रत्यक्षादिसिद्धे [3]विशिष्टार्थेऽनुमानतो वाक्यस्य बोधकत्वग्रहः ; न तु व्युत्पत्तितो तत्र वचनात् वाक्यार्थधीः [4]तत्र(तदत्र)

---

1 अवयुत्य—पृथक्कृत्य । अवयुत्याध्ययनम्—एकावयवाध्ययनम् । एकदेशाध्ययनम् ।

2 कर्माङ्गोद्गीथेत्येतदर्थज्ञानाभावे कथं तदुपासनविधायिवाक्यार्थज्ञानमिति प्रश्नो न घटते ; उपमानप्रमाणतया स्वीकृतवाक्यस्य व्युत्पन्नपदार्थबोधकत्वस्य तार्किकैरुक्तत्वात् । व्यवहारात् शक्तिग्रहस्थले अव्युत्पन्नपदसमुदायादर्थज्ञानस्येष्टेश्च । किञ्च कर्मानङ्गोद्गीथादिग्रहणसंभवात् कर्मतदङ्गत्वाज्ञानेऽपि न दोषः—इति शंकाद्वयपरिहरणमत्र सिद्धमिति शंकोत्तरमुखेनाह नन्वित्यादिना भाव इत्यन्तेन । अव्युत्पन्नपदं = गवयपदम् । प्रत्यभिज्ञानं = ज्ञापकम् । कैश्चन् = तार्किकैः । अन्यैः—मीमांसकैः । तैः गोसादृश्यज्ञानात् गवि गवयसादृश्यज्ञानमित्युक्तम् । तदपि न सिद्धान्तीष्टम् । तार्किकपक्षोऽपि न त्वदुक्तरूप इत्याह अथापीति । एतावति तात्पर्यात्, गवयत्वोपलक्षणभूतगोसादृश्यबोधन एव तात्पर्यात् । ननु गवयः इति पदस्यार्थोऽपि भासत इति वक्तव्यम्, तदाज्ञाततया गवयाभाने किं भासते । न गवय शब्दः ; तस्य तदर्थत्वाभावादिति चेन्न—गवयशब्दवाच्य इति तदर्थात्, गवयशब्दस्य पदबोधिततया भानसंभवात् । 3 विशिष्टार्थे = प्रयोजकवृद्धकृते गवानयनादिरूपे कार्ये । अनुमानत इति । इदं वाक्यमेतदर्थबोधकं स्वश्रवणसमनन्तरोत्पन्नैतदर्थकत्वादित्यनुमानात् । इदञ्च व्युत्पत्तिग्रहरूपम् । 4 तत्रेति । एवमव्युत्पन्नतायामर्थबोधासंभवे इत्यर्थः ।

**कर्तुमिति चेत्— अनभिज्ञो भवान् शारीरकशास्त्रविज्ञानस्य। अस्मिन् शास्त्रे अनाद्यविद्याकृत-विविधभेददर्शननिमित्त-जन्मजरमरणादिसांसारिकदुःखसागरनिमग्नस्य निखिलदुःखमूल-मिथ्या[ऽ]ज्ञाननिबर्हणाय आत्मैकत्वविज्ञानं प्रतिपिपादयिषितम्। अस्य हि भेदावलम्बि**

कर्मणि विचारित तदङ्गोद्गीथादयः, तास्तु द्गुयोपास्तिविधीः स्यात्। न ह्यत्र कर्माङ्गेषूद्गीथादिषु उपास्तिर्विधीयते; गोदोहनादिवद्गुणफलाविकारत्वादिति भावः।

उक्तमशक्यत्वं दुष्परिहरं संछाद्य धार्ष्ट्यात् स्वकपोलकल्पितप्रकारेण समाधित्सुराभासमते **अनभिज्ञ** इति। शारीरकस्य खल्विदं शास्त्रम्; अत आत्मविज्ञानप्रधानमिति भावः। "शरीरमेव शरीरकम्; तत्र निवासी शारीरको जीवात्मा" इति हि **वाचस्पतिः**। तद्विज्ञानप्राधान्यं विवृणोति **अस्मिन्** इति। शुद्धस्य अविद्यान्वये हेत्वनुयोगमुपरोद्धुम**नादि**शब्दः। मतभेदादविद्यायाः स्वरूपतः [1]प्रवाहतो वाऽनादित्वम्। प्रवाह पक्षेऽनवस्था बीजाङ्कुरादिन्यायनिरुद्धा इत्युक्तम्। **भेदः**—'अहमिदं जानामि' इति ज्ञात्रादिरूपः। स प्रत्येकमवान्तरभेदैर्**विविधः**। तस्य मिथ्यात्वं व्यञ्जयन्**विद्याकृत**त्वोक्तिः। तद्दर्शनं वा तत्कृतमित्युच्यते; तदध्यस्तमित्यर्थः। भेददर्शनं निमित्तं येषामिति विग्रहः। निर्विकारस्य जन्मादिकम् आत्मभ्रान्ति विषयदेहधर्मारोपात्। **आदि**शब्देन निरयादिग्रहः। [2]तैर्दुःखम्। सांख्यवत् मृषावादिनां तादृशोऽन्तःकरणविकारः। मिथ्यात्वेऽपि प्रतिकूलतया जिहासितव्यत्वाय जन्मादिषु वा दुःखत्वोक्तिः। तद्भ्रान्तिप्रवाहाविच्छेदव्यक्त्यै **सांसारिक**शब्दः। अनात्मभिरात्मानमेकीकृत्य पौनःपुन्येन (पुनःपुनः) संसरणं हि **संसारः**। मोघप्रयत्नत्वपरो निमग्नत्वोपचारः, उन्मिमङ्क्षार्थश्च। **मिथ्याज्ञान**मिहात्मनि भेदग्रहः, अनिर्वाच्यरूपमज्ञानं[3] वा। अज्ञानतत्प्रतिभासयोः तत्कार्यप्रतिभासप्रवाहस्य च मिथ्यार्थत्वात् तत्त्वधीमात्रेण बाध्यत्वे किमत्र कर्मणेति भावः। चन्द्रद्वित्वादिधीर्हि तदैक्यधीबाध्या। तद्वदिहेत्यभिप्रायेणात्मैकत्वविज्ञानत्वोक्तिः।

**अशुद्धस्य प्रसिद्धत्वात् शुद्धस्यावाच्यभावतः। अज्ञातं त्वंतदोरैक्यं ख्याप्यमित्यत्र मन्यते॥**
**स्वाध्यायस्य हि कात्स्न्र्येन मानत्वे सत्यपि स्वतः। नाबाधे नानुवादे च नाऽबाधे च मानता॥**

अविचारितबुद्ध्यादिव्युदासार्थो **विज्ञान**शब्दः। एवमिहाधिकारिप्रयोजनसाधनानि ज्ञापितानि। **प्रतिपिपादयिषितम्**—प्रदर्शयितुं प्रापयितुं वेष्टम्। शब्दजन्यज्ञानादेव ह्यपवर्गः। यद्वा आत्मैक्यज्ञानम् अन्येषामपि मोक्षसाधनतया शारीरके प्रतिपाद्यम्। तस्य प्रधानतात्पर्यविषयत्वाय सन्प्रयोगः। ततः किं प्रकृतस्य? तत्राह **अस्येति**। [4]हिशब्दोऽनुयोगस्थैर्यार्थः **भेदावलम्बि** इति विरोधपरम्॥ **कर्मज्ञानम्**

1 प्रवाहत इति। अविद्याया मिथ्यात्वात् कल्पनाधीनत्वात् स्वरूपतोऽनादित्वं न भवतीति शंकानिरासः एतत्पक्षे। परं तु क्षणिकचित्संततिरात्मेति बुद्धमत इव जीवस्य संततिरूपता स्यात्।
2 आदिपदात् तृतीयातत्पुरुषमभिप्रेत्याह तैर्दुःखमिति। कर्मधारयमभिप्रेत्य जन्मादिषु वेति पक्षान्तरम्।
3 अज्ञानमिति। एतत्पक्षे मिथ्या अज्ञानं मिथ्याज्ञानमिति मूलादविग्रहः। 4 प्रश्नवाक्ये हिशब्दः कथमिति मन्वान आह हिशब्द इति। कैयटपक्षे प्रश्नार्थत्वे नेति पर्यवसानात् हीति युज्यत एव।

कर्मज्ञानं क्वोपयुज्यते ? प्रत्युत विरुद्धमेव । उद्गीथादिविचारस्तु कर्मशेषभूत एव ज्ञानरूपत्वाविशेषादिहैव क्रियते । स तु न साक्षात्सङ्गतः । अतो यत्प्रधानं शास्त्रम्, तदपेक्षितमेव पूर्ववृत्तं किमपि वक्तव्यम् ॥

बाढम्—तदपेक्षितं च कर्मविज्ञानमेव; कर्मसमुच्चितात् ज्ञानादप्यपवर्गश्रुतेः ।

---

इह विचाररूपं तत्फलरूपं वा । क्व इत्येतत् स्वरूपोत्पत्तौ कार्ये वेति विवरिष्यते । तच्च तत्साधनानुग्राहकस्याप्युपलक्षणम् । द्वैतवासनाहेतुतयाऽत्यन्तहेयत्वाय वैपरीत्यं प्रथयति प्रत्युतेति । अंशतो वा फलसङ्गादिगुणतो वा निर्वैरत्वं दुर्वचमित्यभिप्रायेणाह विरुद्धमेवेति । उक्तं च नैष्कर्म्यसिद्धौ—

"अयथावस्तुविद्या स्यात् विद्या तस्या विरोधिनी । समुच्चयस्तयोरेवं रविशार्वरयोरिव ॥" इति,

'तमोऽङ्गत्वं यथा भानोरग्नेः शीताङ्गता यथा । वारिणश्चोष्णता यद्वत् ज्ञानस्यैवं क्रियाङ्गता ॥" इति[च?] ।

यदि कर्म विरुद्धम्, तर्हि तदङ्गाश्रयोपासनचिन्ताऽप्यत्र विरुद्धत्वान्न सङ्गच्छते ; कर्मचिन्तायामेव तु निविशतामित्यत्राह उद्गीथादीति । इहोद्गीथाद्युपासनं लक्ष्यते ; तत्स्वरूपस्यात्रामीमांसित[व्य]त्वात् । [1]गुणफलसम्बन्धमपहत्य(हृत्य?) तद्विचारस्य कर्मशेषत्वोक्तिः। फलान्तरार्थत्वेऽपि न परविद्याङ्गत्वमिति च भावः। यद्वा शिष्यत इति शेषः । कर्मविचारैः(रे?) परिशिष्ट इत्यर्थः । अत्र विचार्यमाणानाम् उद्गीथाद्युपासनानां ज्ञानरूपत्वं विवक्षितम् ; न तु तद्विचारस्य ; अतिप्रसङ्गात् । इहैव— विरुद्धशास्त्र एवेत्यर्थः । ननु साजात्याधीनप्रसक्त्याऽपि [2]समुद्रध्यानवत् प्रधानस्यानुपयुक्तं विरुद्धं च न चिन्त्यम् । अतः परविद्याप्रकरणे पाठात् विचारणाच्चाऽऽश्रमादिवत् गत्यादिवच्च तदुपयुक्तत्वं कल्प्यमित्यत्राह--स इति। [3]तुशब्दौ शङ्कानिवर्तकौ (तुशब्दः शंकानिवर्तकः)। यद्यपि साक्षात्, प्रधानोपयुक्ततया वा न सङ्गतिः, तथापि ज्ञानरूपत्वसाम्यात् तदन्वितस्य वीर्यवत्तरत्वोक्त्या च अपरिच्छिन्नफलत्वशङ्कोदयमपाकृत्य धूमादिमार्गवत् जिहासादार्ढ्यमुत्पादयितुमिह तच्चिन्तेति भावः। तर्ह्यत्यन्तानुपयोगाभावात् तदुपयुक्तमपि(मेव?) पूर्ववृत्तमस्तु; तत्राह अत इति। यत्प्रधानम्-यदुपपादनप्रधानम् । एवकारेण प्रासङ्गिकापेक्षितमपि प्रधानस्यानुपयुक्तं विरुद्धं च व्यावर्तते । प्रधानापेक्षितानुक्तिश्च न युक्ता । अप्रधानापेक्षितस्य च वृत्तत्वे वक्तव्ये दूष्यमतविचारादेरपि तथात्वप्रसङ्ग इति भावः । किमपि — त्वदुक्तात् कर्मविचाराद्विलक्षणम् ।

(पूर्वपक्षिणं प्रति भास्करादिपक्षैः प्रत्यवस्थानम्)

अत्र भास्करादिमतस्थो वा सिद्धान्ती वा सर्वविमर्शी पार्श्वस्थो वा परोक्तेस्तात्पर्यविषयांशानङ्गीकारेण प्रतिवक्ति बाढमिति । भास्करोक्तमत्र हेतुमन्थनं, साध्यतश्च प्रत्यभिज्ञायते । [4]अनङ्गीकृतमर्थं

---

1 उद्गीथाद्युपासनस्य कर्माङ्गत्वाभावात् तद्विचारस्य कथं कर्मशेषत्वमित्यत्राह गुणेति । शेषत्वं नाङ्गत्वरूपमित्याशयेनाह यद्वेति । 2 अन्यथा (9-2-14) 'समुद्रं मनसा ध्यायेत्' इति बृहत्सामोद्देश्यकं समुद्रध्यानं पूर्वकाण्डविचारितमपि ध्यानरूपत्वादत्र विचार्यतामिति भावः। 3 (श्रु. प्र.) टीकायामपि तुशब्दद्वयमित्यस्ति । तदपि, 'उद्गीथादि विचारस्तु', 'स तु' इति तुशब्दद्वयविषयकम् । एवं परत्रापि । शंका च तत्तद्वाक्यावतरणदर्शिता । अन्यानुक्तेः । 4 अनंगीकृतमिति । अपेक्षितमेव पूर्ववृत्तं वक्तव्यमित्यंगीकृतांशः । कर्मणोऽनपेक्षितत्वमनंगीकृतांशः बाढपदसूचितोऽत्र विशिष्योच्यते ।

**वक्ष्यति च, "सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्" इति। अपेक्षिते च कर्मण्यज्ञाते केन समुच्चयः, केन नेति विभागो न शक्यते ज्ञातुम्। अतस्तदेव पूर्ववृत्तम्।**

---

विशिंषन् अनिष्टं च क्षिपति तदिति। एवकारोऽनपेक्ष्य प्रासङ्गिका(-सङ्गा)पेक्षि त्यैव प्राधान्येनाप्य-पेक्षितत्वम्, विरोधाभावं च व्यनक्ति। प्रधानोत्पत्त्यादावनु युक्तस्य विचारः कथं तद्विचारापेक्षि इत्यत्राह कर्मेति। अयं भावः—अत्कथुलामशङ्कामतिक्रम्य यथाविधि कर्मसमुच्चिते ज्ञाने प्रवृत्तः केवल-कर्मणामनन्तफलसाधनत्वाभावनिश्चयपूर्विकेति। एतेन, 'अधीतवेदान्तस्य' इत्यादि प्रागुक्तं प्रत्युक्तम्। इह भास्करपक्षे(मते), "तमेतं वेदानुवचनेन" इत्यादिः श्रुतिः। समुच्चितत्वं चात्र, "सहयुक्तेऽप्रधाने" इति तृतीयाश्रुत्या गुणप्रधानतया सम्बन्धः। गुणत्वं च प्रयाजादिवत्। [1]प्रकृतानुपयोगात्तिरो(गात् तिरो?)-धानेन समुच्चयोक्तिः। यादवप्रकाशमते, "सर्वापेक्षा" इति सूत्रमङ्गाङ्गिभावपरम्। "सहकारित्वेन च" इति सूत्रं तु समुच्चयार्थम्। तत्र तु, "विद्यां चाविद्यां च" इत्यादिका श्रुतिः। समुच्चितत्वं तु विशदज्ञानोत्पत्तेः पूर्वं तदु(दुप)पादकतया कर्मणां ज्ञानाङ्गत्वेन; पश्चात्तु मृत्युतरणब्रह्मप्राप्तिरूपफलभेदात् समत्वेन। सिद्धान्ते तु [2]संनिपत्योपकारित्व(कारक)विवक्षया समुच्चयशब्दः। स्वरूपेण कर्मणोऽपेक्षितत्वे सूत्रकृत्संमतिमप्याह वक्ष्यतीति। न ह्यस्मिन् सूत्रे साध्यत्वेन विविदिषोपात्ता, येन तदर्थयमपेक्षोक्तिः स्यात्; विद्या तु प्रकरणसिद्धा। अतः, "विविदिषन्ति" इत्यत्र न विविदिषा विवक्षितेति भावः। चकारः [3]क्वचिन्मते सिद्धान्ते च प्रतिपादकं समुच्चिनोति। मतान्तरे तु प्रतिपाद्यमप्रधानत्वं समत्वेन सह सङ्घट-यति। अस्तु ज्ञानस्यानुष्ठाने यथामतं कर्म अपेक्ष्यम्; तद्विचारे तु किं कर्मविचारेणेत्यत्र दत्तोत्तरत्वेऽपि युक्तिवैभवादुत्तरान्तरमाह अपेक्षिते चेति। यथामतं यथाधिकारम् अपेक्षितत्वम्(अपेक्ष्यते) केन समुच्चयः साधनलक्षणसमर्थयिष्यमाणस्वाधिकारानुगुणनित्यनैमित्तिकवर्गेण। केन [न]। निबन्धककाम्येन स्वाधिकारा-निषिद्धेन चेत्यर्थः। अयं भावः—अनुष्ठानदशायां समुच्चेतव्यस्य तथा[फल]निर्णयाय विमर्शदशायामपि बुद्ध्यारोहोऽवश्यम्भावी। अतः पदार्थभूतकर्मविचारपूर्वकः तदन्वितविद्याविधिवाक्यार्थविचारः। ततश्च विषयफलविशेषावच्छिन्नब्रह्मोपासनचिन्तनस्य कर्मचिन्तासापेक्षतया कृत्स्नस्य शारीरकचतुरध्याय्यर्थविचारस्य कर्मविचारः प्राग्भावीति। तदिह कर्मनिरूपणस्य फलान्तरार्थकर्मपरिहारः फलं, विद्यानुबन्धेन कर्मस्वरूप-मात्रोपादानं चेति न मोघप्रवृत्तित्वम्; नापि विरोधः। यद्यपि विद्यापेक्षितो यज्ञादिपदार्थः साधन

---

1 गुणत्वप्रधानत्वविवेचनस्य गुणत्वावान्तरभेदविवेचनस्य च प्रकृतेऽनुपयोगात् तिरोधानेन तदंशागोपनेन सामान्यतः समुच्चयोक्तिः। तेन सर्वमतरीत्याऽपि शंका। 2 प्रधाने संनिपत्य = प्रधानशरीरं निष्पाद्य तदुत्पादनेनोपकारकत्वम्, सत्त्वशुद्धिद्वारा विद्यानिष्पादकत्वं सिद्धान्ते। प्रयाजादिकं त्वारादुपकारकम् = प्रकारान्तरेणोत्पन्नेऽपि ज्ञाने फलोत्पादनशक्त्याधायकम्। भास्कर-ग्रन्थे प्रयाजदृष्टान्त उक्तः; न तु तद्विवेचनम्। 3 भास्करमतेऽस्मन्मते च श्रुत्या सूत्रेण चाप्राधान्यस्यैवोक्त्या प्रतिपाद्यद्वयाभावात् प्रतिपादकश्रुतिसूत्रसमुच्चयः। यादवप्रकाशमते समुच्चय-श्रुत्या समत्वं, सूत्रेण चाप्राधान्यं प्रतिपाद्यमिति प्रतिपाद्यसमुच्चयोऽपीत्यर्थः।

नैष्कर्म्यकम्; सकलविशेषप्रत्यनीकचिन्मात्रब्रह्मविज्ञानादेवाविद्यानिवृत्तेः। अविद्या-निवृत्तिरेव हि मोक्षः। वर्णाश्रमविशेषसापेक्षसाधनेतिकर्तव्यताद्यनन्तविकल्पास्पदं कर्म सकलभेददर्शननिवृत्तिरूपाज्ञाननिवृत्तेः कथमिव साधनं भवेत्। अतश्च कर्मणामनित्य-

---

लक्षणे स्वर्गमिह सूत्रकृता चिन्तयितुं शक्यः; तथापि कृत्स्नवेदार्थनिश्चायके मीमांसाशास्त्रे कर्माधिकारस्यापि [1]क्वचिच्चिन्त्यत्वादत्र[2] प्राक् चिन्तिते कर्मस्वरूपे लब्धबुद्धिनियोगपूर्वकत्वमत्रस्थापनं युक्तम्। [3]तापत्रयपूर्ववृत्तत्वमतेऽपि विषमत्वेन समत्वेन च कर्मणः समुच्चेतव्यत्वादनन्तरः कर्मविचारपूर्ववृत्तत्वं दुस्त्यजमित्यभिप्रायेण मतचतुष्टयेऽपि फलितमाह **अत** इति। कर्मपरामर्शी तच्छब्दस्तच्चिन्तनं लक्षयति; दूरस्थमपि कर्मविज्ञानं वा परामृशति। अवधारणं विरोधाभावद्योतकम्।

(पूर्वपक्षिकृतस्तन्निरासः)

अत्रात्यन्तनैष्कर्म्यवादी प्रतिवक्ति—**नैतद्युक्तमिति**। श्रुतिविपरीतमप्ययुक्तं त्याज्यम्; अन्यथाऽतिप्रसङ्गादिति भावः। कुत इत्यत्र समुच्चयवादिकल्पितं साधनद्वित्वं तावन्निरस्यति **सकलेति**। भास्करसिद्धान्तिपक्षयोरिह सम्प्रतिपन्नस्य परार्थं, स्वकल्पितविकल्पकोटिनिष्कर्षणार्थं वा **ब्रह्मे**त्यादि उक्तम्। **विशेषाः** भेदाः। सजातीयविजातीयस्वगताः। स्वगतभेदो हि श्रुतोऽप्याविद्यैः उपासनाविधिभिः कल्प्यत इत्यभिप्रायेण **सकल**शब्दः। **प्रत्यनीकत्वम्** इह शुक्त्यादिवत् आरोप्यात्यन्ताभावाश्रयत्वम् तत्स्वरूपत्वं वा; स्वगोचरज्ञानेन स्वध्वस्तनिवर्तकत्वं च। ईदृगस्य मानान्तरस्य शून्यत्वं परिहर्तुं **चिच्छब्दः**। चिद्रूपतया स्वप्रकाशस्य[4] [न?] मानान्तरापेक्षया [च] द्वैतप्रसङ्गः। असद्व्यावृत्त्या च अनाधिष्ठानत्वसिद्धिः। **मात्र**चाचिच्छब्दोत्थापितज्ञातृज्ञेयादिसम्बन्धशङ्काव्युदासः। प्रत्यनीकत्वमप्यन्ततः कल्पितस्यानतिरिक्तं वेति च भावः। **ब्रह्म**शब्देन, "ब्रह्म वेद" इत्यादिसूचनम्। **विज्ञानात्**-श्रवणाद्यनुगृहीतवाक्यजन्यसत्यज्ञानात्। **अवधारणेन** अधिष्ठानयाथात्म्य(र्थ्य)ज्ञानस्य असत्यनिवर्तने कर्मनैरपेक्ष्यं व्यज्यते। "तमेव विदित्वा" इत्यादिभिः प्रतिबन्धकमृत्युतरणस्यापि ज्ञानैकसाधनत्वोक्तेः, 'अविद्यया मृत्युं तीर्त्वा" इत्येतन्न मोक्षस्य कर्मसाधनत्वार्थमिति। अत्र विद्यया मृत्युं प्राप्य स्थित इति तु योजना। साधनद्वित्वनिदानतयेष्टं साध्यद्वित्वमप्यत्र नास्तीत्याह **अविद्यानिवृत्तिरिति**। **एव**कारः कण्ठचामीकरनयात् प्राप्तप्राप्तेरसाध्यत्वं व्यनक्ति। **हि**शब्दस्तु मुक्तेर्ज्ञानमात्रसाध्यतया श्रुतिस्मृतिसूत्रप्रसिद्धत्वं मोक्षशब्दस्वारस्यं च [[5]बोधयति]। ज्ञानकार्ये कर्मणोऽनुपयोगं सर्वथा विरोधं च प्रयुक्तं विवृणोति **वर्णेति**। **आदि**शब्देन निमित्तगुणादेर्वर्णाद्यवान्तरभेदस्य च संग्रहः। **अनन्त**शब्दो व्यवस्थानन्त्यं बाहुल्यं वा विवक्षति। **विकल्पः**=भेदः तद्भङ्गो वा। अन्यपक्षे तु **आस्पद**शब्दो विषयार्थः। निवृत्तेरात्यन्तिकत्वव्यक्त्यै **सकल**शब्दः। कारणनिवृत्तेः कार्यनिवृत्त्यमेयोच्चारेण तद्रूपत्वोक्तिः। तन्निरूप्यत्वाद्वा।

---

1 क्वचित् = पूर्वभागे। 2 अत्र = शारीरके। 3 तापत्रयेति कर्मविचारानन्तर्यरूपाथशब्दार्थ-त्यागियादवप्रकाशमतेऽपि। विषमत्वेन = अंगप्रधानभावेन। 4 मानान्तरापेक्षायां हि द्वैतप्रसंगः तदपेक्षाप्रयुक्तद्वैतप्रसंगः स्वप्रकाशत्वान्नास्तीत्यर्थः। 5 बोधयतीति पाठाभावे व्यनक्तीत्यनुषंगः।

**फलत्वेन मोक्षविरोधित्वम्, ज्ञानस्यैव मोक्षसाधनत्वं च दर्शयन्ति, "अन्तवदेवास्य तद् भवति", "तद् यथेह कर्मचितो लोकः क्षीयते, एवमेवामुत्र पुण्यचितो लोकः क्षीयते", "ब्रह्मविदाप्नोति परम्", "ब्रह्म वेद ब्रह्मैव भवति", "तमेव विदित्वाऽति मृत्युमेति" इत्याद्याः।**

**यदपि चेदमुक्तम्, यज्ञादिकर्मापेक्षा विद्येति-तत वस्तुविरोधात् श्रुत्यक्षरपर्यालोचनया च**

---

अविद्ययेव हि भेदधीः ; अतस्तया तदनुवृत्त्या च तत्सदसम्बद्धौ निरूप्यौ। कथमिव=कथञ्चन्। अत्यन्तासम्भावितं कर्मणामविद्य नितिं (?) त्वम्; प्रत्युत तदनुवृत्त्या संसारप्रापकत्वमेव स्यादिति भावः।

ननु कथं वचनविरुद्धे न्यायः स्यात्? युक्तिविरोधात् भीतस्य च ते श्रुतिविरोधापत्तिरित्यत्राह — **श्रुतय** इति। युक्तेरनुग्राह्यमप्यस्तीति चकाराभिप्रायः। स्वरूपतो विरुद्धत्वं यौक्तिकं प्रागुक्तम्, फलतस्तु श्रौतमिहोच्यते अनित्यमेव हि कर्मफलम्; नित्यम्तु मोक्ष इति। **ज्ञानस्यैव**; न तु कर्मभिस्समुच्चितस्य, विकल्पितस्य, अनुगृहीतस्य चे(वे?)त्यर्थः। युक्त्यनुगुणस्यैवेति वा। **दर्शयन्ति** इत्युक्त्या, 'स्पष्टस्य तर्केणानुसन्धानमप्यधिकम्; अस्फुटार्थश्रुत्य तर च दुर्बलम्' इति सूच्यते। "अविदित्वा' इत्यस्य वाक्यस्य मोक्षसाधनवित्तिरहितो हि कर्म करोतीति तात्पर्यं मत्वाऽऽह **अन्तवदिति**। बहूनां चिरकालानुष्ठितानामपि कर्मणामनित्यफलसाधनत्वमिति अवधारणाभिप्रायः। **तद्यथा** इत्यादौ पुण्यशब्दो न सङ्कोचार्ह इत्याकूतम्। **ब्रह्मवदाप्नोति** इति वाक्येऽपि अवधिः, कर्मसमुच्चयश्च न श्रुत इति ज्ञानस्य नैरपेक्ष्यसिद्धिः। नन्वत्रापि वेदितृवेदितृत्वमात्रस्वरूपकृतैर्भेदधीरस्तीत्यत्राह-- **ब्रह्म वेदे**ति। अनेन नित्यं ब्रह्मभूतस्य भ्रान्तिसिद्धाब्रह्मत्वनिवर्तके(कार्थपरे?) वाक्ये कर्मकर्तृत्वव्यपदेशः काल्पनिक इति ख्याप्यते। न केवलं कर्मसमुच्चयस्याश्रुतत्वम्; प्रतिबन्धनिवृत्तेज्ञानात् निवर्त्यत्वकण्ठोक्तेव धश्चास्तीत्यभिप्रायेणाह **तमेवे**ति। वेवावधारणमप्यत्र वेदनस्य [1]नैरपेक्ष्यमभिप्रैति। [2]सनत्सुजातवाक्यान्मृत्युरिहाविद्या। **आदि**शब्देन, "कमर्था वयं यक्ष्यामहे", "न कर्मणा न प्रजया" इत्यादिसंग्रहः।

**एताः सयुक्तिकाः बह्व्यः स्फुटार्थाः विरुन्धते। अन्यामनुपपन्नार्थामव्यक्तविषयां श्रुतिम् २८६**

[3]विषमस[म]मुच्चये सिद्धान्ते च श्रुतिसूत्राभ्यामुक्तमपेक्षितत्वमनुवक्ति **यदि**ति। **अपरत्व** गहर्थः, यथाभिमते परत्वपरिग्रहप्रयुक्तपाप्न्यरो वा। **चः** प्रतिक्षिप्तश्रुत्यन्तरोक्तसमुच्चये। स्वेष्टश्रुत्यादेर्दुर्बलत्वात् अत्र तात्पर्यानवक्लृप्त्योतम हि **तदि**ति। **यज्ञादिकर्मापेक्षा विद्ये**ति [द्येत्यनेन?] स्वरूपोत्पत्तौ फलोत्पत्तौ वा अपेक्षितत्वेन [4]यत् कर्मेति तदित्यर्थः। [5]उक्तमात्मपरामर्शे तु. न **फलोत्पत्तौ कर्मा-**

---

1 नैरपेक्ष्यमिति। कर्मणाऽनुष्ठेयत्वे तदर्थं कर्मणोऽपि वेद्यत्वात् तमेव विदि वेति न स्यात्। कर्मसमुच्चये तस्य परमात्माराधनरूपेण समुच्चेयत्वात् सगुणस्य वेद्यतया तमेवेति धर्मिमात्रोक्तिश्च विरुध्यते। 2 सनत्सुजातवाक्यम्—'प्रमादं वै मृत्युमहं ब्रवीमि' इति।

3 विषमसमसमुच्चये इति पाठान्तरम्। समशब्दघटनस्येष्टत्वे समविषमेति प्रयोग एव स्यात्। एको विषयसमुच्चयः आरादुपकारकतया कर्मसमुच्चयः। अन्यः समसमुच्चयघटितविषयमसमुच्चयः।

4 उक्तशब्दस्यार्थपरत्वे आह यत्कर्मेति। तत् उपयुज्यते इत्यन्वयात् तत्पदेन कर्मणो ग्राह्यत्वात्

**अन्तःकरणनैर्मल्यद्वारेण विविदिषोत्पत्तावुपयुज्यते, न फलोत्पत्तौ; विविदिषन्तीति श्रवणात्। विविदिषायां जातायां ज्ञानोत्पत्तौ शमादीनामेवान्तरङ्गोपायतां श्रुतिरेवाऽऽह—**

---

**युज्यत** इत्येवंप्रकारेण तत् परिहर्तव्यमिति योज्यम्। उक्तार्थगोचरश्रुतिसूत्रपरामर्शे तु "अविद्यया मृत्युं तीर्त्वा" इत्यादिवत् अर्थान्तरकल्पनानर्हमपीति **अपि**शब्दार्थः। अध्याहारश्च [1]प्राग्वत्। **वस्तुविरोधात्**। भेदवासनासंवर्धकतया अन्तवत्फलतया च [2]आत्माद्वैतज्ञानस्य तत्फलस्य च विरुद्धत्वादित्यर्थः। यद्वा द्वैताद्वैतवासनयोस्तत्फलभूतबन्धमोक्षयोश्च वस्तुनोर्मिथो(?)मिथः प्रातिभट्यादिति। अधीतस्य सम्प्रत्ययस्य वैयर्थ्यमयुक्तमित्यभिप्रायेण **श्रुत्यक्षरपर्यालोचनयेत्युक्तम्। अन्तःकरणनैर्मल्यद्वारेणेति**। इदं तावत् सिद्धान्तिनोऽप्यभिमतम्। तथोत्पत्तावप्युपयुज्यतामित्यत्राह **न फलेति**। फलशब्द इह [3]शास्त्रफलं ज्ञानं, तत्साध्यमोक्षं च सामान्यतो ब्रूते। विद्याया अपि हि फलत्वं वदन्ति — "ब्रह्मावगतिर्हि पुरुषार्थः निश्शेषसंसारबीजाविद्याद्यनर्थनिबर्हणात्" इति। वित्तिमोक्षयोः कर्मोपयोगे श्रुत्यक्षरविरोधं व्यनक्ति **विविदिषन्तीति**। न हि विदन्तीति श्रूयते, न च आपवृज्यन्त इति। ननु यदि श्रुतत्वात् विविदिषासाधनत्वम्; तर्हि, 'क्रियावानेष ब्रह्मविदां वरिष्ठः" इत्यादिश्रुत्या विविदिषायाः पश्चात् वेदनसाधनत्वमपि स्यात्; तत्राह **विविदिषायामिति**। कर्मणां शमादीनां च विद्यार्थतया श्रुतत्वाविशेषेऽपि श्रुत्यैव व्यवहितव्यवहितहेतुत्वेन व्यवस्थापनमित्यभिप्रायेण **जातायामि**त्युक्तम्। **शमादीनामेवे**त्यवधारणेन तेषां कर्मनिवृत्तिरूपतया कर्मसमुच्चयानर्हत्वं व्यज्यते। उत्पत्तिशिष्ट[4]शमदमादिगुणावरोधे[ऽपि?] हि न कर्मणां ज्ञाने विनियोगः शक्यः; किंपुनः विरुद्धगुणावरोधे। 'क्रियावान्" इत्यादि वाक्यं तु कर्मणां स्तावकं[5] न विनियोजकम्। यद्वा यज्ञेनेत्यादौ च वेद[6][साधनविविदिषा?]सहयोगलक्षणतृतीयाकल्पनं समीचीना। अतः कर्मणां वित्त्यर्थविनियोगासिद्धौ न तादर्थ्येन सत्त्वशुद्धिलक्षणद्वारकल्पतिः। विविदिषायां तु विनियोगात् तत्कल्पतिर्युक्तेति भावः। कर्मण

---

यज्ञेत्यादिवाक्येन विद्यापेक्षितत्वेन यत्कर्मोक्तमिति प्रथमवाक्यार्थ उक्तः। यदिति प्रयोगात् यत् फलाभिसंधिरहितव्यक्तिरूपं कर्मेति लभ्यते। यदित्यस्यार्थपरत्वेऽपि यज्ञादिकर्मेत्यादिसूत्रोक्तं यत् कर्मापेक्षत्वमित्यर्थेऽपि, तदिति उपयुज्यत इत्यत्रान्वियात्। 5 यत्तच्छब्दयोः शब्दपरत्वमपि द्वेधा दर्शयति उक्तीति। कर्मणि भावे वा क्तप्रत्ययेन उक्तिरूपवाक्यपरत्वे, तद्वाक्यमिति स्यात्। तस्योपर्यनन्वयात्, 'इति परिहर्तव्यम्' इति अन्ते अध्याहार इति भावः। तत्पदेन श्रुतिसूत्रपरामर्शे परिहर्तव्यमित्यध्याहारायोगात्, 'अनुगुणं योज्यम्' इत्यध्याहार्यम्। एतदाशयेनाऽऽह।
1 प्राग्वदिति। 2 आत्मद्वैतज्ञानस्येति द्वैतपदं न युक्तम्। न चेदं पूर्वतृतीयान्तेऽन्वेति। कर्मण इति हि तत्र पूरणीयम्। चकारोऽपि तदा न घटेत। अतः अद्वैतपदमेव। 3 फलपदं विविदिषाफलतया ज्ञानपरमित्यपि सुवचम्। 4 उत्पत्तिशिष्टगुणेत्यलम्। शमदमादीति वस्तुसदर्थानुवादः। 5 ब्रह्मविदां वरिष्ठ एष क्रियावानित्युद्देश्यविधेयभावः। जीवन्मुक्तिविवक्षा स्यात्। अतो न विद्याहेतुत्वं क्रियाया एतल्लभ्यमित्यभिमानः। 6 वेदनेति न स्यात्। सत्त्वे कुण्डलितपूरणं कार्यम्। यज्ञादेर्विविदिषासहयागविवक्षाऽस्तु। तथाच यज्ञादिकं विविदिषा च संभूय वेदनसाधनमिति कल्पनेत्यर्थः।

**"शान्तो दान्त उपरतस्तितिक्षुस्समाहितो भूत्वात्मन्येवात्मानं पश्येत्" इति । तदेवं जन्मान्तर-**

इव शमादेर्न द्वारसापेक्षत्वमित्यभिप्रायेण **अन्तरङ्गोपायता**मित्युक्तिः । अतोऽपि शमादिभिः कर्मणः समुच्चयक्लृप्त्यर्हता(ताम्) । **श्रुतिरेवाह** । न तु बहिष्ठयुक्त्या, [1]श्रुतेर्लिङ्गादिभिर्वा साध्यत इत्यर्थः । यद्वा श्रुत्या हि कर्मापेक्षत्वशङ्का ; श्रुतिरेव तद्विरुद्धत्वं[2] वक्ति । अविशिष्टं च श्रुतित्वमनयोः । युक्त्यनुग्रहात्तु बलीयस्त्वमस्याः । विविदिषन्तीत्यत्र वेदनलक्षणा च पदान्तरविमर्शापेक्षिणी [3]वाक्यकक्ष्यानिवेशात् विप्रकृष्टा । [4]श्रुतिस्तु प्रथमकक्ष्यायां स्थितेति भावः ।

**समुच्चयवदेवात्र विकल्पोऽपि न कर्मणः । शमाद्यैर्व्यवहितैरसाम्या[5]दिति मन्यते ॥ २८७ ॥**

**[6]भूत्वेति क्त्वाश्रुतेरेषां साक्षादङ्गत्वमीयते ।**

**हित्वा विविदिषादीनां[7] (दीनि?) कल्प्यमन्यत्तु(त्र?) कर्मणः ॥ २८८ ॥**

[8]**शान्तः** विषयदोषदृष्ट्या काम्यादिषु निवृत्तबाह्याक्षः । [**दान्तः?**] 'मनसो दमनं दमः" इति दान्तिः स्मर्यते । "मनसो विजयः शमः ; विजितस्य तस्य तत्त्वविषयनियोगयोग्यता दमः" इति **वाचस्पतिः । उपरतः**—देहयात्रायामपि यदृच्छालाभसन्तुष्ट्या नातिप्रवृत्तः । **तितिक्षुः**—दुर्निवाराणि द्वन्द्वानीति शेषः । **समाहितः**—ब्रह्मण्येकाग्रधीः । **आत्मनि**—शरीरे ; अवधारणमासत्त्य(त्य?)[9]तिशयपरम् । "राहोः शिरः" इतिवद्भेदक्लृप्त्या, "**आत्मन्येवात्मानम्**" इत्युच्यते । न हि वस्तुतः स्वस्मादन्योऽन्यत्र वा मृग्य इति भावः । **पश्येदि**त्यनेन प्रत्यक्षभ्रमस्य तादृशमेव बाधकमिति सूच्यते ।

यदि न कर्मणा धीः, केन तर्हि स्यात् ; विद्योत्पत्तौ चानपेक्षितमपि कर्म, "स खल्वेवं वर्तयन्" इत्यादिश्रुतिबलात् विद्यया विकल्पतः, समुच्चयतः, प्रधानतया, अनुग्राहकत्वेन वा [10]मुक्तावपेक्ष्यतामित्यत्राह **तादिति** । स्वरूपफलविरोधादित्यर्थः । **एवम्**=यज्ञादीनां तृतीयाश्रुत्या विविदिषायां विनियुक्तानां विद्या-साधनत्वासम्भवप्रकारेणेति यावत् ।

**जन्मान्तरशतेत्यादि क्वचित् तादृशसम्भवे । अस्मिन् जन्मनि धर्माणामनाघ्राणाय भाषितम् ॥**

1 श्रुतेर्लिङ्गादिभिरिति । वेदसंबन्धिभिः श्रुतिलिंगादिप्रमाणान्तर्गतैः लिंगादिभिरित्यर्थः । लौकिकं लिंगं हि युक्त्येत्युक्तम् ; तद्वैलक्षण्यज्ञापनाय श्रुतिपदम् । श्रुतैरिति पाठान्तरम् । तदा श्रौतैरिति युक्तम् । 2 विरुद्धत्वमिति । शमादिर्हि कर्मोपरमः । तस्य हेतुत्वोक्तौ कर्मणो विरुद्धत्व-मुक्तमेव भवतीति भावः । 3 श्रुतिलिंगवाक्येत्युक्तवाक्यप्रमाणेत्यर्थः । 4 श्रुतिस्तु =श्रुति-लिङ्गादिप्रमाणेषु श्रुतिस्तु । 5 असाम्यादिति । तत्कार्यकरत्वे हि साम्यम् ; प्रत्युत वैषम्यमेवेति भावः । 6 विनियोजकवैषम्यमप्याह भूत्वेति । शान्तोदान्त इति वाक्ये इदम् । 7 षष्ठ्यन्तत्वे, विविदिषादीनामंगत्वं = तन्निरूपितांगत्वं विहाय अन्यत्र = अन्यत् प्रति अंगत्वं कल्प्यमित्यर्थः । अंगत्वमित्यनुषंगात् । द्वितीयान्तत्वे तानि श्रुतानि त्यक्त्वा अन्यत् = वेदनं अंगितया कल्प्यमित्यर्थः । आदिना धर्मेण पापमपनुदति, आहारशुद्धौ सत्त्वशुद्धिरित्युक्तपापध्वंसादिपरिग्रहः । 8 शमदम-शब्दौ साधारणौ । तत्र प्रथमप्रयुक्तपदस्य बाह्येन्द्रियोपरमोऽर्थो ग्राह्य इत्युत्सर्गः । तदनुसरणं युक्तम् । अतो वाचस्पत्यनुसरणमेवाद्वैतिना कार्यमिति नेति भावः । 9 आसत्त्यतिशयेति युक्तः पाठः । आसत्तिः-सामीप्यम् । संनिकृष्टत्वम् । 10 मुक्तौ =मुक्त्यर्थम् ।

**सदनुष्ठित - अनभिसंहितफलविशेष - कर्ममृदितकषायस्य विविदिषोत्पत्तौ सत्याम्, 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्', 'सत्यं ज्ञानमनन्तं ब्रह्म', 'निष्कलं निष्क्रियं शान्तम्', 'अयमात्मा ब्रह्म', 'तत्त्वमसि' इत्यादिवाक्यजन्म(न्य)ज्ञानादेवाविद्या निवर्तते ।**

**अतो विविदिषार्थश्च नास्मिन् जन्मनि कर्मणः । विचारवृत्तता सूत्रे वक्तव्येत्यभिमन्यते ॥**

नतु [1]फलतो बन्धकं कर्म कथं विविदिषासाधनमपि स्यादित्यत्राह — **अनभिसंहितफले** इति ।

**[2]अनिष्टोऽपि भवेद् दण्डः प्रतिषिद्धेषु लोकवत् । काम्येषु तु फलं तत्तद्विनियोगानुसारतः ॥**

चित्तशुद्ध्यर्थाव्यवच्छेदाय **विशेष**शब्दः "कषाये कर्मभिः पक्वे ततो ज्ञानं प्रवर्तते" इत्यादिस्मृतिवाक्यं श्रौतविनियोगबाधात् व्यवधानसहमित्यभिप्रायेणोक्तम् **मृदितकषायस्य विविदिषोत्पत्तौ सत्याम्**इति । **कषायः**— कल्मषम्, रागादिश्च । नात्र कर्मणामव्यवधानेन प्रमाजनकत्वम्; प्रमाणेष्वनन्तर्भावात् । अतो निर्विशेषब्रह्मात्मैक्यधीः तत्त्वावेदकवाक्यजन्येत्यभिप्रायेण तादृशवाक्योपादानम् । तत्र कारणत्वेन [3]लक्ष्यत्वात् ब्रह्मणः प्रथमं कारणवाक्यमाह **सदेवे**ति । अवधारणाभ्याम्, **अद्वितीय**पदेन च [4]औचित्यात् विजातीयसजातीयस्वगतभेदनिरासः । षड्विधतात्पर्यलिङ्गोपेतसद्विद्याबलात् गुणोक्तिमत्कारणवाक्यानि [बाध्यानि ?] स्तुत्यादिपराणि वेति भावः। सद्विद्योक्तनीक्षणादिकमपि बाध्यमित्यभिप्रायेण शोधकैरपि निर्विशेषत्वमाह **सत्यमि**ति । अनृतजडपरिच्छिन्नत्वव्यावृत्तिरिहाभिप्रेता । सत्यादिवाक्यस्य व्यावृत्तिपरत्वव्यक्त्यै शाब्दं विशेषनिषेधमाह **निष्कलमि**ति । निरंशमिति यावत् । **निष्क्रियं** निष्पन्दं निर्व्यापारं वा । **शान्तं** वस्तुतः षड्भिर्भावविकारैः ऊर्मिभिश्च त्यक्तम् । सर्वजीवोद्देशेन तद्व्यापकतया ब्रह्मैक्यविधिमाह **अयमि**ति । सद्विद्यायामभ्यासतमेन पित्रा पुत्रं प्रति तात्पर्यभूम्ना तद्विधिं वक्ति **तत् त्वमि**ति । आदिशब्देन, "आत्मा वा इदमेक एवाग्र आसीत्", 'आनन्दो ब्रह्म", "यत्तदद्रेश्यमग्राह्यम्", "तद्योऽहं सोऽसौ" इत्यादिग्रहः । वाक्यादेव **जन्म** यस्य **तत् वाक्यजन्म;** तस्मात् ज्ञानात् प्रत्यक्षरूपादिति शेषः । तत एवाविद्या निवर्तते । राजत्वोपदेशेन व्याधत्वादिभ्रमनिवृत्तिवदिति भावः ।

**ज्ञानादेवेति निर्धारः कर्मणो मुक्तिसाधने । समुच्चयविकल्पाङ्गप्रधानत्वापनुत्तये ॥ २९२ ॥**

[5]"स खलु" इत्यादिकमन्यपरम् । ध्याननियोगजन्यज्ञानपक्षं तु दूषयिष्यति ।

नन्वदृष्टस्य सर्वकार्यहेतुतया कर्मणो वाक्यसहकारित्वात (कर्मापेक्षा स्यादेव ?) अविधेयज्ञाना

---

1 अस्त्वनाग्रणम् । तेन किं प्रकृते इत्यत्राह अत इति । वेदनांगतया कर्मणामनुष्ठेयतया कर्मविचारस्यानपेक्षितत्वेऽपि विविदिषार्थं तेषामनुष्ठेयतया कर्मविचारवृत्तत्वं सूत्रे वक्तव्यमस्त्विति शंका अतो निवर्तते । विविदिषार्थम् कर्मणो विचारस्य वृत्तता न वक्तव्या, अस्मिन् जन्मन्यनुष्ठेयत्वाभावात्। 2 काम्यनिषिद्धयार्वैषम्यं दर्शयति अनिष्ट इति । 3 लक्ष्यत्वात् = उपलक्ष्यत्वात् । कारणत्वलक्षणेन ज्ञातव्यत्वादिति वा । 4 औचित्यादित्यनेन भेदत्रयनिरासप्रकारः परः परोक्तो न स्वरस इति ज्ञाप्यते । 5 'स खल्वेवं वर्तयन्' इति वाक्यं विविदिषार्थकर्मानुष्ठानव्यापृतियस्मिन् जन्मनि, तद्वत्पुरुषपरम् ।

वाक्यार्थज्ञानोपयोगीनि च श्रवणमनननिदिध्यासनानि। श्रवणं नाम वेदान्तवाक्यानि आत्मैकत्वविद्याप्रतिपादकानीति तत्त्वदर्शिन आचार्यात् न्याययुक्तार्थग्रहणम्। एवमाचार्योपदिष्टस्यार्थस्य स्वात्मनि, एवमेव युक्तमिति हेतुतः प्रतिष्ठापनं मननम्। एतद्विरोध्यनादिभेदवासनानिरसनायास्यैवार्थस्यानवरतभावना निदिध्यासनम्। श्रवणादिभिः निरस्तसमस्तभेदवासनस्य वाक्यार्थज्ञानमविद्यां निवर्तयतीति, एवंरूपस्य श्रवणस्यावश्यापेक्षितमेव पूर्ववृत्तं वक्तव्यम्। तच्च—नित्यानित्यवस्तुविवेकः, शमदमादिसाधनसम्पत्,

---

न्मुक्तिरिति पक्षे श्रवणमननपूर्वकध्यानविधेः त्रयाणां वा विधीनां वैयर्थ्यं च स्यादित्यत्राह **वाक्यार्थेति**। अदृष्टं हि दृष्टोपनायकम्। तत्सिद्धैः श्रवणादिभिः शमादिभिश्च वाक्यं(कर्म?)(अदृष्टं?) चरितार्थम्। ततो विश्वबाधकज्ञानोत्पत्तौ दृष्टोपकारितया श्रवणादित्रयसाफल्यमित्याशयः। ननु [नित्य]निर्विशेषस्वप्रकाशे शास्त्रवैयर्थ्यम्; 'ब्रह्मवित्' इत्यादिषु कर्मकर्त्रादिभेदोक्तिविरोधः; ऐक्यतत्त्वदर्शी च न शिष्यं पश्येत्; भेदभ्रमोपेतश्च कथं वाक्यं श्रावयेदित्यत्राह **श्रवणमिति**। अत्रेत्युपस्कार्यम्। **तत्त्वदर्शिन इत्यपि** स्वाभीष्टविशेषाभिप्रायम्। **प्रतिपादकानि**—प्रदायकानि, [1]उत्पादकानीति वा। कर्ममीमांसा हि अविद्वदर्था कर्तव्यस्थापिका। ब्रह्ममीमांसा तु तत्त्वबोधोत्पादनेन सर्वकर्तव्यनिवर्तिकेति विशेषः। अपार्थधीव्यावृत्त्या मीमांसाफलव्यञ्जनाय **न्याययुक्त**त्वोक्तिः। वस्तुतो(नो?)ऽत्र **न्याययुक्त**त्वं स्वरूपत एव ग्रहणमिति केचित्। भेदभ्रमनिवर्तकधीहेतुतया शास्त्रादेः सफलत्वम्। आविद्यभेदानुवादेन तन्निषेधे तात्पर्यात् अविरोधः। ऐक्यदर्शिनोऽपि बाधितानुवृत्तेराचार्यत्वाभिमानेन श्रावकत्वमिति भावः। न्याययुक्तग्रहणे किं पुनर्मननेनेत्यत आह **एवमिति**। **स्वात्मनि** स्वचित्ते। **हेतुतः प्रतिष्ठापनम्**=संशयादेरपुनरङ्कुरत्वाय युक्तिसंस्कारपटिम्ना दृढावस्थापनमित्यर्थः। ननु ताभ्यामेव विपरीतावष्टम्भो निवर्तेत; अन्यथा तद्वैफल्यात्; किमत्र ध्यानेनेत्यत्राह **एतदिति**। एतदुक्तवाक्यजन्याद्वैतसाक्षात्कारविरोधिनीनां भेदवासनानां निरासकतया ध्यानं सफलमिति भावः। श्रूयते च, "तस्मै मृदितकषायाय तमसः पारं दर्शयति भगवान् सनत्कुमारः" इति। स्यादेतत्—ध्यानपर्यन्तोपकारेण शास्त्रे कृतकृत्ये योगबलान्निवर्तकधीः; अन्यथा चक्रकं स्यादित्यत्राह **श्रवणादिभिरिति**। निवृत्ते हि प्रतिबन्धे हेतूनां यथावत्कार्यकरत्वम्, हेत्वन्तरान्वेषणे तु गौरवम्। अतो वाक्यत एव वैशद्यवती निवर्तकधीः श्रवणात्पूर्वमिव श्रवणतोऽप्यविशदधीरेव; तदुपजीवनेन मननादिक्रमेण ज्ञानान्तरस्य साध्यत्वान्न चक्रकमिति भावः। इतिर्हेतौ। एतेषु पर्वसु कथञ्चिदपि कर्मनैरपेक्ष्यादित्यर्थः। **एवंरूपस्य** कर्मनिरपेक्षनिवर्तकज्ञानमूलकारणस्येति यावत्। साधारणानियतानुपयुक्तानां व्यावृत्त्यै **श्रवणस्य-अवश्य-अपेक्षितमिति** पदत्रयम्। तादृशं त्वदिष्टं किमित्यत्र हार्दमुद्गिरति **तदिति**। "नास्त्यकृतः कृतेन", "शान्तो दान्तः", "येनाहं नामृता स्यां किमहं तेन कुर्याम्", "तं मा भगवान् शोकस्य पारं तारयतु" इत्यादिभिरेतच्चतुष्टय-

---

1 प्रतिपादकानीत्यस्य, भगवानेव स्वस्मै स्वप्रीतये इदं कर्म प्रतिपादयतीत्यादिस्थल इत्यर्थ इति भावः।

**इहामुत्र फलभोगविरागः, मुमुक्षुत्वं चेत्येतत्साधनचतुष्टयम् । अनेन विना जिज्ञासानुपपत्तेः । अर्थस्वभावादेवेदमेव पूर्ववृत्तमिति ज्ञायते ।**

**एतदुक्तं भवति—ब्रह्मस्वरूपा[1]च्छादि(द)काविद्यामूलमपारमार्थिकं भेददर्शनमेव**

---

सिद्धिः । अस्यावश्यापेक्षितत्वं कुतः ? तत्राऽऽह **अनेनेति** । अनित्यजिहासा, नित्योपादित्सा च ऊह्निवेकतः । तत्पूर्वको विचारस्तु स्वरूपफलयोः चित्तविक्षेपनिवर्तकशमाद्यपेक्षः। अन्यविरागश्च शमाद्यर्थः। एतेषां न कर्मविचारवत् व्यभिचारो व्यवधानं वा । एतदन्यतमवैकल्येऽपि त्याज्योपादेयजिहासोपादित्सयोरसिद्धेः उक्तप्रकारश्रवणं न सिध्येदिति भावः । कर्मविचारोऽपि विवेकोपयोगात् वृत्तत्वेन वक्तव्य इत्यत्राह—**अर्थेति** । शमादेः कर्मनिवृत्तिरूपत्वम् कर्मणोऽनुपयुक्तविरुद्धत्वे तत्त्वज्ञानस्य ध्वस्तनिवर्तनेऽन्यनिरपेक्षत्वं च **अर्थस्वभावः** । ज्ञानस्यैवापेक्षितत्वे [तत्]साधनचतु[पूर्व]ष्कस्य वृत्तत्वे च यो हेतुः तस्मादेवेति आद्यावधारणम् । एवं वाक्यद्वयेन चतुष्कस्यायोगान्ययोगव्यवच्छेदावुक्तौ ।

नन्वज्ञानादिप्रत्यनीकस्वप्रकाशे [निर्विशेषे] नित्यमुक्ते ब्रह्मणि कथमविद्यातिरोधानभेददर्शन-बन्ध-तन्निवृत्ति-निवर्तकादीनां सम्भवः ? कर्मकृतस्य बन्धस्य [2]निष्कृतिनयात् कर्मविशेष एव निवर्तकः स्यात् । निवर्तकज्ञानं च, "ततो ज्ञानं प्रवर्तते" इति स्मरणात् कर्मसाध्यम् । कथं च बन्धकस्वभावस्य कर्मणः क्वचिन्मुमुक्षोपयोगः ? अन्तःकरणस्य कुतः कीदृङ् मालिन्यम् ? कुतश्च कीदृङ् नैर्मल्यम् ? कर्मणश्च प्रमाणतन्त्रं ज्ञानं प्रतीव विषयानुकूल्यधीनिघ्नां विविदिषां प्रत्यपि कारणत्वं न दृष्टम् । निवृत्तिधर्मस्य मोक्षहेतुत्वाभावे तद्वाक्यवैयर्थ्यप्रसङ्गः इत्यादिशङ्काशङ्कून् उद्धरन् कण्ठोक्तमाभिप्रायिकं च संकलय्य दर्शयति **एतदिति** ।

**प्रपञ्चितस्य संक्षेपः संक्षिप्तस्य प्रपञ्चनम् । एतदुक्तंभवतिना समाधिर्व्याकुलस्य च ॥२९३॥**

आच्छादकत्वोक्त्या भावरूपत्वं सूच्यते । तत एव तदुपहितस्योपादानत्वसंभवः । अविद्यया मनागिव छन्न(मनागवच्छिन्न)त्वात् ब्रह्मण्यध्यासाद्युपपत्तिः । स्वप्नदृष्टपुरुषान्तरादिभेददर्शनसाम्यसूचनाय **अपारमार्थिक**शब्दः । **भेददर्शनमेव** इत्यत्र देहात्मैक्यबुद्धावपि कर्तृत्व-भोक्तृत्व-देवत्वमनुष्यत्वादिभेददर्शनमन्तर्णीयते । तेन देहातिरिक्तत्वज्ञानमेवालम्; किमकर्तृत्वादिविशेषितब्रह्मज्ञानेनेति च शङ्का निरस्ता । कर्मणोऽपि न स्वयं बन्धकत्वम्, दृष्टोपनायकसाधारणनिमित्तत्वात् । अतो भेदभ्रमसिद्धस्य कर्मणोऽप्यपारमार्थिकत्वात् भेदभ्रमद्वारेणैव बन्धकत्वाच्चात्र ज्ञानेतरनिवर्त्यं सत्यं न किमपि बन्धकमस्ती-

---

1 आच्छादिकाशब्दविषये भाष्यार्थदर्पणे लिखितमपि द्रष्टव्यम् । 'आच्छादकत्वोक्त्या' इत्येवात्र तत्त्वटीकायाम् । अथवा ज्ञानस्यामिथ्यात्वेऽपि निवर्तनसंभवात्, विषयमिथ्यात्वस्यैव वाच्यतया अपारमार्थिकमित्येतदन्तं पृथग्वाक्यमित्यपि विमृश्यते । मूलभावप्रकाशिकायाम् आच्छादकविद्येत्येव मूलपाठ आदृतः । 2 निष्कृतिनयात् = प्रायश्चित्तभूतकर्मन्यायेन ।

बन्धमूलम् । बन्धश्चापारमार्थिकः । स च समूलोऽपारमार्थिकत्वादेव ज्ञानेनैव निवर्त्यते । निवर्तकं च ज्ञानं तत्त्वमस्यादिवाक्यजन्यम् । तस्यैतस्य वाक्यजन्यस्य ज्ञानस्य स्वरूपोत्पत्तौ कार्ये वा कर्मणो नोपयोगः । विविदिषायामेव तु कर्मणामुपयोगः । स च पापमूल-

---

त्यवधारणाभिप्राय नन्वसत्य स्मत्यसिद्धिस्तन्मतेऽपीत्यत इ बन्धश्चेति बन्धस्य अबाधितत्वे हि [सत्यत्व]सत्यत्वशङ्का ; ब्रह्मणो नित्यमुक्तत्वविरोधश्चेति भावः । निवर्तकज्ञानान्यायपरिहाराय इ स चेति । सत्कर्मणा पापनिवृत्तिश्च श्रुतिसिद्धा अतो मूलभूताविद्यानिवृत्ति बन्धनिवृत्तिं कुर्वन् ज्ञानं कर्मापेक्षं जु- सर्पनयात् कर्म निरपेक्षाद्वैतबुद्ध्यैव बाध्यमित्यभिप्रायेण ज्ञानेनैवेत्युक्तम् मोक्षसाधनस्य कर्मसमुच्चया भावेऽपि स्मृतिवशात् तदुत्पादकस्य[1](त्वं?) स्यादित्यत्राह निवर्तकमिति । अयं भावः-विगीतं [2]प्रमाणजन्यं निवर्तकज्ञानत्वात् अविगीतवत् न कर्मजन्यमिति वा साध्यम् । स्मृतिस्तदन्यपरा । परिशेषात् तु एव हेतुकत्वं स्वोक्तयुक्तिबलादिति । परोक्त कर्मोपयोगः प्रमाणशून्य इत्यभिप्रायेण इ तस्यैतस्येति तस्य= अद्वैत गोचरस्य कर्मव्यतिरिक्तकारणतदनुग्राहकवतः एतस्य स्वविषयनिरुद्धावधे स्वयमेव सन्धेयस्य [3]अन्वय व्यतिरेकवत (?) कारणान्तरव्यपोहाय वाक्यजन्यत्वोक्तिः । "यज्ञेन विविदिषन्ति" इति श्रुतेर्यज्ञादीनां विनियोगपृथक्त्वेन पृथक्फलयोरावृत्तिरेति स्वपक्षे-विविदिषायामिति । यथ श्रुतावामध्यवधारणा- भिप्रायः। तत्र प्रयोजनं हि इहेष्टं तु गतेऽपि न ज्ञानसंयोगे अपि ॥ जिज्ञासेत्यादौ(दिवत्) कृष्णानिर्बाधमिद्धौ। अथ मनोमालिन्यादिकं विवृणोति स चेति धर्मस्य पापनिवृत्त्यादि [4]साध्यान्तरं(?) विहितश्रद्धायाः सत्त्वरूपसाध्यान्तरं च [विहितश्रद्धाया सत्त्वशुद्धिरूपसाध्यान्तरञ्च ?] शास्त्रसिद्धम् । अतस्य ज्ञानसाधन- त्वोक्तिश्च परम्परया स्यात् । पापमूलरजस्तमोविवृद्धिर्मनोमालिन्यम् । धर्मेण तदनुवृत्त्या सत्त्वशुद्धेर्नैर्मल्यम् ।

कर्मभिः शुद्धचित्तस्य तत्त्वे स्या[5]दनुकूल(दानुकूल्य)धीः ।
निर्णिनीषा ततस्तस्मिन् कर्मजैवं भवेदिति ॥ २९४ ॥

---

1 वाक्यजन्यस्येति श्रु-प्र. पाठः । वाक्यजन्यज्ञानस्य पा० । तदुत्पादकस्येत्यत्र तदुत्पादक- त्वमिति पाठ्यम् । 'निवर्तकज्ञानञ्च स्मृतिबलात् कर्म साध्यमिति प्रागुक्तावतारिकार्थानुवादत्वादस्य। कर्मसमुच्चितवाक्यजन्यत्वपक्षः पूर्वफक्किकायामवामेवनिरस्तः ।

2 कर्मणो विकल्पेन प्रमाणनिरपेक्षतया कारणत्वे तद्बाधः प्रथमेनानुमानेन; विकल्पेन वा समुच्चयेन वा सर्वथापि बाधो द्वितीयेन । 3 अद्वैतज्ञानस्य बन्धनिवृत्तेश्चान्वयव्यतिरेकादर्शनेऽपि सामान्यतस्तत्त्वज्ञानानृतनिवृत्त्योस्तत्सत्त्वमालोच्य, 'अन्वयव्यतिरेकवतः' इत्युक्तम् । पश्चात्प्रयुक्त- तया उपरि तत्पदान्वये तु कारणान्तरस्येति व्यस्तपाठः कार्यः । 4 साध्यान्तरमिति । काम्यफल- विलक्षणं विविदिषारूपान्तिमफलविलक्षणञ्च फलं विविदिषोत्पत्तिद्वारभूतं साध्यमिति । [......] एवं कुण्डलितमत्र न स्यात । सत्त्वे ऊहितरीत्या शोधनीयम् । रजस्तमोवृद्धिनाशे सृष्टिमध्ये गुणत्रय- साम्यस्याभावात् सत्त्वविशुद्धिर्भवत्येव । श्रद्धायां तु सुतराम् । 5 अनुकूलधीः =पुरुषार्थत्वबुद्धिः । निर्णिनीषा =विविदिषा । इतिशब्दः उपपादनसमाप्तौ ।

रजस्तमोनिबर्हणद्वारेण सत्त्वविवृद्ध्या भवतीति इममुपयोगमभिप्रेत्य, "ब्रह्मणा विविदिषन्ति" इत्युक्तमिति । अतः कर्मज्ञानस्यानुपयोगादुक्तमेव साधनचतुष्टयं पूर्ववृत्तमिति वक्तव्यम् ।

लघुसिद्धान्तः

अत्रोच्यते—यदुक्तमविद्यानिवृत्तिरेव मोक्षः, सा च ब्रह्मविज्ञानादेव भवतीति ; तदभ्युपगम्यते । अविद्यानिवृत्तये वेदान्तवाक्यैर्विधित्सितं ज्ञानं किंरूपमिति विवेचनीयम् ; किं

---

अत्र प्रथम इष्टहेतौ । लोकवृत्त श्रुतिस्वारस्यानुगुणनिर्वाहादित्यर्थः । इमम् विविदिषोत्पत्तावपि त्रिचतुष्कक्ष्याव्यवहितमिति यावत् । अभिप्रेत्य—शाब्दत्वाभावेऽपि श्रुत्यन्तरेण स्मृत्या च स्वीकृत्य । ईदृशोपयोगात् नित्यतद्धर्मविधेश्च साफल्यमिति भावः। अतोपायशोधने वक्तव्यशेषं न किञ्चिदित्यभिप्रायेण निगमयति अत इति । उपादातुं हेतुं वा ज्ञानतद्विचाराभ्यां कर्मतद्विचारयोरनपेक्षणादित्यर्थः । अत्रायंसंग्रहस्तूलिकास्थः- 'विरोधादप्रमाणत्वात् चित्तशुद्ध्युपयोजनात् । ज्ञानमात्रस्य हेतुत्व(त्वे) श्रुतेः सामर्थ्यतोऽपि च ॥ शमाद्यङ्गकताम्नानात् न धीकर्मसमुच्चयः । श्रवणादिकमोन्निद्रवाक्यजा धीर्विमोचिका " ॥ इति । विरोधात्=स्वरूपतः फलतश्चेति शेषः । अप्रमाणत्वात्=कर्मणां ज्ञानतत्फलयोः साधनत्वे प्रमाणशून्यत्वात् । यद्वा प्रमाणत्वाभावात् । सामर्थ्यतः=मिथ्याभूतबाधे ज्ञानस्यैव पर्याप्तत्वात् । धीकर्मसमुच्चयः मतत्रयोक्तप्रकारः । उन्निद्रत्वं=प्रतिबन्धनिवृत्त्या पुष्कलत्वम् ॥ ........................

[1]अविरोधविहीनत्वात् ख्यातत्वादुपपन्नवत् । पक्षेऽस्मिन् दूषणं वाच्यमत्रोच्यत इतीर्यते ॥

इह तावत् साध्यसाधनद्वित्वनिरासं विरुद्धांशभङ्गाय 'यदुक्तम्' इत्यादिना सामान्यतोऽनुमन्यते । अविद्यातन्निवृत्तिब्रह्मतद्विज्ञानेषु तत्तत्प्रकारविशेषतो [2]विमतिरस्त्येव । स्वमते ह्यविद्यानिवृत्तिर्नाम स्वाभाविकधीप्रसरप्रतिबन्धकस्य कर्मणोऽत्यन्तोच्छेदः । [3]स च भावान्तररूपः ।

प्रतिबन्धनिवृत्त्यंशोऽनिष्टभङ्गः इहोदितः । धीविकासः स्वतः सिध्यन् इष्टप्राप्तिर्विवेचकैः ॥

अतो नावधारणविरोधः । ब्रह्मतद्विज्ञाने च परमार्थब्रह्माकारे । न वयं तद्विज्ञानस्य कारणत्वाभावं, कर्मसमुच्चितत्वं, फले तत्सहकृतत्वं वाऽभ्युपगच्छाम इत्यभिप्रायेण ब्रह्मविज्ञानादेवेत्युक्तम् । अभ्युपगम्यते चेत्, किं दूष्यमित्यत्र निवर्तकज्ञानप्रकारे तावत् विगानमाह अविद्येति । विधित्सितम्—स्वमते साधनतया चोदयितुमिष्टम् ; परमते तूत्पिपादयिषितम् । एवं [3]तन्त्रोक्तं विभजते–किंरूपमिति । किं कर्मनिरपेक्षतया त्वदुक्तम्, उत कर्माङ्गतया असदु(मदु)क्तमित्यर्थः । विवचेनीयम्—अन्यतरकोटिनिरसनेन कोट्यन्तरतया परिशेषणीयमिति यावत् । सङ्कलितं विविङ्क्ते किमिति । वाक्यार्थ-

---

1 परोक्तमविरुद्धं चेत्, दूषणं न वाच्यम । स्वत एवानुपपन्नत्वद्ध्यातं चेत्–तदाऽपि न वाच्यम् । तथा च सति विरोधे अविरुद्धवद्भातत्वात् दूषणं वाच्यमित्यर्थः । 2 अस्त्येव विमतिरिति । तथा च शब्दैक्यमात्रम् । अर्थस्तु भिन्न एव । नन्वविद्यानिवृत्तिरूपानिष्टनिवृत्तिवत् इष्टप्राप्तिरूपफलान्तरस्यापि सत्त्वात् कथम् एवकारः ? तत्राह स चेति । इष्टप्राप्त्यनिष्टनिवृत्तिरूपार्थभेदो न । अभावस्य भावान्तरत्वात् । 3 तन्त्रोक्तं = तन्त्रेण = अर्थद्वयपरसकृत्प्रयोगेण विवक्षितम् ।

**वाक्याद्वाक्यार्थज्ञानमात्रम्, उत तन्मूलमुपासनात्मकं ज्ञानमिति। न तावद् वाक्यजन्यं ज्ञानम्, तस्य विधानमन्तरेणापि वाक्यादेव सिद्धेः; तावन्मात्रेणाविद्यानिवृत्त्यनुपलब्धेश्च। न च वाक्यस्य-भेदवासनायामनिरस्तायां वाक्यमस्याविद्या[या] निवर्तकं ज्ञानं न जनयति;**

---

गोचरस्मृतिरूपविधेयव्यावृत्त्यै **वाक्यादि**त्युक्तः। इन्द्रियसम्बन्धात् वाक्यतः तत्स्वरूपधीः स्यात्; [1]पुत्राद्यनुमा च। तद्व्यवच्छित्त्यै वाक्यार्थग्रहणम्। ध्यानादिव्यवच्छित्तये **मात्र**चोक्तम्। परस्य वाक्यार्थज्ञानं जीवपरयोरैक्यधीः; स्वस्य तु प्रकारप्रकारित्वबुद्धिः; अतः तन्मूलत्वोक्तिरविरुद्धा। मननादिव्यावृत्त्यर्थम् उपासनात्मकत्वोक्तिः। परेष्टं दूषयति **न तावदि**ति। तिष्ठतु पक्षान्तरम्; इदं तु नैवेत्यर्थः परकल्पित-पश्चिमवाक्यार्थज्ञानस्यासम्भवं वक्ष्यन् सर्वसंमतप्रथमवाक्यार्थज्ञानस्य उपायत्वे, 'द्रष्टव्यः' इत्यादिविधिवैयर्थ्य-प्रसङ्गं विधिनिरतत्पदसूचितमुद्घाटयति **तस्येति**। विधेः शब्दजन्यज्ञाने निर्व्यापारत्वं परैरेवोक्तम्; "प्रमाणं ज्ञानं वस्तुतन्त्रं न पुरुषतन्त्रं कर्तुमकर्तुमन्यथा कर्तुमशक्यत्वात्" इत्युक्तेरित्याशयः। **वाक्यात्**; स्वरूपपरवाक्यादिति यावत्। एवकारो विधिनैरपेक्ष्यम्, बाध्यवासनायाः प्रतिबन्धकतायोगञ्च व्यनक्ति। **सिद्धेः** उत्पत्तेः। न तावदिह वाक्यजन्यं ज्ञानं तत एव वाक्यात् बोध्यम्, [2]संसर्गतया संसृष्टतया वा प्रवेशाभावात्। नापि, "प्रज्ञां कुर्वीत" इत्यादिवाक्यान्तरैः; सिद्धस्याविधेयत्वात्। साधनत्वेन चोदनं चानपेक्षितम्; अदृष्टार्थत्वानभ्युपगमात्। फलान्वये च सामर्थ्यतः साधनत्वावगतेः। अतो विधि-वैयर्थ्यमित्याशयः। ननु विध्यनुसा(का?)रित्वान्न विधित्वमिति चेत् — तथापि तादृशाम्नानवैयर्थ्यं दुरति-क्रमम्। विधिवैयर्थ्योक्त्या आप्रयाणादनुष्ठेयविधेयाकारवर्गवादिनां ब्रह्मनाडीनिष्क्रमण—देवयानगत्यादि-वादिनां च शास्त्राणां वैयर्थ्यमप्युपलक्षयति।

अत्र प्रत्यक्षविरोधमप्याह **तावन्मात्रेणे**ति। न ह्युत्पन्नं ज्ञानमविद्यां निवर्तयत् अन्यदपेक्ष्य विलम्बेत; यतोऽनुपलब्धिर्बाधिका स्यात्। सा च स्वपरयोः प्रत्यक्षानुमानसिद्धा। प्रत्यक्षविरुद्धं च न शास्त्रवेद्यम्; न च तद्दर्शविज्ञानमात्रादविद्यानिवृत्तिः, अन्वयव्यतिरेकासिद्धेरिति भावः। अत एवापस्तम्बेन शास्त्रविरोध उक्तः, "बुद्धे क्षेमप्रापणम्; तच्च शास्त्रैर्विप्रतिषिद्धम्" इति। विशेषेण प्रतिषिद्धमित्यर्थः। न हि तुल्यबलविरोधोऽत्र घटते। प्रत्यक्षविरोधश्चोक्तः, "बुद्धे चेत् क्षेमप्रापणम्, इहैव न दुःखमुपलभेत, एतेन परं व्याख्यातम्" इति। श्रुतिप्रत्यक्षविरोधयोर्द्वयोरपरमनूद्य निषेधति **न चेति**। न्यायोपेतश्रवणे पश्चादिव प्रागपि कथं ज्ञानानुत्पत्तिरित्यत्रोक्तं **भेदवासनायामि**ति। प्रतिबन्धकवासनानिरासे विधीना-मुपयोगः। दिग्भ्रमादयो हि उपदेशलिङ्गाभ्यामनिवृत्ताः कदाचित् कुतश्चित् वासनाविच्छेदे निवर्तन्ते; तद्वदिहेति भावः। दृश्यमानपरोक्षज्ञानव्यावृत्त्यर्थम् **अविद्याया निवर्तकम्** इत्युक्तम्। **न जनयती**त्य-नेनाविद्यानिवृत्त्यनुपलब्धिविरोधोऽपि परिहृतः।

---

1 एतद्वाक्यप्रयोक्ता पुत्र इत्याद्यनुमानम्, तस्यापि वाक्यजन्यत्वात्। 2 एकस्य पदार्थस्य पदार्थान्तरेण संसर्गो वा पदार्थसंसृष्टपदार्थान्तरं वा वाक्यबोध्यम्; न तु वाक्यजन्यज्ञानमेव वाक्यबोध्यमित्यर्थः। प्रज्ञामिति वाक्ये तस्य पदार्थत्वात् तत्त्वज्ञानं विधेयमस्त्वित्यत्राह नापीति।

**अनिवृत्तमपि छिन्नमूलत्वेन न बन्धाय भवति–इति । सत्यां सामग्र्यां ज्ञानानुत्पत्त्य-नुपपत्तेः । सत्यामपि विपरीतवासनायामाप्तोपदेशलिङ्गादिभिर्बाधकज्ञानोत्पत्तिदर्शनात् ।**

**सत्यपि वाक्यार्थज्ञाने अनादिवासनया भासया भेदज्ञानमनुवर्तत इति भवता न**

---

**अविद्याजनिता भ्रान्तिर्वाक्यजाऽध्यक्षबाधिता । युक्ता तदनुवृत्तिर्हि भूयः संस्कारशेषतः॥२९८**

ननु तत्त्वदर्शनात्प्रागपि भेदज्ञानमेव बन्धमूलम् । पश्चादपि तदनुवृत्तौ रागाद्यनुवृत्त्या बन्धानिवृत्तिः स्यात् । [1]न हि कारणनिवृत्त्या कार्यं स्वकार्याय [न?] घटते । मन्यसे चाविद्याशेषानुवृत्तिमित्यत्राह **अनिवृत्तमिति। अपिः** विरोधद्योतकः। मूलच्छेदात् खण्डितलतान्यायेन क्रमात् विनश्येत् ; न पुनःप्ररोहेत् । स्वविषयसत्यत्ववासनारूषितं हि भेदज्ञानं रागादिहेतुः ; प्रतिमायोषिदादिषु [2]तथाभावादित्यभिप्रायेण **छिन्नमूलत्वोक्तिः** । दग्धपट-चक्रभ्रमादिन्यायोऽत्राभिप्रेतः । **अत्र ज्ञानं न जनयती**त्युक्तं तावन्निरस्यति **सत्यामिति** । व्युत्पन्नपदम् आकाङ्क्षादिविमर्शोपेतं वाक्यमपेक्षणीयान्तररहितमित्यभिप्रायेण **सामग्री**शब्दः । अन्यथाऽतिप्रसङ्ग इति भावः । नन्वप्रतिबन्धोऽपि सामग्रीति ([3]नन्वत्र, "प्रतिबन्धो विसामग्री" इति?) न्यायात् भेदवासनैव स्वनिवृत्तिरूपकारणाभावात्मा सामग्रीवैकल्यं स्यात्, यद्वा पुष्कलाया अपि सामग्र्याः शक्त्यपहारेण प्रतिबन्धिकेत्यत्राह **सत्यामपीति** । अयं भावः—यदि विपरीतवासनैव प्रतिबन्धः प्रतिबन्धिका वा स्यात्, तदा अनिरस्तसंस्कारे रज्जुसर्पादिभ्रमे कदाचिदपि बाधकधीर्नोदियात् ; उदेति चासाविति प्रसक्तद्विपर्यया(तद्व्यभिचारा)भ्यां व्यतिरेकव्यभिचारदृष्टेः न विरुद्धवासनानिवृत्तिरत्र हेतुः ; रज्जुसर्पवासनानुवृत्तावपि हि, 'नायं सर्पः' इत्याप्तवाक्येन, दण्डसङ्घट्टनादि-निरूपितेन निश्चेष्टत्वादिलिङ्गेन च परोक्षं बाधकज्ञानं जायते । चन्द्रभेदवासनानुस्यू(स्यू)तावपि अङ्गुल्युप-ष्टम्भादिदोषापगमे चन्द्रैक्यप्रत्यक्षधीरपि भवति । न च वाक्यादपरोक्षबुद्ध्युत्पत्तौ विरुद्धवासनानिवृत्ति-रपेक्षितेति वाच्यम् ; अविशिष्टशक्तेर्वाक्यस्य परोक्षधीजननेऽपि तदपेक्षाप्रसङ्गात् । अभेदवासनया भेदवासनानिवृत्तिं वदतः चक्रकं च स्यात्—अभेदाध्यवसाये तद्भावना, तया भेदवासनानिवृत्तिः, तत एवाभेदाध्यवसाय इति ॥ अध्यवसाये वासनानिवृत्तिरनपेक्षितेति चेत्, साक्षात्कारेऽपि नापेक्ष्येत, अविशेषात् । दशमान्वेषिणश्च दशमाभाववासनास्थितावपि दशमस्त्वमित्युपदेशेन प्रत्यक्षधीजननं च त्वयैवोक्तम् । 'तत्त्वमसि', 'दशमस्त्वमसि' इत्यनयोर्वाक्ययोः अपरोक्षात्मविषयत्वं च समानं त्वमेवात्थेति ।

(**बाधितानुवृत्तिदूषणम्**)

अथ प्रत्यक्षविरोधं परिजिहीर्षन्तो बाधितानुवृत्तेरसम्भवमभिप्रेत्याह—**सत्यपीति** । **भासया–न तु**

---

1 नहीति । न हि स्वपितृभावे पुत्रस्य पुत्रानुत्पादकत्वम् । तस्मादविद्यानाशेऽपि भेददर्शनं रागादि जनयेदित्यर्थः । एवमर्थं निर्वाहाय नञ् अत्र भ्रष्टो घटनीयः ।

2 तथाभावात् = सत्यत्ववासनारूषितस्यैव रागादिहेतुत्वसत्त्वात् ।

3 कुण्डलितरीत्या शोधनीयम् । अयं कुसुमाञ्जलिकारिकोद्धारः । तत्रैव व्याख्यातञ्च, "सामग्रीवैकल्यं प्रतिबन्धपदार्थः" इति । उदयनमतरीत्या वासना प्रतिबन्धः, तद्धेतुः प्रतिबन्धकः । तन्निरस्तं शक्तिपक्षमादत्याऽऽह यद्वेति । तदा शक्तिनाशकत्वात् वासनैव प्रतिबन्धिका भवति

शक्यते वक्तुम्; भेदज्ञानसामग्र्या अपि वासनाया मिथ्यारूपत्वेन ज्ञानोत्पत्त्यैव निवृत्तत्वात्। ज्ञानोत्पत्तावपि मिथ्यारूपायास्तस्या अनिवृत्तौ निवर्तकान्तराभावात् कदाचिदपि नास्या वासनाया निवृत्तिः। 'वासनाकार्यं भेदज्ञानं छिन्नमूलम्, अथ चानुवर्तते' इति बालिशभाषितम्।

---

कारणैन; आत्ममेदसत्यत्वाध्यवसायादेर्निवृत्तत्वात्; न ह्यत्र भेदविषयः किञ्चिदिव स्थास्नुत्वादिति भावः। भवता इत्यशक्यताहेतुगर्भम्; न हि ब्रह्मव्यतिरिक्तं किञ्चित् सत्यमिच्छसीति भावः। हेतुं विवृणोति भेदेति। सामग्रीशब्द इह प्रारब्धकर्मविष्टम्भपौष्कल्यसूचकः। अविद्याविनाशे कर्म वासना च कथं तिष्ठेत्। न हि मृगतृष्णिकानिवृत्तौ तदीयतरङ्गाद्यनुवृत्तिः। अत उपदेष्टृत्वाद्यनुपपत्तिश्च स्यादिति भावः। ननु मिथ्यात्वाविशेषेऽपि एकाधिष्ठानेषु भिन्नाधिष्ठानेषु च भ्रमेषु किंचिदेव केनचित् बाध्यते(ध्येत), तद्वत् स्यादित्यत्रोक्तम् ज्ञानोत्पत्त्यैवेति। सद्व्यतिरिक्तं सर्वं मिथ्येति बाधकधीः। ईदृग्ज्ञानोत्पत्तौ च वासनास्थितिरते वरुद्धा। न च (वा) वासनावान्तरभेदबुद्धिः; मिथ्यात्वानपायात्। न हि रज्जुरित्यवगते सर्पाद्यनुवर्तते )। किंच निरस्तायामेव भेदवासनायां बाधकज्ञानेऽपि वदन्ते तदुत्पत्तौ कथं सा तिष्ठेत्? स्थता[1] काचित् केन निवर्त्येत? यदि ज्ञानान्तरेण—तन्न, अविशेषात्। अथ भोगक्षयात्, तर्हि ज्ञानबाध्यत्वाभावात् सत्या स्यात्। एवं कर्मापि[2]। अद्वैतसाक्षात्कारेऽपि वासनानुवृत्तावनिर्मोक्षप्रसङ्गमभिप्रेत्य इह ज्ञानोत्पत्ताविति। ज्ञानैकनिवर्त्यत्वाय मिथ्यारूपत्वोक्तिः। निवर्तकान्तराभावात् सत्यत्वप्रसङ्गादिः ज्ञानेतराबाध्यत्वस्यानभ्युपगमात्; स्वकल्पितानिगमभोगसंवेदनादि[रूप?]ज्ञानशास्त्रागमेऽपि तेषां पूर्वज्ञानवत् निवर्तकत्वायोगादिति भाव। अस्याः मूलाविद्याबाधकप्रबलज्ञानेनापि दुर्बाधायां इत्यर्थः। अहे(है)तुकविनाशस्तु न कापि नैमित्तिकैरिष्यते। तदभ्युपगमेऽपि तेषां पूर्वज्ञानवासनाविनाशादेः भ्रान्तिसिद्धत्वेन नित्यं भ्रमानुवृत्त्या पुनरपि वासनासन्ततेरनिवार्यत्वम(र्यत्वम्। इदम?)भिप्रेत्य कदाचिदपीत्युक्तम्। न हि वासनानिवृत्तिः सतः स्वरूपम्; साध्यत्वात्। अतिरिक्ता च न सत्या, अद्वैतभङ्गात्॥ अभावसत्यत्वेऽपि सदद्वैतं सिद्धमिति चेन्न; कचिद्भेदसत्यत्वे अन्यत्राप्यविशेषात्। भावान्तरसत्यत्वेऽपि तद्वदेव अप्रद्वैतानापायाचेति। अनिवृत्तमपीत्यादिनोक्तं स्वव्याघातेनोपालभ्यते वासनेति। स्वोक्तिविरोधनभिज्ञः किमन्यत् वेत्तीत्यभिप्रायेण बालिशत्वोक्तिः। अयं भावः—छिन्नमूलमित्यत्र किं मूलशब्देनाविद्या विवक्षिता, उत भेदवासना? अद्ये मूलभूताविद्याच्छेदे तत्समानबाधकस्य संस्कारस्यापि बाधात् भेदभ्रमो दुर्वच इत्युक्तम्। द्वितीये[ऽपि] कथं वासनोच्छेदे तत्कार्यं सन्तन्येत। यदि हेत्वभावेऽपि कचित् कार्यं स्यात्, तदा स्वपरमतसाधारणैः स्वाभिमतैश्चाविद्यादिभिर्विनापि तानि तानि कार्याणि स्युः। अतो नेदं यौक्तिकवाक्यमिति। बाधितानुवृत्तौ परोक्तो दृष्टान्तः छिन्नमूलत्वाभावात् असम(असमञ्जस) इत्याह द्विचन्द्रेति। तिमिरादिदोषस्य सत्यतया बाधकधीशैरप्यबाध्यत्वात्। त्वया

---

1 स्थिता काचिदित्यत्र स्थिता चेदिति वा, स्थिता चेन् काचिदिति वा पाठं रोचयेरन्।
2 एवं कर्मापीति। यस्य भोगस्य क्षयात् ज्ञाननिवृत्तिः, तद्भोगहेतुः कर्मापि पूर्वज्ञानाबाध्यतया स्थितं भोगोत्पादनेन निवृत्तमपि ज्ञानाबाध्यतया सत्यं स्यात्। यद्वा पूर्वं प्रारब्धकर्मविष्टम्भे युक्त्वा उपरि, 'कर्म वासना च' इत्युक्तम्; तत्र वासनासत्यत्वमापादितम्। अथ कर्मापि सत्यं स्यादित्युच्यते।

द्विचन्द्रज्ञानादौ तु बाधकसन्निधावपि मिथ्याज्ञानहेतोः परमार्थतिमिरादिदोषस्य ज्ञानबाध्यत्वाभावेनाविनष्टत्वात् मिथ्याज्ञानानिवृत्तिरविरुद्धा। प्रबलप्रमाणबाधितत्वेन भयादिकार्यं तु निवर्तते।

अपि च भेदवासनानिरसनद्वारेण ज्ञानोत्पत्तिमभ्युपगच्छतां कदाचिदपि ज्ञानोत्पत्तिर्न सेत्स्यति; भेदवासनाया अनादिकालोपचितत्वेनापरिमितत्वात्, तद्विरोधिभावनायाश्चाल्पत्वादनया तन्निरसनानुपपत्तेः।

---

तस्य व्यावहारिकसत्यत्वेनाभ्युपगमात्। असत्यत्वेऽपि चन्द्रैकत्वज्ञानस्य तदाधिष्ठानगोचरत्वाभावेन तद्बाधकत्वायोगश्चेति भावः। यथा तत्र दृष्टान्ते भयादिनिवृत्त्या बाधकस्य फलम्, न तथा दार्ष्टान्तिके स्यादिति सूचयन्, 'न बन्धाय' इत्युक्तं निरस्यति प्रबलेति। प्रमितप्रामाण्यप्रमाणबाधितत्वादित्यर्थः। अत एवात्र कुहकोत्पादितभयादिव्यावृत्तिः। त्वत्पक्षे तु बाध्यबाधकयोर्द्वयोरपि दोषोत्थत्वेन ज्ञानत्वात् न बाधफलसिद्धिः। लोके बाधितानुवृत्तेरन्यत्रादृष्टत्वात् (?) लीनस्य यथार्थज्ञानरूपार्थवृत्तिहेतुत्वं च बाधकस्य फलमित्याशयः। [1]सर्पादिभ्रमापेक्षया भयादिकार्योक्तिः। आदिशब्देन विस्मयाद्ग्रहणम्। एवं भयाद्यनुत्पादकत्वमभिप्रेत्य न्यायतत्त्वे, "बाधितानुवृत्तिदशाज्ञानमकिञ्चित्करत्वात् उदासीनम्" इत्युक्तम्। तुशब्देन परोक्तात् वैषम्यं द्योत्यते। न ह्यत्र नाशकनाममयां सत्यां नाश्यसद्भावः; न च हेत्वभावे कार्योदय इति। ननु भयाद्यपि क्षणिकत्वात् अभावेन न बाधकविनाश्यम्; उत्तरभयानुत्पत्तिश्च भ्रमान्तरानुत्पत्तिवत् प्रागेव सिद्धैव; तर्हि बाधतः कथं भयादिनिवृत्तिर्भाष्यते॥ उच्यते—बाधके सति सामग्र्यावैकल्यात् भयान्तरानुत्पत्त्यनुवृत्तिमपेक्ष्य भयादिनिवृत्तिभणनमिति।

जातेऽपि इति पक्षस्य मन्दत्वव्यवस्थये सिंहावलोकितेन बहुव्यक्त्यात्मकतायां ज्ञानानुत्पत्तौ[2] दूषणान्तरमाह अपि चेति। कदाचिदपि—ध्यानात्प्रागिव पश्चादपीत्यर्थः; कल्पकोटिसहस्रेष्वपीति भावः। ननु यज्ञादिभिः परिमितैरेवानाद्युपचितापरिमितकल्मषनिबर्हणेन ज्ञानोत्पत्तिमिच्छतामिव, श्रवणादिभिर्वासनानिरासेन ज्ञानोत्पत्त्युपपत्तिः स्यादित्यत्राह—भेदवासनाया इति। न ह्यत्र, "सकृत्स्मृतोऽपि" इत्यादिन्यायः; अदृष्टद्वारा निवर्तकत्वे निवर्त्यसत्यत्वप्रसङ्गात्। न च मन्त्रनिवर्त्यवत् व्यावहारिकसत्यत्वाददृष्टनिवर्त्यत्वोपपत्तिः; तद्वदेव प्रपञ्चस्यापि तदुपपत्तौ बाधकधीगवेषणवैयर्थ्यात्। स्वरूपत एव निवर्तकत्वे तु तादृशशक्तिवैचित्र्ये प्रमाणाभावेन भूयस्त्वादेर्बलाबलप्रयोजकत्वात्[3]। न च भावना स्वरूपत एव वाक्यस्य सहकारिणी; [4]परोक्षानुभव इवापरोक्षानुभवेऽपि तदन्वयव्यतिरेकादृष्टेः। अदृष्टद्वारा सहकारित्वस्यानभ्युपगमात्। अभ्युपगमे तु वाक्यमनपेक्ष्य तस्यैव मनःसहकारिणः

---

1 द्विचन्द्रभ्रमे भयाभावादाह सर्पेति। 2 अनुत्पत्ताविति। भेदवासनाया अनिरासेऽपि ज्ञानोत्पत्तिरिति पक्षावलम्बनं सत्यपीत्यादिना दूषितम्। अनुत्पत्तिपक्षे च ततः प्रागेव, सत्यां सामग्र्यामिति दूषणमुक्तम्। अथ निरासजननासंभवात् ततः प्रागेव ज्ञानोत्पत्तिरिति वक्तुं अपि चेत्यारम्भः। 3 प्रयोजकत्वादिति। तथा चाभेदवासनाया भूयस्त्वाभावान्न सामर्थ्यम्। 4 परोक्षानुभव इवेति। न हि परोक्षानुभवजनने वाक्यमभेदवासनासहकृतम्। शब्दरूपमानाभावात् अन्वयव्यतिरेकाभावाच्च।

**अतो वाक्यार्थज्ञानादन्यदेव ध्यानोपासनादिशब्दवाच्यं ज्ञानं वेदान्तवाक्यैर्विधित्सितम्; तथा च श्रुतयः-"विज्ञाय प्रज्ञां कुर्वीत", "अनुविद्य विजानाति", "ओमित्येवात्मानं ध्यायथ" (ओमित्येवं ध्यायथाऽऽत्मानम्?) "निचाय्य तं मृत्युमुखात् प्रमुच्यते",**

---

साक्षात्कारजनकत्वोपपत्तेः। अतः कथञ्चिदपि न वाक्यात् बाधकप्रत्यक्षोदय इत्याशयः।

(**विधेयज्ञानस्य मोक्षोपायत्वम्**)

किमित्यादिना प्राग्विकल्पिते मतद्वये दूषितस्य दूषणान्तराण्यवधारणेन सूचयन् स्वमतपरिशेषं तावदाह **अत इति**। वाक्यजन्यज्ञानस्य विधेयत्वनिवर्तकत्वादेः युक्तिप्रत्यक्ष(क्षादि)विरुद्धत्वादित्यर्थः। **वाक्यार्थज्ञानादन्यदेवेति**। [1]अयं भावः-वाक्यार्थबोध(ज्ञान)मात्रस्योपायत्वविधाने स्वतस्तत्प्रवृत्तौ दुस्तरं चक्रकम्; न हि ब्रह्मस्वरूपं तज्ज्ञानं (तत्त्वज्ञानं) चाविदित्वा तज्ज्ञानकामना स्यात्। तद्रहितस्य च न तदर्थोपाय विधिप्रवृत्ती स्तः। न चोपायानुष्ठानमन्तरेण ब्रह्मधीसिद्धिरिति। ननु स्वाध्यायाध्ययनवत् हितैषिप्रेरणया प्रवृत्तिरस्तु; मैवम्—हितैषिभिरपि निर्विशेषचिन्मात्रब्रह्मज्ञानं संपादयेत्युपदेष्टव्यम्; तदा ह्येवंविधधीसद्सद्भावयोस्तदुपायानुष्ठानं न स्यात्। अस्मत्पक्षे तु बह्वाकारविशिष्टे ब्रह्मणि आवृत्तिनैरन्तर्यादिविशिष्टकालान्तरभाव्यतिशयितज्ञानार्थप्रवृत्तौ यथालोकं न विरोधः। लोकसिद्धप्रक्रियानभ्युपगमे स्वप्रवृत्त्यादिविरोधः स्यात्। न च नित्यप्रत्यक्षनिर्विशेषवस्तुवादिनः तव वाक्यतोऽन्यतो वा तद्विषयातिशयितधीः शक्येति।

ननु मोक्षोपाये विधित्सितत्वोक्तिरयुक्ता; विधिशब्दानामिह पुरुषार्थभूतवाक्यजन्यज्ञानानुवादनिष्ठत्वात्। ध्यानादेस्तु [2]तदर्थतया चोदनात्। न चान्यानुपपत्तिमात्रात् तदन्यत् सर्वमुपपद्यते; विविधानि च ज्ञानानि स्मृतिदर्शनादिशब्दैर्व्यपदिश्यन्त इत्यत्राह—**तथा चेति**। यथा वाक्यजन्यज्ञानादन्यो मोक्षोपायः, "द्रष्टव्यः"

---

ननु वाक्यार्थज्ञानस्याविधेयस्य मोक्षसाधनत्वं प्रागुक्तम्। तर्हि विधिवैयर्थ्यमिति चेत्, विधेस्तदुपायविधाने तात्पर्यमस्तु। यथा भक्ष्यपेटिकायां जरणविधानायोगेऽपि जरणोपायविधिः संभवतीत्युक्तम्, तद्वदिति शंकायां तदपि न भवतीत्याह अयं भाव इति। किमुपायविधिं स्वयं दृष्ट्वा तदुपायतां बुध्वा प्रवर्तते, उत हितैषिवचनात्। नाद्यः। चक्रकात्। तदेवोपपादयति न हीति। ब्रह्मज्ञानरूपफलकामनया ह्युपाये प्रवृत्तिः। तथाच ब्रह्मज्ञानज्ञानं तत्कामना तत उपाये प्रवृत्तिः। तत्र ब्रह्मविषयकज्ञानज्ञानं ब्रह्मज्ञानगर्भमेव। तथाच ब्रह्मज्ञानस्य कामनातः प्राक्सिद्धस्यैव कामनाधीनोपायानुष्ठानसाध्यत्वस्वीकाराच्चक्रकमिति। हितैषिमुखेन प्रवृत्तावपि सा प्रवृत्तिः हितत्वबोधनेनैवोत्पाद्या। तदा च ब्रह्मज्ञाने सत्येव तत्कामनेति पूर्वदोष एव। ननु तद्विज्ञानार्थं स गुरुमेवाभिगच्छेदित्यादौ कथं विज्ञानस्योद्देश्यत्वम्। प्रागेव ज्ञानाभावे कामनानुपपत्तेः। किञ्च जिज्ञासास्थले अनुभवानुसारात् सामान्यज्ञानाधीनविशेषजिज्ञासया प्रवृत्तिर्ज्ञानसंपत्तिश्च स्वयमपि ज्ञातदूषणवादौ स्वीकृतेति चेत्—सत्यम्; अत्राप्यनन्तरमेव वक्ष्यते। सविशेषवस्तुनि अज्ञातविशेषबुभुत्सयैतत् सर्वमुपपन्नम्। न तु निर्विशेषे। अज्ञातस्य ज्ञातव्यस्याभावात्। इदमप्यत्र दर्शितमेव, 'निर्विशेषचिन्मात्रब्रह्मज्ञानम्' इत्युक्तेः। उपर्युपपादनाच्च॥ तद्रहितस्येति। कामनारहितस्येत्यर्थः। 2 तदर्थतया= मोक्षार्थतया। अन्यानुपपत्तिमात्रात्= ध्यानादितोऽन्यस्य वाक्यार्थज्ञानस्यानुपपन्नत्वमात्रेण। अन्यत् सर्वम्—स्मृतिदर्शनादिरूपोपायवाचि सर्वं वाक्यम्।

**"आत्मानमेव लोकमुपासीत", "आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः", "सोऽन्वेष्टव्यः स विजिज्ञासितव्यः" इत्येवमाद्याः ।**

**अत्र, "निदिध्यासितव्यः" इत्यादिनैकार्थ्यात्, "अनुविद्य विजानाति", "विज्ञाय प्रज्ञां कुर्वीत" इत्येवमादिभिर्वाक्यार्थज्ञानस्य ध्यानोपकारकत्वात् 'अनुविद्य', 'विज्ञाय'**

---

इत्यादिभिर्विधित्सितः,। स च ध्यानाद्यनेकशब्दोपात्तोऽपि एकतया सिध्येत्, तथैवेत्यर्थः। चः पारिशेष्येण सह समुच्चयार्थो वा । अत्र वेदनादिशब्दानां ध्यानादिशब्दोक्तविशेषपरताम्, उपसर्गभेदसविधिप्रत्ययसदसद्भावैरर्थभेदाभावं च व्यङ्क्तुमीदृशबहुवाक्योपादानम् । उपात्तवाक्यप्रकारवैचित्र्यपर इतिशब्दः । तेषां विधिपरत्वसाम्यार्थ एवंशब्दः । अनुपात्तेष्वपि न्यायसञ्चारार्थम् आद्योक्तिः ।

'प्रज्ञां कुर्वीत', 'विजानाति' इत्यादौ न वाक्यार्थज्ञानादन्यत्वं भाति यत्र, "छागो वा मन्त्रवर्णात्" इति न्यायमभिप्रेत्याह अत्रेति । श्रुतेषु तेषु वाक्येष्वित्यर्थः। निर्धारणे सप्तमी। ऐकार्थ्यमिहैकप्रयोजनत्वम्, एकविषयत्वं वा । तच्चात्र शाखान्तरनयपुरस्कारेण सामान्यविशेषन्यायसिद्धम् । प्रथमेन आदिशब्देन "ध्यायथ" इत्यादेः, द्वितीयेन "विजिज्ञासितव्यः" इत्यादेश्च ग्रहणम् । अनुवादे तात्पर्यसिद्ध्यर्थम् अनुवाद्यस्य विधेयान्वयार्थं च ध्यानोपकारकत्वोक्तिः । तच्च ध्येयोपस्थापकत्वम् ।

नन्वत्र, "अनुविद्य" इत्यादौ, "दध्ना" इत्यादिवत् गुणविधिरस्तु ; सगुणकर्मश्रवणे हि वाक्यं गुणपरम् इति नीतिविदः। विशिष्टविधौ गौरवात्। कर्ममात्रविधौ गुणश्रुतिवैयर्थ्यात्; कर्मपदं तु विधेयस्य गुणस्य आश्रयतार्पणे (आश्रयार्पणेन?)सार्थकं स्यादिति ॥ मैवम्-होमवदिह [1]ज्ञानार्थस्य प्राप्तत्वे ह्यनूद्य गुणो विधीयेत। तद्व्यगत्या विशिष्टविधिरस्त्विति शङ्कानिरासार्थम्, 'अनूद्य' इत्युक्तम् । अयं भावः-क्त्वान्तस्याऽऽख्यातान्तस्य चैकार्थ्ये पौर्वापर्यविरोधः। कस्य च केन वैशिष्ट्यम्? सजातीयाभ्यासे तु ज्ञानमभ्यस्येदित्येवालम्; उपसर्गभेदश्च विफलः स्यात्। भिन्नार्थत्वे, "विजानाति" इत्यादेरप्राप्तविषयस्य ध्यानवत् पश्चात्पठितस्य पश्चाद्भाविनि विधेये ध्याने विश्रान्तिर्न्याय्या। वाक्यार्थधीस्तु प्राप्तत्वान्न विधेयो गुणः । तत एव न तदर्थं श्रवणादि; तत्प्रधानध्यानविधानस्य युक्ततमत्वाच्च । न चान्यत् किमपि ज्ञानमिह गुणत्वेन विधेयतया शङ्कनीयम् । यदि तु, 'विजानाति' इत्यादेः वाक्यार्थज्ञाने विश्रमः, तदा, 'अनुविद्य' इत्यादेर्न विधेयमनुवाद्यं वा ज्ञानान्तरं दृश्यते । न च ध्यानं तद्गुणतया विधेयम् । परोक्षं प्रत्यक्षं वा वाक्यार्थज्ञानं प्रति तत्साधनत्वसम्भवस्य दर्शितत्वादिति ॥ स्थानैक्यात् विधिप्रत्ययरहितेऽपि विधिपरत्वव्यक्त्यै बुद्धिस्थक्रमेण, प्रज्ञां कुर्वीत इत्यस्य पूर्वं पाठः। ध्यानस्य, 'निचाय्य' इत्याद्युक्तवैशद्यविशिष्टत्वात् उपास्युक्तप्रकर्षविशिष्टत्वाच्चोपसर्गद्वयसाफल्यम् । [2]अनुवादयोरप्युपसर्गद्वयमनुवाद्यस्याभ्यासं स्पाष्ट्यं च व्यनक्ति अनुविद्य विज्ञाय इति विज्ञान[3]शब्दस्य, 'निदिध्यासितव्यः' इत्यस्य स्थाने पाठात्, श्रवणानन्तरभाविमननविषयान्वेषणशब्दानन्तरपाठाच्च, 'विजिज्ञासितव्यः" इत्येतत् निदिध्यासनस्थानापन्नम् ॥ उपायविषयविज्ञानवेदनादिसामान्यशब्दानां

---

1 ज्ञानार्थस्य = ज्ञानरूपार्थस्य । 2 अनुवादयोरिति । वाक्यान्ते स्थितम्, अनुविद्य-विजानाति' इतीदमत्र आदौ योज्यम् । 3 विज्ञानशब्दस्य = विजानातीति शब्दस्य ।

इत्यनूद्य, 'प्रज्ञां कुर्वीत' 'विजानाति' इति ध्यानं विधीयते। 'श्रोतव्यः' इति च अनुवादः; स्वाध्यायस्यार्थपरत्वेनाधीतवेदः पुरुषः प्रयोजनवदर्थावबोधित्वदर्शनात् तन्निर्णयाय स्वयमेव श्रवणे प्रवर्तत इति श्रवणस्य प्राप्तत्वात्। श्रवणप्रतिष्ठार्थत्वान्मननस्य, 'मन्तव्यः' इति चानुवादः। तस्मात् ध्यानमेव विधीयते। वक्ष्यति च—"आवृत्तिरसकृदुपदेशात्" इति।

---

तव्यप्रत्ययान्तोक्तश्रवणरूपज्ञानविशेषे विश्रमः किं न स्यादित्यत्राह श्रोतव्य इति। कथमत्राहेतुकः तव्यप्रत्ययबाध इत्यत्राह स्वाध्यायस्येति। अयं भावः—श्रुतेरर्थपरत्वाभावाद्वा विचारस्य प्रवर्तकाभावाद्वा तदवसराभावाद्वा मीमांसा नाऽऽरम्भ्येति शङ्का निरस्ता। श्रोतव्य इत्यत्र च गुर्वभिगमनादौ शब्दशक्तिर्नास्ति। अतो निर्णयार्थव्यापारपरत्वे, प्राप्तार्थत्वमिति। नन्वस्ति विधेयमालम्बनसंशीलनरूपं मननम्। तच्च, 'मन्तव्यः' इति विवक्षितुं युक्तम्। तत्र वेदनादीनां विश्रान्तिः स्यादित्यत्राह श्रवणेति। अप्रतिष्ठितस्य श्रवणस्य ध्यानानुपकारित्वात् तत्प्रतिष्ठापकतया काङ्क्षितं तदनन्तरपठितं यौक्तिकं मननम्। अतस्तदपि रागाद्यनुवृत्त्या प्राप्तत्वादनुवाद्यमेवेति भावः। एतेन श्रवणादित्रिकं दर्शनसाधनतया विधीयत इति कैश्चिदुक्तस्य युक्तिविरोधः स्थापितः। ननु, "श्रोतव्यो मन्तव्यः" इत्येताभ्यामुपदेशैकगम्यार्थश्रवण-मात्रं[1] विधेयमस्तु। आहुश्च केचित्, "सांख्ययोगोपदेशश्रवणा[2]दिकम्" इति; अत्राऽऽह तस्मादिति। प्राप्ताप्राप्तविवेकात् तत्सिद्धाद्वा परिशेषादित्यर्थः। एवकारः श्रवणमननयोर्ज्ञानमात्रस्य सन्ततत्यवाच्ये-च्छायाश्च व्यवच्छेदार्थः। "द्रष्टव्यः" इत्यस्यापि ध्यानविशेषणवादितया पृथग्विधितापत्तिव्युदासार्थो वा। अयं भावः—'श्रोतव्यो मन्तव्यः" इत्यनयोरवैध[3]प्रसिद्धोपकारक[क्रियापर?]त्वसम्भवे तद्विपरीत-कल्पतेरयुक्तत्वात्, 'श्रोतव्यः' इत्यादेः श्रवणादिचतुष्टयविधिपरत्वे वाक्यभेदापत्तेः, अत्र विकल्पस्या-ष्टदोषदुष्टतया गुरुलघुविषयतया चात्यन्तासम्भवात्, क्रमभाव्युपकारस्य श्रवणादेः समाधिरूपाङ्गिना समुच्चयासम्भवात्, विशिष्टविधेर्गत्यन्तराभावनियतत्वात्, ध्यानस्य दर्शनरूपतायाः श्रुत्यन्तरानुसारेण साधयिष्यमाणत्वात्, [4]अत एव निपूर्वस्यापि ध्यायतेरिह पदान्तरस्फुटोपात्तदर्शनरूपतावैशिष्ट्योक्तावुदासीन-त्वात्, 'द्रष्टव्यः' इत्यस्यानुवादसमभिव्याहारेऽपि स्वारसावगतविधिपरत्वप्रहाणेन फलानुवादपरत्वकल्पना-नुपपत्तेः, "श्रोतव्यः श्रुतिवाक्येभ्यः" इत्यादिश्लोकेऽपि श्रवणादित्रिकस्य क्रमात् दर्शनहेतुत्वमात्रोक्तौ साध्यस्यापि विधेयत्वे विरोधाभावाच्च रागप्राप्तश्रवणादिपूर्वकं विधिपदान्तरोपात्तदर्शनाकारविशेषित ध्यानमेवात्र विधेयमिति॥ एवं वेदनादिशब्दानां स्वोक्तविशेषविधिविश्रमानभ्युपगमे सूत्रविरोधमपि सूचयति—वक्ष्यति चेति। चिन्तनार्थो हि ध्यायातिरेकविषयमसकृदावृत्तं ज्ञानं वक्ति। अतो

---

1 आलम्बनसंशीलनरूपमननं प्रागेवाऽऽशङ्क्य परिहृतम्। यौक्तिकमननवत् औपदेशिकार्थश्रवणा-नन्तरं तन्मननमपि दृष्टार्थत्वात् विधिमन्तरैव प्राप्तम्। अतः पदद्वयसत्त्वेऽपि श्रवणमात्रमेव विधेय-मित्याशयेन मननत्यागेन मात्रपदम्। 2 अत्र, 'शब्दादिभेदात्' इत्यधिकरणश्रुतप्रकाशिका द्रष्टव्या। केचित् =यादवप्रकाशीयाः। 3 अवैधत्वं प्रसिद्धत्वमधिकोपकारकत्वं प्रथम श्रवणमननयोः, तत्परत्वत्वसंभवे इति वक्तव्यम्। अतः परशब्दोऽवश्यं घटनीयः। 4 अत एव=द्रष्टव्य इति पदेन स्पष्टमुक्तत्वादेव।

तदिदमपवर्गोपायतया विधित्सितं वेदनमुपासनमित्यवगम्यते; विद्युपास्योर्व्यतिकरेणोपक्रमोपसंहारदर्शनात्। "मनो ब्रह्मेत्युपासीत" इत्यत्र, "भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद"; "न स वेद, अकृत्स्नो ह्येषः....आत्मेत्येवोपासीत"; "यस्तद्वेद यत् स वेद स मयैतदुक्तः" इत्यत्र, "अनु म एतां भगवो देवतां शाधि यां देवतामुपास्से" इति।

ध्यानविषये उपदिष्टं वेदनं ध्यानमेवेति प्रकृतसिद्धिः। [1]तथोपास्तिरपि, "तस्मिन् यदन्तस्तदुपासितव्यम्" इत्यादिभिरुपात्तः। अतो यज्ञादिसापेक्षत्वानुगुणम्, 'उपदेशात्' इत्यनेनैव सूचितम्।

**(वेदनादिसामान्यशब्दानां ध्रुवानुस्मृतिरूपोपासने विश्रान्तिः)**

प्राक् प्रतिज्ञातमुपासनाख्यविशेषे वेदनादिसामान्यशब्दानां विश्रममाह तदिति। **तत्**—[2]तदुक्तावनिर्धारितविशेषम्। **इदम्**—गुरुतरध्यानादिसाध्यसाधनतया विधानात् विशेषदृष्टौ तदेकतापरत्वार्हम्। तद्धेतुं व्यनक्ति **अपवर्गोपायतया विधित्सितमिति। उपासनमित्यवगम्यते इति।** तुल्यप्रकरणस्थोपासिसमानविषयवेदनादिशब्दनिर्दिष्टत्वादिति भावः। 'उपदेशात्' इति सूचितमेकप्रकरणस्थविशेषमन्यमपि हेतुमाह **विद्युपास्योरिति। मन** इत्यादावुपासिरादौ; विदिरन्ते। **यस्तत्** इत्यत्र तु तद्विपरीतम्। "न स वेद" इत्यत्र तूभयत [3]उपास्तिः। "अथ योऽन्यां देवतामुपास्ते" (?) ("स योऽत एकैकमुपास्ते?") इत्युपक्रमात्। एवं (इति उपक्रमे एव ?)। मिथःस्थानाक्रान्ति(पत्ति)रिह **व्यतिकरः।**

1 ध्यानोपासनादिशब्दवाच्यमित्युपक्रान्तत्वादत्रापि तावद्विवक्षामाह तथोपास्तिरपीति। उपास्तिरिदं धातुपरम्। अतः उपात्त इति पुंलिङ्गनिर्देशः। 2 तदुक्तौ = स्ववाक्ये।

3 उभयत उपास्तिरिति। अत्राऽऽपाततः, "योऽन्यां देवतामुपास्ते, अन्योऽसावन्योऽहमस्मीति न स वेद; अकृत्स्नो ह्येषः; आत्मेत्येवोपासीत" इति वाक्यानुपूर्वी तत्त्वटीकाभिमतेति प्रतीयते। श्रुतप्रकाशिकायामप्येवंप्रतीतिजनकः पाठः केषुचित् कोशेषु। एवम्भूतश्रुत्यानुपूर्व्यभावात् कथमेवं व्याख्याग्रन्थः इति माध्वा अप्याक्षिपन्। ततस्तालकोशदर्शने श्रुतप्रकाशिकायामन्यः पाठ उपलब्धः। स शुद्धपाठ उपनिषद्भाष्यकारैरुपनिषद्भाष्ये दर्शित एव। अस्मन्मुद्रितश्रुतप्रकाशिकाग्रन्थे चैष द्रष्टव्यः। उपनिषद्भाष्यपरिष्कारे च। तद्रीत्या तत्त्वटीकाशोधने, "अथ योऽन्यां देवतामुपास्ते इत्युपक्रमात्" इत्येतस्य स्थाने, "स योऽत एकैकमुपास्ते इत्युपक्रमात्" इति पाठलाभे सर्वमक्लिष्टम्। स्थितस्यैवाऽऽदरणे त्वेवं निर्वाहः कार्यः—नात्र उभयत इत्यनेन उपासिद्वयघटितोपात्तवाक्यद्वयमध्ये 'न स वेद' इति वाक्यमस्तीति विवक्षितम्। किंतु (बृ. 3. 4. 7.), "स योऽत एकैकमुपास्ते, न स वेद, अकृत्स्नो ह्येषोऽत एकैकेन भवति आत्मेत्येवोपासीत" इति उपासिद्वयमध्यगो विदिः। उपरि (बृ. 3. 4. 10.), अथ योऽन्यां देवतामुपास्ते, अन्योऽसावन्योऽहमस्मीति न स वेद। यथा पशुरेवं स देवानाम्" इत्येवमुपक्रममात्रे उपासियुक्तो विदिः। भाष्यकृता पूर्वं पश्चाच्चोपासिघटितं, 'न स वेद' इति वाक्यम् उत्तरोपासिमात्रनिर्देशेनोपात्तम्; पूर्वत्रोपासिसत्तायाः अन्यवाक्यमादाय प्रागेव दर्शितत्वात्। तावतैव व्यतिकरसिद्धेः। 'न स वेद' इति वाक्यं यत्र यत्र, तत्तत्स्थलदर्शने तु पार्श्वद्वये, एकपार्श्वमात्रे च इत्युभयत उपास्तिर्दर्शयितुं शक्यते। अथ योऽन्यां देवतामिति उपक्रममात्रेऽप्युपास्तेरन्यत्र दर्शनादित्युक्तमिहेति। उपरि, 'एवं मिथस्स्थान' इति वाक्यारम्भः कृतः। तत् एवमप्यदमिह निविष्टं स्यात्। तथाच उपक्रमादेवम् इति पूर्ववाक्यम्। वस्तुत इह कतिपयटीका-

नन्वत्र, 'मनो ब्रह्म' इति दृष्टिविधिः ; अन्यच्च वाक्यद्वयं [1]विद्याविशेषस्थम् ॥ [सत्यम् ; तथापि ?]

**एकत्र शब्दवृत्तिर्या स्थिता साऽन्यत्र सञ्चरेत् । तत्तुल्येऽपीत्यभिप्रेत्य दर्शनादिति भाष्यते ॥**

'य एवं वेद' इति न शास्त्रार्थवेदनमात्रोक्तिः; विहितस्य आकाङ्क्षितं फलमनिर्दिश्याविहितान्यानुवादेन तत्फलोक्तेरयुक्तेः । [2]ननु भूमविद्योपक्रमे, "स यो मनो ब्रह्मेत्युपास्ते यावन्मनसो गतं तत्रास्य—यथाकामचारो भवति" इति फलविशेष उक्तः । तेनैव नैराकाङ्क्ष्यं स्यात् ॥ मैवम्—तृतीयप्रपाठकस्थस्यास्योपासनप्रकरणभेदात्, [3]पुनश्श्रुतिवैयर्थ्याच्च विध्यन्तरत्वे सिद्धे सन्निहितफलेनैव समन्वयोपपत्तेः । अतोऽस्मिन्नर्थवादे विदिनोपासनमनूद्य तत्फलविधिर्युक्तः । रात्रिसत्रन्यायश्चात्राभिप्रेतः । दानादिजन्या प्रथा **कीर्तिः** । पराक्रमादिजन्या तु **यशः** । कीर्त्या यशसा च भाति ; ब्रह्मवर्चसेन तपतीति योज्यम् । [4]मध्यमवाक्येऽत्रेत्यनुक्तिरासन्नत्वात् । "यस्तत्" इत्यादौ(दि?) यस्तत् ब्रह्म वेद, यच्च ब्रह्म स वेद, स वेदिता रैक: तद्वेद्यमेतत् ब्रह्म चेति द्वितयं तवोक्तमित्यर्थः । "गामश्वं पुरुषं जगत्" इत्यादिष्विव चकारानुक्तिः । नपुंसकसमभिव्याहारात् उक्तमिति विपरिणमनीयम् । वेद्यं प्रति स वेदितृत्वेनोक्त इति वा नेयम् । अथवा, 'यत् स रैको वेद, तदेवान्यो यो वेद, एनं सर्वं तदभिसमेति यत्किञ्चित् प्रजाः साधु कुर्वन्ति' इति पूर्वत्रान्वयः। "स मयैतदुक्तः" इत्यत्र, 'एतत्' इति क्रियाविशेषणम् ; स मयैवमुक्त इत्यर्थः । अस्यां व्याख्यायां प्रकरणानुगुण्यात् रैक्वशिष्येण भवितव्यमिति जानश्रुतेः सूच्यते । अनुशाधि विविच्य ज्ञापयेति यावत् । एवं वेदनस्य प्रस्तुतध्यानोपासनशब्दवाच्यत्वमित्यु(त्वमु?)क्तम् ; न तु ध्यानस्योपासनत्वमिहोच्यते ; **'वेदनमुपासनमित्यवगम्यते, विद्युपास्योः'** इत्यादिभाषणात् । 'वेदनमुपासनं स्यात्' इति प्रदर्शयिष्यमाणवाक्यसंवादाच्च । ध्यानोपासनशब्दयोरेकविषयत्वं ध्यानस्य प्रतिकूलध्यानात् व्यावृत्तिश्चेह अर्थादेव[5] सिध्यतः । यदि ध्यानमिहोपासनत्वेन शब्दतो विशेष्यते ; तदा ध्यानस्य पुनराकारान्तरोक्तौ श्रृङ्खला भज्येत ।

ननु ध्यानशब्दः चिन्तामात्रवाची व्यवहितस्मृतिसन्तानेऽपि स्यात् । स्मृतिमात्रे च क्वचित् प्रयुज्यते । सूत्रे च ध्यानोपासनशब्दाभ्यामसकृदावृत्तिमात्रमुक्तमित्यत्र तदभिप्रेतं श्रौतं नैरन्तर्यरूपविशेष-

---

कोशे, योऽन्यां देवतामुपास्ते इत्युपक्रमवचनमशुद्धमिति ज्ञापनार्थमेव, "अथ योऽन्यां देवतामुपास्ते इति उपक्रमे एव" इति श्रुतप्रकाशिकापरिरक्षकैरेभिः तत्त्वटीकायां साकूतं लिखितं स्यात् । एतच्छ्रुतिवाक्यग्रहणे उपक्रमे एवोपास्तेरिति एवं पाठो न ग्राह्य इति भावः। तदेवं पश्चादशुद्धमापतितमित्यलम्।

1 विद्याविशेषस्थमित्यन्तः शंकाग्रन्थः । अथापि विवक्षितसिद्धिरित्याह एकत्रेति । एकत्र परविद्यादौ विद्युपासिशब्दयोः या वृत्तिः अर्थबोधनरीतिः, सा तत्तुल्ये अन्यत्रापि परविद्यायाम्, दृष्टिविधिस्थले च असति बाधे संचरेदिति । 2 मनोब्रह्मोपासनफलमन्यत्र श्रुतौ स्पष्टमिति शंकते नन्विति । 3 पुनश्श्रुतीति । अभ्यासरूपप्रमाणान्तरात् उपास्तिभेद इत्यर्थः । 4 ननु अकृत्स्नो ह्येष इत्येतदनन्तरम्, अत एकैकेन भवतीति वाक्यानन्तरमेव आत्मेत्येवोपासीतेति वाक्यसत्त्वात् अत्रापि 'इत्यत्र' इति वक्तव्यमित्यत्राह मध्यमेति । आसन्नत्वात् = अधिकव्यवधानाभावात् । 5 अर्थादेवेति । एवमर्थात्सिद्धिमभिप्रेत्यैव उपरि, उपासनञ्चेति वाक्यारम्भे कार्यं ध्यानञ्चेत्यारम्भः कृत इति भावः ।

**ध्यानं च तैलधारावदविच्छिन्नस्मृतिसन्तानरूपम् ; "ध्रुवा स्मृतिः । स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः" इति ध्रुवायाः स्मृतेरपवर्गोपायत्वश्रवणात् ।**

माह ध्यानं चेति । धाराज्ञानामिहोत्पन्नत्वाद्वा स्वरूपेण चिरकालस्थायितया वा ध्रुवत्वं स्यादिति शङ्का-निरासाय सदृष्टान्तः सन्तानशब्दः । एवं विच्छिन्नाविच्छिन्नवेदनसाधारणस्य ध्यानस्य विशेषे विश्रम उक्तः; अविच्छिन्नासाधारण्यं वा स्थापितम् । स्वस्थाने चैतत् सूत्रयिष्यति —"ध्यानाच्च, अचलत्वं चापेक्ष्य" इति । 'उपासनशब्दस्याविच्छिन्नविषयत्ववत् ध्यानशब्दस्याप्यविच्छिन्नविषयत्वमिह स्थाप्यते" इति तूलिका । उक्तं श्रुत्योपपादयति ध्रुवेति । स्मृतेर्ध्रुव(ा)त्वं विसदृशबुद्धिव्यवधानरहितप्रवाहत्वम् । "तद्रूपप्रत्यये चैका सन्ततिश्चान्यनिस्पृहा" इत्यादिना तथोक्तेः । यद्यपि, "नाना शब्दादिभेदात्" इत्यत्र फलसंयोगैक्यमात्रान्न विद्यैक्यमिति वक्ष्यते; ध्यानत्वोपासनत्वध्रुवत्वादयश्च विशेषा [1]विद्यान्तरपठिताः— तथापि साधारणानां वेदनादिशब्दानां विशेषविषयत्वाभावे फले च तारतम्यरहिते गुरुलघूपायभेद-विधिदौःस्थ्यम् । गुरुलघुविकल्पायोगलक्षणं च वस्तुसामर्थ्यं प्रकरणात् बलीयः । अतः स्मृतेर्ध्रुवत्वमिदमेकत्र श्रुतमपि सर्वासु विद्यासु योज्यमित्यभिप्रायेण अपवर्गोपायत्वश्रवणात् इत्युक्तम् । स्मृतिलम्भे आहार-शुद्ध्यादिक्रमेण प्रस्तुतध्रुवानुस्मृतिसिद्धौ इत्यर्थः । ग्रथ्यत एभिः क्षेत्रीति ग्रन्थयः धर्माधर्मरागद्वेष-मोहादयः कर्मोपनीताश्च त्रिगुणविकारभेदाः । ते च मायापाशग्रन्थितया आगमोक्ताः । विप्रमोक्षः विगमयाऽऽत्यन्तिकमोचनम् । ननु भ्रान्त्या बन्धः सर्वेष्टः, तस्य कथम् अप्रमा स्मृतिर्बाधिका [2]भ्रान्त्यधीन-कर्मजन्यस्य स्वयं भ्रान्तिविषयत्वासिद्धेः । भ्रमोत्थस्यापि भय-शङ्काविष-जन्यज्वरादेरिव बन्धस्य सत्यतया युक्तोऽयमीदृशः प्रतीकारविधिः । मिथ्यात्वपक्षेऽपि [3]प्रायश्चित्तादिन्यायो दुस्त्यजः ।

अतो निवर्त्यस्य सत्यमिथ्यात्वे निवर्तकस्य मानामानत्वे अनादृत्य चोदितत्वात् स्वफलसाधनत्वं ग्राह्यम् । भेदवासनायाश्च ध्यानरूपा स्मृतिर्नाशिनी त्वयैवोक्ता । तदत्र शुक्तिरजतवन्न बन्धस्य बाधः; नाशस्तु यथाविधि स्मृत्या प्रमित्या वा स्यात् । [4]न चेयं स्मृतिरप्रमाऽप्ययथार्था, स्वहेतुक(प्र)मित्यनन्यविषयत्वात् । उक्तं च सामान्यतः श्रीमद्गीताभाष्ये, "स्मृतिर्नाम पूर्वानुभूतविषयमनुभवसंस्कारमात्रजं ज्ञानम्" इति । पूर्वानुभूतविषयत्वं न लक्षणप्रविष्टम् ; किन्तु विषयसत्यत्वासत्यत्वयोः स्वहेतुधीसामान्य[5]ज्ञप्त्यर्थम् ।

**निवृत्ततदवस्थस्य तदवस्थतया स्मृतौ । याथार्थ्यं न प्रतिक्षेप्यं भूतमाविप्रमाक्रमात् ॥ २००**
**स्मृतिप्रमोषे चार्थस्य तादवस्थ्यं न भासते । अयाथार्थ्यं कथं तत्र तत्तेदन्ताविवर्जिते ॥ २०१**

1 विद्यान्तरेति । तथा च तत्तत्प्रकरणोक्तो विशेषस्तत्रतत्रैव भवितुमर्हतीति शंका ।

2 समाधत्ते भ्रान्त्यधीनेति । भ्रान्तिविषयस्य हि प्रमया बाधः । परम्परया भ्रान्तिजे कथं भ्रान्तिविषयत्वमित्यर्थः । साक्षात्तदुत्थत्वेऽपि सत्यत्वं भवेदित्याह भ्रमेति । 3 प्रायश्चित्तेति । पापवत्त्वभ्रान्तावपि प्रायश्चित्तमनुष्ठीयते हि । अपापोऽपि पापारोपे परिहारे प्रवर्तते ।

4 भ्रमत्वाप्रमात्वयोर्भेदं दर्शयति न चेयमिति । 5 सामान्यं = साम्यम्—हेतुभूतानु-भवयाथार्थ्यायाथार्थ्यानुविधानं हि स्मृतियाथार्थ्यायाथार्थ्ययोरुदयनाद्युपपादितम् ।

सा च स्मृतिर्दर्शनसमानाकारा ; "भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः। क्षीयन्ते

अतो मूलानुसारेण यथादर्शं प्रमिष्यताम्। यथार्था चायथार्था च स्मृतिस्त्वनुभूतिवत् ॥ ३०२
अन्यदृष्टिस्तथाऽन्यत्र क्वोलब्धेश दिङ्भ्रमः। परांशत्वपि दोषा क चदंशो गृह्यते ॥ ३०३ ॥
अतः श्रुतिस्मृतिशतैश्चोदिता स्मृतिरूपिणी। भाष्यते परविद्येयं भवाख्यस्य(क?) निष्कृतिः ॥

(स्मृतेर्दर्शनसमानाकारत्वम्)

ननु ध्यानमेवेत्यादि अयुक्तम्। तदपि धारणावत् समाध्यर्थं प्रोक्तम्। समाधिरेव तु दर्शनात्मकः, "आत्मानं पश्येत्" इत्यादिर्भमुक्तिहेतुरुक्तः। न च योगित्वप्रत्यक्षमनभ्युपगतम्, तस्य बहुषु प्रदेशेषु भा[षि]ष्यमाणत्वात् इत्यत्राह सा चेति। ध्रुवत्वविशेषणेत्यर्थः। आकारान्तरेणापि [1]सूत्रम् उचितगत्या विशेष्यत इति व्यक्त्यै चकारः। एवार्थो वा। सैव [हि] स्मृतिर्वैशद्यातिशयात् समाधिरूपा ; न तु ध्यानफलमन्यत् दर्शनं 'पश्येत्' इत्यादिषु च(?) विधेयमित्यर्थः। स्मृतेर्दर्शनत्वव्याघातशमनाय समानत्वोक्तः। परोक्षेऽप्यपरोक्षत्वोपचार इति भावः।

[2]परोक्षा चापरोक्षा च स्मृतिर्द्वेधा स्वमूलवत्। क्वचित् वा स्यात् परोक्षैव द्विधाऽप्यत्रापरोक्षता ॥
[3]विधौ च परशब्दार्थो गत्यभावेऽनुमन्यते। लक्षणेष्टा हि दर्शादौ गौणी श्येनादिनामसु ॥
अर्धमन्तर्वेदि[4]मिनुयादिति च श्रुतौ। मध्यदेशस्य लक्ष्यत्वं सर्वत्रैव यथायथम् ॥ ३०७ ॥

नन्वत्र स्वान्वये ध्रुवत्वं(त्वमिव?) न दर्शनरूपत्वं विशेषणतयोपात्तम् ; यतः समाधेः पार्थक्यं परिह्रियेतेत्यत्राह भिद्यते इति। अत्र ग्रन्थिशब्द उपात्तकर्मादिव्यतिरिक्तविषयः ; हृदयस्य मनसः सम्यक् प्रवृत्तिप्रतिबन्धकतया ग्रन्थयो रागाद्याः। यद्वा— हृच्छब्दोक्तं स्थानमयतीति हृदयो जीवः। तात्स्थ्याद्वा मसौ तच्छब्देन लक्ष्यते। तस्य ग्रन्थिः पूर्वोक्तस्त्रिगुणविकारवर्गः। हृदयं वा ग्रन्थिः ; उपलक्षणमिदम्। यत्तु निरुच्यते छान्दोग्ये, "स वा एष आत्मा हृदि। तस्यैतदेव निरुक्तं हृद्ययमिति, तस्माद्धृदयम्। अहरहर्वा एवंवित् स्वर्गं लोकमेति" इति; [5]तत् उपास्यब्रह्मपरम्। न च तदेवात्र हृदय-

1 आकारान्तरेणापि विशेष्यत इत्यन्वयः। सूत्रेति। अवृत्तिरसकृदिति सूत्रं हि सामान्यस्य विशेषे पर्यवसानपरम्। गतिसामान्यादिति चैकस्त्रोकरीतिरत्रापीति भावः।

2 अपरोक्षत्वोपचार इत्युक्तम्। यदि तु दर्शनत्वाभावेऽपि अनुभव इव स्मृतावपि परोक्षत्वापरोक्षत्वे मुख्ये एव स्वीक्रियेते, तदा विशदस्मृतेर्वास्तवमेवापरोक्षत्वम्। न चेत्— उपचरितमिति भावः। 3 'न विधौ परः शब्दार्थः' इति मीमांसकोक्तेः क्वचित् गत्यभावे भंग इष्टः; दर्शपूर्णमासाभ्यामित्यत्र दर्शपदादौ विधिवाक्यगते लक्षणादर्शनात्। दर्शपदं हि अदृश्यमानचन्द्रतिथिपरम्, तथा तत्कालकार्यप्रकृतयागपरं तत्रापि आग्नेयादियागत्रयरूपसमुदायपरञ्चेति त्रिप्रकारा लक्षणेति। गौणीति। श्येनेनाभिचरन् यजेतेति विहितस्य यागस्य श्येन इति नाम। तच्च श्येनपक्षिगतद्विषदाशुत्वरूपगुणसमानगुणवत्त्वेन यागे प्रयुक्तम्। अतोऽपि विधिवाक्ये अमुख्यवृत्तिसिद्धिः।

4 अर्धभागः अन्तर्वेदि, अर्धभागश्च बहिर्वेदि इति पदद्वयेन भागद्वयविधाने वाक्यभेदः स्यादिति—उभयसाधारणमध्यदेशरूपैकार्थलक्षणया तद्विधिरंगीकृतः। अतो विधावपि अमुख्यार्थो बहुधेति भावः। 5 तत् = हृदयपदम्।

चास्य कर्माणि तस्मिन् दृष्टे परावरे ॥" इत्यनेनैकार्थ्यात् ।

शब्दवाच्यमिति अमन्तव्यम्; मन्यसंशयादिरुद्धबन्धित्वासत्त्वात्। सर्वविषयाः संशयाः; सर्वे वा संशयाः; संशयशब्दोऽत्र विपर्ययान्यथाप्युपलक्षकः। ते छिद्यन्ते हेतुच्छेदात्र सन्तन्यन्त इत्यर्थः। कर्माणि बन्धकपुण्यकृतानि दुष्कृतानि च। प्राप्तिविरोधिक्षयस्यात्र विवक्षितत्वान्न विद्योत्पत्तिकर्मनिवृत्त्योरन्योन्याश्रयः। परावरे — परत्वं सर्वातिशायिता; अवरत्वम् — सौलभ्यार्थेन्द्रनुजत्वादि। यद्वा "सद्ब्रह्म" "ब्रह्म दाशा" इत्युक्त(क्त?) परावरजन्तुशरीरके। अपरावरे वा निम्नोन्नतविश्वविलक्षणे। अथवा परा एवावरा भृत्या यस्य स परावरः।

इदमत्र कूतम् — 'दृष्टे' इत्यत्र दर्शनशब्दो न तावत् मुक्त्यवस्थाभाविदर्शनपरः, ध्रुवस्मृतिशब्दवत् ग्रन्थिमोक्षसाधनविषयत्वात्। न च साधनविषयत्वेऽपि स्मृतिदृष्ट्योरपवर्गं प्रति समुच्चयः, दर्शपूर्णमासादिवत् द्वन्द्वस्य चकारस्य वाऽनुपलब्धेः। न चात्र समुच्चयः शक्यः; प्रकन्ययोगेन ब्रह्मणस्साक्षात्कर्तुमशक्यत्वात्, शक्यत्वेऽपि यौगपद्यस्यासम्भवात्, क्रमस्य च व्यवस्थापकाभावात्। न च प्राचीनं ध्रुवस्मरणं पश्चिमं च योगप्रत्यक्षं क(का)रणतया सङ्कोच्येत; धारणावत् तादर्थ्योपपत्तौ समुच्चयकल्पनायोगात्; अन्यथातिप्रसङ्गात्। ध्रुवस्मृतेर्व्यवहितसाधनत्वकल्पतौ श्रवणहानादिप्रसङ्गाच्च। प्रमाणफलं च दर्शनं न स्वरूपेणोपादातुं[1] शक्यम्; येन समुच्चित्य विधीयेत। ननु संस्कारोद्बोधफले स्मरणेऽपि समानमेतत्; अत[2] आज्यावेक्षणन्यायात् तदुपायभूतशक्यव्यापारार्थो दर्शनविधिरिहास्त्विति चेत्—न; तथा सति एकस्मिन् वाक्ये द्रष्टव्यनिदिध्यासितव्यपदयोः पुनरुक्तिप्रसङ्गात्। अन्ततो निदिध्यासनार्थचित्तप्रेरणस्यैव पुरुषतन्त्रस्य दर्शनोपायतया विधातव्यत्वात्। अन्यस्य चादृष्टेः॥ नन्वेक एव दर्शनोपायः सामान्यतो विशेषतश्च पदद्वयोक्त इत्यपुनरुक्तिः स्यात्॥ हन्तैवं सति समुच्चयं त्यक्त्वा अस्मत्पदवीमासीदसि; "द्रष्टव्यो निदिध्यासितव्यः" इत्युभाभ्यामेकस्यैव विधेयत्वात् [तत्र त्वदुक्तप्रकारे द्रष्टव्य इति दर्शनोपायत्वेन सामान्यपरम्; ध्यानं विशेषः?] अस्मदुक्ते तु ध्यानं वैशद्यतो[3] विशेष्यत इति वैषम्यम्। न च दर्शनसमानाकारध्यानान्तरेण ध्रुवस्मृतेस्समुच्चयः; तादृशस्यान्यस्यादृष्टेः, तत्कल्पतौ च गौरवात्। ध्रुवस्मृतेर्निरपेक्षसाधनत्वश्रुतिभङ्गप्रसङ्गाच्च। न च मोक्षे साध्ये साक्षात्कारस्मृत्योरनेकदोषदुष्टो विकल्पः स्वीकार्यः[4]।

(विकल्पस्य द्वेधाऽष्टदोषत्वनिर्वचनम्)

विकल्प(ल्पे?)बुद्ध्यनुष्ठानापूर्वतत्फलबाधतः ।
कोटिभ्याम(कोट्योरेकेऽ?)ष्टदोषत्वं प्रयोगद्वितयेऽब्रुवन् ॥ ३०८ ॥

1 उपादातुम् = कृत्वा साधयितुम्। 2 यागे; 'पत्नी आज्यमवेक्षते' इत्यत्रावेक्षणानुकूलव्यापारस्य विधिः; अवेक्षणस्य विधातुमशक्यत्वात्। 3 वैशद्यं द्रष्टव्यपदविवक्षितध्यानविशेषणमित्यर्थः। 4 स्वीकार्यः = स्वीकर्तुं युक्तः। कारिकायां विकल्पे इति पृथक्पदं युक्तम्। तस्य कारिकाद्वयेऽपि क्रियायामष्टदोषत्वमित्यस्येवान्वयः। बुद्धीति। उक्तमिदं टीकायामपि, "यद्वा प्रतिपत्तिबाधः अनुष्ठानबाधः अपूर्वबाधः फलबाधश्च पक्षे [illegible] दोषचतुष्टयात्" इति। बुद्धिबाधो नाम एकशास्त्रार्थादरणे अन्यशास्त्रार्थे स्वानुष्ठेयत्वबुद्धित्यागः। कारिकाद्वयार्थे वक्तव्यमस्मदीये टीकाविवरणे द्रष्टव्यम्।

[1]प्रामाण्यत्यागतोऽन्यस्य स्वीकृतेस्त्यक्तसङ्ग्रहात् ।
स्वीकृतत्यागतश्चान्ये प्रयोगत्रितये विदुः ॥ ३०९ ॥

गुरुलघुवैषम्याच्चात्र न तत्सम्भवः ; अन्यथाऽतिप्रसङ्गात् । विषमफलेष्वेव तद्धेतुत्वदृष्टेः । न चास्य द्वारद्वारिता ; मानाभावात् । न हि श्रवणमननयोर्ध्यानोपकारकत्ववत् ध्यानस्य दर्शनोपकारकत्वं दृष्टम् । परोक्षं भावनाबलजप्रत्यक्षं तु शास्त्रयोन्यधिकरणे निरसिष्यते । न चात्र श्रुतम्, एवं क्वाप्यनुक्तेः ॥ "ततस्तु तं पश्यते निष्कलं ध्यायमानः", "ध्याननिर्मथनाभ्यासात् देवं पश्येन्निगूढ[2]वत्" इत्यादिकमस्तीति चेत्—सत्यम् ; ध्यानफलं ह्येतद्दर्शनमणिमादिवत् सिद्ध्यन्तरमस्तु; न साधनम् ; तथाऽनुक्तेः । परविद्याप्रकरणे क्वचित् तदुक्तिस्तु तत्प्रभावप्रदर्शनार्था, "तमक्रतुं पश्यति वीतशोकः", "पुरिशयं पुरुषमीक्षते" इतिवत् ध्यानसाध्यतयोक्तं दर्शनं [3]मुक्तस्यास्तु । ध्यानसाध्यं(ध्यतयोक्तं) दर्शनं मुमुक्षोश्चेत्, विशदध्यानरूपं स्यात् । तथाहि— दर्शनशब्दस्य श्रावणज्ञानादिष्वप्रयुज्यमानस्य चाक्षुषज्ञानमेव हि मुख्यम् । तत्तु, "न चक्षुषा गृह्यते नापि वाचा, मनसा तु विशुद्धेन" इत्यादिभिरिह [4]प्रतिक्षिप्तम् । अतो मनोजन्यज्ञानविशेषे दर्शनत्वोपचार इति वाच्यम् । तथासति वरं मोक्षसाधनतया कण्ठोक्तस्यैव ध्रुवानुस्मरणस्य तादृशवैशद्यविवक्षया तदुपचार इति ।

ननु दर्शनशब्दः स्मृतिं साक्षात्काररूपत्वेन विशिनष्टु ॥ नैवम् ; तस्य स्मृतावसम्भवात्, [5]मूलभेदानुसारेण सम्भवाभिमानिनामपि परोक्षानुभवसाध्यस्मृतौ तदसिद्धेः । "मनसा ध्याननिष्पाद्यं समाधिः सोऽभिधीयते" इति समाधेर्ध्याननिष्पाद्यत्वोक्तिश्च विशदाविशदवैषम्यात् । उक्तं च समाधौ अवस्थाद्वयं तस्यैव योगाङ्गत्वमङ्गित्वं च निर्वहद्भिः ॥ अस्त्वेवमिह स्मृतिदर्शनवाक्ययोरैकार्थ्यम् ; तथापि स्मृतिशब्देन दर्शनमुपचर्यताम् ॥ तन्न ; मुख्यार्थबाधाबाधाभ्यां विपरिवर्तस्यैव स्थापितत्वात् । किंच स्मृतिर्हि वैशद्योक्त्या स्तूयेत ; दृष्टिस्तु स्मृतित्वोक्त्या निन्दिता स्यात् । परोक्षज्ञाने च वैशद्यविवक्षया "तमसः पारं दर्शयति" इत्युच्यते । लोके च, 'पारदर्शी, दूरदर्शी' इत्यादि । नन्वपरोक्षस्य संसारस्य दर्शनसमानयापि परोक्षया स्मृत्या कथं बाधः ? न कथञ्चित् ; मिथ्यात्वासिद्धेः । अपरोक्षस्यापि उज्ज्वलैक्य-देहात्मत्व-चन्द्रद्विरत्वादेरनुमानादिना बाधो दृष्टः ; सर्वैश्चाभ्युपगतः । अतः, 'तस्मिन् दृष्टे' इत्यनेनापवर्गोपायविषयेण स्मृतेर्वैशद्यलाभात् तादृशी सैव समाधिरिति नाष्ट[6]लोपप्रसङ्गश्चेति । तथापि, "द्रष्टव्यः"

1 व्रीहिप्रयोगे प्रथमे यवशास्त्रे प्रामाण्यत्यागात्, अप्रामाण्यस्वीकारात् अथ यवप्रयोगे त्यक्तप्रामाण्यस्वीकारात् स्वीकृताप्रामाण्यत्यागात् तदा व्रीहिशास्त्रे प्रामाण्यत्यागादप्रामाण्यस्वीकारात्, पुनर्व्रीहिप्रयोगे त्यक्तप्रामाण्यस्वीकारात् स्वीकृताप्रामाण्यत्यागाच्चेति अष्टदोषत्वोपपादनात् प्रयोगत्रितये इति शुद्धपाठः ; न तु प्रयोगद्वितये इति । 2 निगूढवत् =अरणिनिगूढमग्निमिव । 3 वीतशोकत्वं मुक्तदशा । तदनन्तरदर्शनमत्रोक्तम् । यदि उपनिषद्भाष्यरीत्या, यः पश्यति स वीतशोको भवतीत्युच्यते, तदा विशदध्यानमैहिकमेव दर्शनम् । 4 इह—परमात्मनि । 5 मूलेति । प्रत्यक्षानुभवजन्यस्मृतेः प्रत्यक्षत्वं परिपाके मन्वानानामपि । 6 अष्टाङ्गयोगे अष्टममङ्गं हि समाधिः ।

एवं च सति, "आत्मा वा अरे द्रष्टव्यः" इत्यनेन निदिध्यासनस्य दर्शनसमानाकारता विधीयते ।

---

इत्यादौ ध्यानसामर्थ्याक्षिप्तश्रवणमननयोः ध्यानार्थत्ववत् अप्रधानन्यायेन ध्यानस्यापि दर्शनार्थबुद्ध्यन्तरत्वोपपत्तेर्न दर्शनशब्दस्तद्विषयः स्यात् इति शङ्कायां ध्यानमेवोत्राभिप्रेत विधीयते इति एवं च सतीति । [1]ध्रुवस्मृतित्वेनेव दर्शनसाम्येनापि निदिध्यासनस्य विशेषितत्वे श्रुत्यन्तरसिद्धे सतीत्यर्थः । चः शङ्कानिवृत्त्यै । स्वतःप्राप्तविधिपरत्वयुक्त्या सह स्फुटार्थश्रुत्यन्तरानुगुण्यसमुच्चयार्थो वा । अयं भावः– ध्यानस्यापि श्रवणादिवदविधेयत्वे यज्ञादिभिरेव हृद्द्वारेण दर्शनसिद्धिं कल्पयेत ; तथा च मध्ये ध्यानं विफलं स्यात् । भावनाबलजप्रत्यक्षानुपपत्त्या तादृशदृष्टोपकारकाभावात् । विधेयत्वे तु एकत्र निर्णीतः शास्त्रार्थः सर्वत्र स्वतःप्राप्त इति न्यायात् ध्रुवानुस्मृतिवाक्यवदिहापि निदिध्यासनं दर्शनसमानतया विशेष्टव्यम् । "द्रष्टव्यः" इत्यत्र परोक्ते फलपरत्वे तु प्रत्ययवैयर्थ्यम् । पूर्वापरवाक्येषु च, "येनाहं नामृता स्याम्", "अमृतत्वस्य तु नाऽऽशाऽस्ति वित्तेन", "एतावदेव खल्वरे अमृतत्वम्" इति फलस्योक्तत्वात् तदुक्तिरत्रानपेक्षिता । वैशद्यं त्वन्यत्रोक्तमत्राप्य काङ्क्षाबलायत्तम् । अत उपायपरतया, 'तस्मिन् दृष्टे' इतिवत् विधेयविशेषकत्वे सम्भवति विकल्प-समुच्चय-श्रुतहानादेरयोगात , एकफलसिद्ध्यर्थं विशिष्टैकसाधनविधितात्पर्यसम्भवे पृथक् फलविधिभेदस्याप्राप्तत्वात , [असति?] 'दध्ना' इतिवदनूद्यविधाने विशिष्टविधेयैक्यसम्भवाच्च वैशद्यविशेषितध्यानविधिपरमिदं, 'द्रष्टव्यः' इत्यादिवाक्यमिति । अत एवास्य युगपदेकस्य विध्यनुवादशङ्काऽप्यपास्ता ॥ स्वानन्दसाक्षात्काररूपस्याऽऽत्मदर्शनस्य स्वयमेवेप्सितस्य कथं विधेयत्वमिति चोद्यं विशदस्मृतिविधानोक्त्या प्रत्युक्तम् । एतेन, 'निचाय्य तं मृत्युमुखात् प्रमुच्यते", "यदा पश्यः पश्यते रुक्मवर्णम्", "तद्विज्ञानेन परिपश्यन्ति धीरा आनन्दरूपममृतं यद्विभाति" इत्याद्यपि यथावत्(यथार्हं) निरूढम् ।

नन्वेवं योगिप्रत्यक्षमेव लुप्येत ; तत्सद्भाववाक्येषु दर्शनादिशब्दानां योगिप्रत्यक्षसद्भाववचनानामपि प्रत्यक्षसमानाकारविषयतया नेतुं शक्यत्वात । [2]न च, 'धर्मादयः कस्यचित्प्रत्यक्षाः प्रमेयत्वात्' इत्यादिभिस्तत्सिद्धिः ; ईश्वरप्रत्यक्षेण [3]अर्थान्तरापत्तेः । 'इन्द्रियग्राह्य(त्वा)' इति साध्यप्रयोगेऽपि शास्त्रैवेद्यस्यापि मनोविषयत्वेन सिद्धसाधनात् । इन्द्रियसाक्षात्कर्तव्या इत्यत्राप्य-ीन्द्रियाणामपि अनुव्यवसायवेद्यत्वबाह्येन्द्रियाणामर्थान्तरत्वेन दत्तोत्तरत्वात् । सुखादिवदाहत्य[4] साक्षात्कार्यत्वविवक्षायां विपक्षे बाधकासम्भवेन [5]प्रतिबन्धासिद्धेः ; अन्यथा चौद्धवत् धर्मादीनां चाक्षुषत्वस्यापि साधनप्रसङ्गात् । शक्यं हि, 'विगीतं कस्यचित् चाक्षुषं प्रमेयत्वात्' इत्यादि प्रयोक्तुम् । किंच, 'योगीन्द्रियं न धर्मादिप्रत्यक्षजनकम् इन्द्रियत्वात् अस्मदादीन्द्रियवत्' इति प्रतिप्रयोग सुलभ इति । मैवम्—

---

1 ध्रुवस्मृतित्वेनेति । उक्तं हि भाष्ये ध्यानञ्च तैलधारावदिति वाक्ये । 2 उदयनोक्तानुमानं निरस्यति नचेति । 3 अर्थान्तरमिति निग्रहस्थानम् । विवक्षितासिद्धिरिति । 4 आहत्य = किञ्चिद्द्वारीकृत्य, साक्षात् । 5 प्रतिबन्धः = व्याप्तिः ।

**भवति च स्मृतेर्भावनाप्रकर्षात् दर्शनरूपता ।**

**वाक्यकारेणैतत् सर्वं प्रदर्शितम् । "वेदनमुपासनं स्यात् तद्विषये श्रवणात्" इति सर्वासूपनिषत्सु मोक्षसाधनतया विहितं वेदनमुपासनमित्युक्तम् ।**

---

**ध्रुवानुस्मृतिरिह कथिता दर्शनोक्तिमुख्यता । अन्यत्र बाधकाभावात् यथ श्रुतिसंग्रहः । ३१०**

संयमिनां प्रातिभानागतातीन्द्रियादिवेदनं कण्ठोक्तम् । न च स्मरणमेतत् (मेव तत् ?) अननुभूतविषयत्वात् । अत एव न तत्र वैशद्यमवेगा प्रत्यक्षगोचरमसम्भवः । न च तत्रानुभवसाधकांशः, "तत् सर्वं धर्मवीर्येण यथावत् संप्रपश्यति" इत्यादिभिस्तत्प्रतिक्षेपात् । "पाणावामलकं यथा" इत्यादि च निर्दिश्यते । घोरपिप्पलमेदैरनभीसूक्तकाण्ड ज्ञानसाक्षात्कारश्च कीर्त्यते । "दिव्यं ददामि ते चक्षुः" इत्यादि च प्रसिद्धम् । अतो नासिद्धिर्योगप्रत्यक्षस्य [प्रत्यक्षस्य ?] बाह्येन्द्रियाणां मनसश्च सुकृतविशेषैर्यथ हि लोके सातिशयत्वदर्शनात्[1] । न चातिप्रसङ्गः, [2]यथ श्रुतिलङ्घने हेत्वभावात्, [3]अनुमानस्य विपक्षे बाधकाभावाच्च न चानुमानतः श्रुत(ति)भङ्गः; तस्य गमनेन बाधात्; अन्यथाऽतिप्रसङ्गात् ।

ननु शास्त्र शक्ये शक्ये विधियुङ्क्ते । स्मृतेस्तु दर्शनसाम्यं न पुरुषतन्त्रम् । न च तदपि तस्याः सम्भवि; दर्शनत्वव च । असम्भावितं च न विधिरग्रातुमर्हति । न [4]दृष्टाधिकारो विधिरसम्भवित्दृष्टफले सति भवतीत्याह भव इति । भावना अनुभवजन्यसंस्कारः चिन्तैव वा । सा च सादरं निरन्तरं च कर्तुं शक्या । ततः स्मृतिवैशद्यसिद्धिः । दर्शनस्य रूपमिव रूपं यस्यास्सा इत्युपमानबहुव्रीहिरत्र ग्राह्यः । भीतकामुकादिभिश्च अत्र निदर्शितव्याः । परैरप्युच्यते — "दृष्टं परोक्षमपि ध्यायमानसाक्षाद्भावमापन्नं कामातुरपद्मत्रे" इति । "वृक्षे वृक्षे च पश्यामि" इत्यादिषु भ्रान्तित्वं दोषायत्तम्; इह तु यथाश्रुतचिन्तनात् न [5]दोषबाधाविति भावः ।

**यदि स्यात् भावनाभूम्ना स्मृतेर्दर्शनतुल्यता ।**

**किमत्र कर्मणा; मैवं मानसिद्धो[6](द्धयो)र्भयग्रहात् ॥ ३११ ॥**

उक्तस्य न्यायवर्गस्य दार्ढ्याय सूत्रे शाब्दमार्थं च सर्वं मुख्य(मुख?)मेदेन तदभिप्रायविधिं विमृश्य निर्धारितमित्याह — **वाक्यकारेणेति । तद्विषये श्रवणात्;** उपासनशब्दस्थाने वेदनशब्दस्य एकत्र अन्यत्र च प्रकरणे प्रयोगादित्यर्थः । अत्रोक्तस्य प्रासङ्गिकत्वशङ्काव्युदासाय वाक्यं व्याचष्टे सर्वास्विति । "मनो ब्रह्मेत्युपासीत" इति द्विविधयुक्तमपि न्यायसाम्यात्परविद्यास्वपि योज्यम्; किंपुनस्तास्वेवैकत्र दृष्टमिति व्यक्त्यै **मोक्षसाधनतया विहितमि**त्युक्तम् । एतेनाऽऽपातधी श्रवण मनन निर्गमादेर्व्यवच्छेदः । वेदनमु-

---

1 अतिशयाधानादिति । अतः अतीन्द्रियजन्यत्वमत्या कथं प्रत्यक्षत्वमिति न शंकनीयमिति । 2 यथाश्रुतातिलंघने श्रुतमनुसृत्य नियमातिलंघने । 3 अनुमानस्य = अप्रत्यक्षमित्यनुमानस्य । विपक्षे बाधकाभावात् इत्यस्य अप्रयोजकत्वादित्यर्थः । 4 दृष्टाधिकारः = दृष्टेन दृष्टसिध्यर्थः । आहुश्च, न ह्यागमाः सहस्रं घटं पटयितुमीशते" इति । 5 तद्दोषेति । स्वरूपरूपगुणादौ ध्येये बाधाभावेऽपि धुरिस्थितत्वादिना ग्रहणे तु दोषादिकं भवेदेव । 6 अन्यत्र भावनाभूम्ना कामादेः हेतुभूतपापक्षयाद् भवति । अत्र प्रीतिविशेषानुवृत्तिहेतुभूतकर्मानुष्ठानानुवृत्तिसद्भावादिति विशेषः ।

एवं प्रत्यक्षतापन्नामपवर्गसाधनभूतां स्मृतिं (ध्रुवानुस्मृतिं) विशिनष्टि- "नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन । यमेवैष वृणुते तेन लभ्यः तस्यैष आत्मा विवृणुते तनूं

---

अनन्यसहकारिणा मनसा संस्कारप्राबल्यमहिम्ना) प्रागनुभूतेषु विशदस्मृतिराधीयते, तदतिरिक्तधी[1]कल्पने अनन्यथासिद्धहेत्वभावात् । तत्र चक्षुरजन्येऽपि तज्जन्यत्वधीः, असंसृष्टे[2] संसृष्टधीश्च दोषवशात् मानस-भ्रान्तिः सन्ध्याधिकरणानुरोधे तु संस्कारमात्र[3]जन्यत्वाभावादसङ्कीर्णं दर्शनत्वम् । अतो न स्वप्ननिदर्शनेन प्रस्तुते प्रत्यक्षत्वव्यवहारः शक्यः । धीत्वमात्रेण दर्शनसाम्यदुरुपचारश्च वाच्यासन्नतमस्तुत्यनुगुण-विशेषसिद्धौ न युक्त इति ।

(ध्रुवानुस्मृतिरूपोपासनस्यैव भक्तिरूपत्वम्)

ननु, "नायमात्मा" इत्यादौ श्रवणादित्रिकं प्रतिषिध्य अपर्यनुयोज्यस्य स्ववरणमात्रेण तल्लाभ इत्युक्तम् । तस्मात्, "दैवमेव परं मन्ये पौरुषं तु निरर्थकम्" इति न्यायादुक्तं सर्वं वितथमित्यत्र[4] सूत्रवाक्ये ध्रुवत्वादिविशेषितायाः स्मृते[5]रुपासनशब्दार्थतयाऽभिप्रेतं भक्तिरूपत्वविशेषणमेव तत्र विवक्षित-मित्याह — **एवमिति** । सामान्यशब्दानां सूत्रप्रयुक्तेन विशेषविश्रमप्रकारेणेत्यर्थः । **प्रत्यक्षतापन्नाम्** इत्येतत् वक्ष्यमाणस्य भक्त्यात्मकत्वस्य न्यायसाम्यसूचनार्थम् । अहेतुकवरणमयुक्तम्; तस्याऽऽदिमत्त्वे निर्हेतुकत्वायोगात् । अनादित्वे मुक्तेरप्यनादित्वापातात् । मुक्त्युपायविधेश्च वैयर्थ्यप्रसङ्गात्, *जीवव्यापाररूपभेदविशेषनिषेधपरस्य वैषम्यनैर्घृण्यनिषेधकसूत्रादेर्विरोधापत्तेश्चेत्यभिप्रायेण **अपवर्ग-साधनभूताम्** इत्युक्तम् । फलान्तरार्थोपास्तिपरत्वशङ्का चानेन निरस्ता । परो ह्यात्माऽत्र लभ्य इष्यते । **विशिनष्टि** । न तु प्रमाणप्राप्त[6]निवर्तयतीत्यर्थः । अन्यथा उपायान्तरविधानवैयर्थ्यम्, "मत्वा धीरो न शोचति", "प्रज्ञानेनैनमाप्नुयात्" इति पूर्वापरविरोधश्च स्यात् । **नायमात्मेत्यादौ**(दि ?) श्रुतशब्देन श्रवणमुपात्तम् । मेधाशब्दश्च ध्यानार्थः स्यात्; "मेधामनीषे मा विशतां समीची भूतस्य भव्यस्यावरुद्ध्यै" इति श्रुत्यनुसारात् । 'धीर्धारणावती मेधा" इति च निघण्टुः । पारिशेष्यात् प्रवचन-शब्दः श्रवणध्यानसहोक्तं मननपरः; प्रोच्यतेऽनेनेति करणव्युत्पत्तेः । [7]शिष्यमननार्थगुरुप्रवचनेन वा मनन-लक्षणा । प्रवचनहेतौ वा तत्कार्यो[8]पचारः । ननु [9]स्वरूपनिषेधकस्य कथं तद्विधायकत्वम्(तद्विशेषकत्वम् ?);

---

1 अतिरिक्तधीः = अनुभवरूपं ज्ञानम् । 2 गजाद्यारूढत्वबुद्धिः । 3 अभावादिति । अपूर्ववस्तूनामेव तत्र सृष्टेरिति भावः । 4 इत्यत्रेति । उक्तार्थापलापाय चिन्तितमुपात्तं वाक्यम् उक्तार्थपुष्टिप्रदमेव भवतीति भावः । विहितप्रतिषेधं मृषावादी हि कुर्यात्; नान्य इति भावः ।

5 उपासनशब्दार्थतयेति । उपासनशब्दार्थे भक्तित्वमपि निविष्टमेव । अतो ध्यानवैलक्षण्यम् । 'सेवा भक्तिरुपास्तिः स्यात्' इति कोशोऽपि । * जीवेति । जीवगताः ये लीलाव्यापाराः तन्मूलभूताः रूपभेदाश्च ये वैषम्यादयः विशेषाः = परमात्मव्यावृत्ताः तन्निषेधपरस्येति स्थित-निर्वाहः । 6 प्रमाणप्राप्तं = श्रवणं मननं ध्यानञ्च । 7 प्रवचनकरणत्वस्य बहुसाधारण्यात् लक्षणामेवाऽऽद्रियते शिष्येति । 8 कार्योपचारः = कार्यवाचकपदस्य लक्षणया प्रयोगः ।

9 स्वरूपेति । श्रवणमननादिरूपधर्मीत्यर्थः । तद्विधायकत्वम् । प्रीतिरूपापन्नत्वेन तद्विधायकत्वम् । विशेषकत्वमिति उपरि वक्ष्यते । अतस्तथा वा पाठः ।

**स्याम्" इति। अनेन केवलश्रवणमनननिदिध्यासनानाम् आत्मप्राप्त्यनुपायत्वमुक्त्वा यमेवैष आत्मा वृणुते, तेनैव लभ्य इत्युक्तम्। प्रियतम एव हि वरणीयो भवति। यस्यायं निरति-**

अत्र च[1] क्वचिदङ्गाङ्गिप्रतिषेधाद्वैयर्थ्यम्; क्वचित्तु विहितप्रतिषेधाद्विरोध इति शङ्कायां श्रवणादिवैयर्थ्य-प्रसङ्गं च परिहरन् वाक्यस्य ध्रुवानुस्मृतिविशेषकत्वं व्यनक्ति **अनेनेति**। यथा "न पृथिव्यामग्निश्चेतव्यः" इत्यत्र निषेधस्य हिरण्यवैकल्यपरिहारार्थतया हिरण्योपहितत्वविधौ तात्पर्यम्, तथाऽत्रापि पृथिव्या इव श्रवणादेर्यथार्हं प्रणाड्या साक्षाच्चावश्यम्भावित्वात् प्रीतिवैकल्यनिषेधमुखेन त्रिष्वपि प्रीतिविशेषविधौ तात्पर्यमित्यभिप्रायवान् **केवलशब्दः**। यद्वा, "नान्तरिक्षे न दिवि" [2]इत्यभागिप्रतिषेधेन सह पठितः, "न पृथिव्याम्" इति प्राप्तप्रतिषेधः-यथा केवलपृथिव्या अन्तरिक्षादिवत् अधिकरणत्वव्युदासेन हिरण्योपधान[त्व]वैशिष्ट्यविधौ विश्राम्यति; तथाऽनुपायभूतश्रवणमननाभ्यां सहोपायभूतनिदिध्यासनस्य प्रतिषेधः केवलनिदिध्यासनस्य श्रवणादिवत् अनुपायत्वोक्तिमुखेन भक्त्यात्मकत्वविधौ पर्यवस्यतीति। अनियमेन यथेष्टं स्वतन्त्रवरणशङ्काव्युदासाय यद्वृत्तानुक्तिबलेन नियतविषयवरणव्यक्त्यर्थं **यमेवे**त्युपादानम्; वैषम्यादिदोषानाघ्रात[3]सर्वसुहृद्वरणस्य नियतविषयत्वायोगात्। 'यदाग्नेयः' इति वाक्यस्थभवतिवत्[4] **वृणुते** इत्यस्य प्रयोजकव्यापारविधौ तात्पर्यम्, लप्स्यमानवरणप्रयोजकव्यापारवता भवितव्यमिति। ननु हिरण्योपधानस्य पृथिवीस्थत्वावश्यम्भाववत् एतद्वाक्यस्थयद्वृत्तव्यङ्ग्यवरणीयताहेतु-गुणविशेषस्य ध्रुवानुस्मृतिसम्बन्धनियमादृष्टेर्न तस्यास्तेन वैशिष्ट्यलाभ इत्यत्राह—**प्रियतम** इति। फलान्तरार्थभक्त्याभासव्यवच्छेदार्थं तमप्प्रयोगः। **हि**: शास्त्रतो लोकतश्च परावरपुरुषस्वभावप्रसिद्धौ। नन्वेतावताऽपि वरणीयस्य प्रियतमत्वापादकः कश्चिदन्यो व्यापारस्सिध्यतु; ध्रुवानुस्मृतेर्विशेषितत्वं तु न लब्धमित्यत्राह—**यस्येति**। स **एव**; न सुकृतान्तरवान्, न च केवलध्रुवानुस्मृतिमान्, नापि निर्व्याजप्रियः कश्चिदिति भावः। **अस्य**—"समोऽहं सर्वभूतेषु" इत्यादिना स्वेनैवोक्तस्वभावस्येति यावत्। अयं भावः—अन्येषां स्वप्रीतिहेतुव्यापाराणां स्वलाभार्थवरणहेतुत्वाभावात् स्वविषयनियतात्यन्तिकप्रीतिमानेव परस्य प्रियतमो भवन् स्वप्रापणाय वरणीयस्स्यात्। इयं च निरतिशयप्रीतिरूपा बुद्ध्यवस्था मुक्तिसमुत्पादने विकल्पसमुच्चयविद्वेषिणी अनन्यगतिकप्रमाणवशात् मुक्तिसाधनतया स्थापितध्रुवानुस्मृतिम् आश्रयन्ती तां विशिनष्टि—इति। ननु स्वशेषतया नित्योपात्तस्य किमद्य **वरणम्**; सर्वव्यापितया नित्यप्राप्तस्य किं वेदानीं **लभ्यत्वम्**; प्रियतम एवास्य वरणीय इति च कुतस्त्यमित्यत्र तत् सर्वमुपबृंहणेन स्पष्टयति—**यथेति**। **अयं**[5] [illegible]:=भगवति निरुपाधिकभोग्यताविर्भावेण निरतिशयप्रीतिमान्।

1 अङ्गं श्रवणं मननञ्च। अङ्गि ध्यानम्। सर्वमपि व्यर्थम्, प्रतिषेधात्। एषु विहितं तु ध्यानमात्रम्। श्रवणमननयो रागप्राप्तत्वात्। 2 अभागिप्रतिषेधादिति मीमांसासूत्रम्। अप्रसक्तप्रतिषेधादित्यर्थः। 3 सर्वेति। सर्वस्य सुहृत् यः तत्कर्तृकवरणस्य। 4 भवतीत्यस्य भावयेदित्यर्थः। प्रयोजकेति।

ध्ययप्रियः स एवास्य प्रियतमो भवति ; यथाऽयं प्रियतम आत्मानं प्राप्नोति, तथा स्वयमेव भगवान् प्रयतत इति भगवतैवोक्तम्, "तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम्। ददामि बुद्धियोगं तं येन मामुपयान्ति ते ॥" इति, "प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः" इति च। अतः साक्षात्काररूपा स्मृतिः स्मर्यमाणात्यर्थप्रियत्वेन स्वयमप्यत्यर्थप्रिया यस्य, स एव परेणाऽऽत्मना वरणीयो भवतीति तेनैव लभ्यते पर आत्मेत्युक्तं भवति।

एवंरूपा ध्रुवानुस्मृतिरेव भक्तिशब्देनाभिधीयते; उपासनपर्यायत्वाद्भक्तिशब्दस्य।

अत एव आत्मानं प्राप्नोति=रमते स्वात्मनि। प्रसेदुस्तस्यापवर्गोऽथवा इतहेतुभूतबुद्धियोगादि प्रदानेऽन्येषामिव परस्य पेक्षत्वं न स्यादिति व्यक्त्यै स्वयमेवेत्युक्तम्। उपासितुरचिन्त्यमेव हितमाचरतीति वा सूच्यम्। भगवतैव="यमेवैष वृणुते" इति वरणकर्तृतया श्रुतेनैव। एतेन स्वात्मसंज्ञतया परमाप्तत्वमपि व्यज्यते। सततयुक्तानाम्=सततयोगमाशंसमानानाम्। "आशंसायां भूतवच्च" इति क्तः। सततयुक्तानां भजताम् इत्यनेनैवोपासकबुद्धेः प्रीतिरूपत्वस्य सिद्धत्वात् प्रीतिपूर्वकं ददमीत्यन्वयः। उपचारापचाराभ्यां प्रीतिद्वेषौ परस्य न।

नि मत्तशक्त्या तु फल तयो रति(?) नयोज्झितः[2](तम् ?) ॥ ३१२ ॥
वरणं चोक्तिनीषा चावोनिनीषा च शासितुः। श्रुत्वाऽनिषिद्धा न तत्तत्कर्मफलार्पणात् ॥

कस्यचिद्वरणीयतानिदाने प्रियतमत्वे श्रुत्यभिप्रेतः सततयुक्त इत्युक्तश्च हेतुस्तत्रैव विवृत इत्याह प्रियो हीति। अत्यर्थम्=अत्यभिधेयम्। मयाऽपि दुर्वचमिति भावः। अत्र वरण मयं प्राप्नुयादिति अमोघसङ्कल्पः। अत्र लभ्यत्वं चास्य "विवृणुते" इत्यनेनाभिप्रेतं निवृत्तप्रतिबन्धनिरुपाधिकानुभव-विषयत्वमिति अर्थादुक्तं भवति। अत्र सोपबृंहणयाऽपि श्रुत्या ध्रुवानुस्मृतेः प्रीत्यात्मकतया विशेषित-त्वमनभिव्यक्तं व्यनक्ति अत इति। लोकानुसारात्, उपात्तश्रुतिस्मृतितात्पर्यवृत्त्या चेत्यर्थः। अत्यर्थ प्रिया—अतिमात्रानुकूल्यस्वभावतया स्वयमेव भासमाना, अयुक्तदशायामपि, "या प्रीतिरविवेकानाम्" इति न्यायेन प्रीतिरूपज्ञानान्तरेण विषयीकृता। विषयविशेषप्रयुक्त हि सर्वत्र विषयिणो ज्ञानस्य प्रीति-रूपत्वं प्रीतिविषयत्वं चेत्यभिप्रायेण स्मर्यमाणात्यर्थप्रियत्वोक्तिः। वरणविवरणयोः कर्तुः तत्कर्मणो वरणीयात आर्थी प्राकरणिकी च व्यावृत्तिः परेणेति दर्शिता।

ननु "शेमुषी भक्तिरूपा" इति पुराणादिप्रसिद्धं भक्तेरुपायत्वं प्रक्रान्तम्। "ध्यानोपासनादिशब्द-वाच्यम्" इत्यत्र आदिशब्देन भक्तिशब्दोऽपि विवक्षितः। उपात्तासु श्रुतिषु तु न तद्धीरस्ति। अतः कथमविरोधः? तत्राह एवंरूपेति। उक्तशृङ्खलाक्रमेण विशेषितेत्यर्थः। प्रतिज्ञामात्रमेतदित्यत्राह उपासनेति। ध्रुवानुस्मृतेः प्रीतिरूपत्वेन उपासनशब्दवाच्यतया च विशेषणात्, "स्नेहपूर्वमनुध्यानं भक्तिरित्यभिधीयते"

तद्व्याख्यानमिति तथा पाठो द्रष्टव्यः। 1 इति=इत्येतत् नयोज्झितम् रात्रिसत्रादिन्यायापेत-मित्यर्थः। पुंलिंगपाठो न रम्यः। नयो जित इति, दित इति वा स्यात्। तदा इति नयः—एष मीमांसातर्कः, खण्डितः, ददामीति गीतया विवृणुत इति श्रुत्या चेत्यर्थः।

**अत एव श्रुतिस्मृतिभिरेवमभिधीयते-"तमेव विदित्वाऽति मृत्युमेति", "तमेवं विद्वानमृत इह भवति नान्यः पन्था अयनाय विद्यते ।", "नाहं वेदैर्न तपसा न दानेन न चेज्यया । शक्य एवंविधो द्रष्टुं दृष्टवानसि मां यथा ॥ भक्त्या त्वनन्यया शक्यः अहमेवंविधोऽर्जुन । ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परंतप ॥", "पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया ।" इति ।**

---

इति तल्लक्षणानुरोधात्, "सेवा [1]भक्तिरुपास्तिः" इति पर्यायपाठात् शब्दभेदेऽप्यैकार्थ्यसिद्धौ विधेयभेदाभावान्न विरोधप्रसङ्ग इति भावः । वेदनादिशब्दानां भक्तिपर्यवसायित्वमुपबृंहणोपबृंहणीययोः मिथः प्रतिपन्नैकत्वप्रसङ्गरूपयुक्त्यन्तरेण दृढीकरोतीत्याह **अत इति** । इदं फलरूपहेतुपरम् । वेदनोपासनादिशब्दैर्भक्तेरेवोक्तत्वादित्यर्थः । अन्यथा श्रुतीनामिव श्रुतिस्मृत्योरपि मिथो विरोधः स्यादिति अभिप्रायवान् **एवकारः** । **एवम्** श्रुतौ वेदनव्यतिरिक्तः स्मृतौ तु भक्तिव्यतिरिक्तः चरमोपायो नास्तीत्युक्तप्रकारेणेति यावत् ।

**(श्वेताश्वतरोपनिषदः परमपुरुषविषयत्वम्)**

ननु, "तमेव विदित्वाऽति मृत्युमेति" इति श्वेताश्वतरवाक्यं शिवादिशब्दसमभिव्याहारात् रुद्रविषयम्; "तमेवं विद्वान्" इति तु महापुरुषविषयम्; तत्र चात्र च "नान्यः पन्था अयनाय" इत्याम्नातम् । अतो व्याघातः-इति मन्दशङ्कापनुत्त्यै तदुभयवाक्योपादानम् । अयं भावः —"वेदाहमेतं पुरुषं महान्तम्" इत्याद्यैः पूर्ववाक्यैः "महान् प्रभुर्वै पुरुषः सत्त्वस्यैष प्रवर्तकः", सहस्रशीर्षा पुरुषः" इत्याद्यैरुत्तरवाक्यैश्च सत्त्वप्रवर्तकस्यानन्यपरपुरुषसूक्तोदितस्य महापुरुषस्य शब्दतोऽर्थतश्च प्रत्यभिज्ञया **शिवमहेश्वरा**दिशब्दानां तत्परत्वावश्यम्भावेन ऐन्द्रीन्यायेन रूढिपरित्यागस्य न्याय्यत्वात्, "सर्वः शर्वः शिवः स्थाणुः" इति भगवन्नाम[सु?] पाठात्, शिवशब्दस्य च मङ्गल्यादौ [च] रूढत्वात्, प्रसिद्धप्रकर्षस्यालोक्तरीत्या नैष्फल्यात्, अनन्यथासिद्धनारायणानुवाकसौबालमहोपनिषदादिप्राबल्यात् "शाश्वतं शिवमच्युतम्" इतिवत् महापुरुषविषयत्वावश्यम्भावात्, "तस्मात्सर्वगतश्शिवः" इत्यस्याऽऽरम्भे "सर्वाननशिरोग्रीवः सर्वभूतगुहाशयः" इति सहस्रशीर्षत्वाद्यप्रत्यभिज्ञानात्, "सर्वव्यापी च भगवान्" इति भगवच्छब्दस्य महापुरुषरूढत्वस्थापनात्, [2]निगमनस्य प्रस्तुतशेषतया तदविरोधेन नेयत्वाच्च विगीतं पुरुषसूक्तोक्तविषयमेवेति ।

अत्र **नाहमित्यादेः** वेदतपःप्रभृतीनां साक्षादुपायत्वाभावे तात्पर्यमिति न [3]तद्विरोधः । "भक्त्या त्वनन्यया" इत्यादेश्च पर्वभेदवत्तैव भक्तिरूपज्ञानेन ज्ञानान्तरादेः साध्यत्वे तात्पर्यात् नाऽऽश्रमाश्रयादिप्रसङ्गः । "पुरुषः स परः" इत्यस्योपादानस्य न पूर्वेण कृतकरत्वम्; तदप्रतिपन्नस्थापनात् । अयं खल्विहाभिप्रायः—"तमेव विद्वान्" इत्यत्र[4] "आदित्यवर्णं तमसः परस्तात्" इति यत् पूर्ववाक्ये श्रुतम्, तदेव "अणोरणीयांसमनुस्मरेद्यः" इत्यारभ्य अचिन्त्यरूपत्वादित्यवर्णत्वोक्त्या प्रत्यभिज्ञापितम् । "धाता पुरस्तात्" इत्युक्त

---

1 भक्तिरुपास्तिरिति । आप्रयाणविषयध्याने उपासेः प्रयोगात् उपासनेऽत्र प्रीतिरूपत्वं सिद्धम् । प्रियतमत्वादिलाभस्तु वरणविषयश्रुत्या । 2 निगमनस्य = तस्मात् सर्वगतः शिवः इत्यस्य ।

3 तद्विरोध इति । वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसा इत्यादिविरोधः ।

4 इत्यत्रेति । इति पुरुषसूक्ते इत्यर्थः ।

**एवंरूपाया ध्रुवानुस्मृतेः साधनानि यज्ञादिकर्माणीति, "यज्ञादिश्रुतेरश्ववत्" इत्यभिधास्यते ।**

---

च "सर्वस्य धातारम्" इति दर्शितम् । अतः श्रुतौ **विदिनोक्तमिहानुस्मरतिना** विवृतम् । "भक्त्या युक्तः" इति चानन्तरं विशेष्यते । अतो भक्तिरूपा ध्रुवानुस्मृतिः श्रुतौ विदिना विधीयत इति गम्यते । यद्यप्यत्र[1] यद्वृत्तावृत्तिवशात्पुरुषार्थान्तरसाधनविषयत्वमेव युक्तम् ; तथापि समानन्यायतया मोक्षार्थे वदेरपि भक्तिविश्रमसिद्धिः स्वीकार्या । तत्रैव च "पुरुषः स परः" इत्यादिना मोक्षार्थश्रौतविदेरपि तद्विशेषपरत्वं व्यञ्जयति । "यमेवैष वृणुते तेन लभ्यः" इति श्रुतिसम्पुटनिगूढं चात्रोद्घाटितम् । अत्र हि ज्ञानिनां प्राप्यान्तरवत् प्रापकान्तरमपि [2]सविशेषणोक्त्या व्युदस्तम् । श्रुत्युक्तप्रत्यभिज्ञया प्राप्यैक्यवत् उपायैक्यमपि हि युक्तम् । अतो विदिस्थाने ध्यायत्युपासिवत् भजतिरप्यत्र विशेषकतया प्रयुक्तः ।

**पुंसूक्तभगवद्गीते प्रमाणतमसंमते । न मिथो बाधमर्हेतां नैकार्थ्ये स्मृत्यनादरः ॥२१४॥ इति**

ननु, "भक्त्या मामभिजानाति" इत्यादौ भक्तिसाध्येन ज्ञानेन परप्राप्तिर्गीता ॥ मैवम् ; तत्रापि, "ततो मां विशते" इति भक्तेरेव प्राप्तिहेतुत्वेन परामर्शात् ; अन्यथा ततः इत्यस्य नैरर्थ्यात् । अतः "भक्त्या प्रवेष्टुम्" इत्युक्तै(क्त्यै)कार्थ्यम् ॥

(कर्मणां विविदिषासाधनत्वेनोपयोग इति पक्षस्य निरासः)

ननु उपात्तश्रुतिस्मृतिस्वारस्यात् वेदानुवचनयज्ञादिनिपेक्षा भक्तिरेव मुक्तिसाधनमस्तु ; ततश्च न कर्मविचारसूत्रत्वं सिध्येदित्यत्राह **एवंरूपाया** इति । सुकृतसापेक्षध्यानादिभक्त्यन्तपर्वविशेषवत्तया श्रुतिस्मृतिसूत्रवाक्यसिद्धाया इत्यर्थः । श्रुतिसूत्रयोः विविदिषाविषयत्वं प्रकरणतोऽर्थतश्च प्रत्यूढमित्यभिप्रायेण ध्रुवानुस्मृतेरित्युक्तम् । **अभिधास्यते** । सूत्रकृता । अस्माभिश्च समर्थयिष्यत इति भावः । विविदिषन्ति इत्यस्य सन्निधौ, "मनसैवानुद्रष्टव्यम्" इति विशदवेदनं विहितम् । "एतमेव विदित्वा मुनिर्भवति" इति स्तुतम् । अतो विधिस्तुतिविषयस्यैव वेदनस्यात्र [3]विध्यन्तरा(विध्यन्ता ?)काङ्क्षा ; न नु तदुभयरहिताया विविदिषायाः । विविदिषासाधनत्वेन विधानं च दुर्वचम् । न हि, 'यागेन स्वर्गं जिगमिषति' इत्युक्ते यागस्य जिगमिषासाधनत्वं स्यात् । इह च वेदनेच्छाविरहे विविदिषाकामत्वस्यासिद्धेः, तत्सम्भवे तदुपायानपेक्षणम् । वेदनेच्छया च विविदिषाकामना, तया यज्ञाद्यनुष्ठानं, तेन विविदिषोत्पत्तिरिति चक्रकं स्यात् । अत्र पर्वसङ्कोचेन आत्माश्रयम्, अन्योन्याश्रयं च केचिदूचुः । न चात्राज्ञातसुकृतनीतिः ; सावधानकृच्छ्रसाध्यत्वात् यज्ञादेः । अतः, 'असिना जिघांसति' इत्यादिवद्विधानुपपत्त्या नेच्छासाधनत्वेनान्वयः ।

**साध्येच्छया विना क्वापि साधनेच्छा न सिध्यति ।**
**अतो विविदिषार्थत्वायोगात् विश्य(ध)र्थता त्विह ॥ २१५ ॥**

---

1 ननु कर्विपुराणमिति श्लोक ऐश्वर्यार्थिविषयः इति यच्छब्दाऽऽवृत्त्यादि निरीक्ष्य भाष्यचन्द्रिकयोरुक्तम् । कथं तस्य मुक्त्यर्थं भक्तिस्वरूपोपपादकत्वमित्यत्राह यद्यपीति । यद्वृत्तं यच्छब्दः । 2 सविशेषणोक्त्या = 'स परः, 'अनन्यया' इत्याद्युक्त्या । 3 इतिकर्तव्यतारूपार्थे विध्यन्तराकाङ्क्षेति मीमांसायाम् । अतस्तथा पठित्वा अङ्गं यज्ञादि तदर्थतया ग्राह्यम् ।

**यद्यपि, "विविदिषन्ति" इति यज्ञादयो विविदिषोत्पत्तौ विनियुज्यन्ते, तथाऽपि तस्यैव वेदनस्य ध्यानरूपस्याहरहरनुष्ठीयमानस्य अभ्यासाधेयातिशयस्य आप्रयाणात् अनुवर्तमानस्य ब्रह्म-**

---

**अपवर्गाभिलाषात् तत्साधनेच्छाऽपि सिध्यति। अतो वेदनकामस्य युक्त(क्तः?) तत्साधने विधिः [1]भक्तिरत्र फलत्वेन प्रकृत्या परिमृश्यते । अधिकारतया ख्याप्या तदिच्छा प्रत्ययेन तु ॥**

ननु अदृष्टस्य सांसारिकसर्वकार्यहेतुत्वमेव एष्टव्यम्; अन्यथा विषमसुखदुःखादिहेतुभूतविचित्रे-च्छोत्पत्तेः, कदाचित् तदनुत्पत्तेश्चायोगात्। अत इच्छामात्रस्य साध्यत्वे वेदनेच्छाया अपि तथात्वं(त्वात्?) तत्खण्डनं सर्वतन्त्रविरुद्धं स्यात् ॥ अतैवं प्रत्युक्तं **श्रुतप्रकाशिकायाम्**, "भोगादृष्टोद्बोधितपूर्ववासना-सचिवात् विषयवैलक्षण्यज्ञानात् इच्छोत्पत्त्युपपत्तेः" इति ।

**भोगार्थेन ह्यदृष्टेन पुम्भिरप्रार्थितान्यपि । अन्तरस्थानि कार्याणि स्युः फलप्रदबुद्धितः ॥**

तदिह भक्तिरूपब्रह्मवेदनकामः शान्त्यादिसहितैः यज्ञादिभिः तत् भावयेदिति प्रयोगविधिः ।

ननु भक्त्यर्थोपायविधावपि त्वदुक्तचक्रकादिप्रसङ्गः स्यात् ॥ न स्यात् । एवं भक्तेरुपचयम् अनुवृत्तिं चापेक्ष्य तद्विधानात् । वेदनसाधनविधावपि न विरोधः; सामान्यतो विदितेऽपि विशेषतो बुभुत्सया प्रवृत्तेः । न च विशेषेऽपि विदिताविदितवि(?)कल्प[2]नुपपत्तिरिति वाच्यम्; तत्रापि बुभुत्साप्रश्नादिघटिते वादादौ प्रवृत्तेः; अन्यथा पामरपरीक्षकविरोधात् । अथैवमुत्पन्नविविदिषस्य तदनुवृत्तिकामनया तदुपायविधिरित्युच्येत; तत्रापि[3] फलवैषम्याभावात् । [4]तदन्वारोहात् परोक्तवेदनस्य प्रागेव निरस्तत्वात् स्वोक्तब्रह्माकारविशिष्टवेदनेच्छानुवृत्त्यै यावज्जीवं कर्मणोऽनुष्ठेयत्वमाह **यद्यपीति** । परोक्तविविदिषामात्रसाधनत्वे त्वन्वारोह इति पक्षे तु विविदिषानुवृत्त्या प्रत्युत्तरं [5]कथञ्चिन्नेयम् । **तस्यैव**—विविदिषागोचरस्यैव । न ह्येतद्वेदनं यागादिवत् अपूर्वादिवद्वा सकृदुत्पन्नं सान्तरं वा साधनमित्यभिप्रायेण **ध्यानरूपत्वोक्तिः** । **अहरहरित्यादिकं** निरन्तरस्याप्येकाहसाध्यत्वं दर्शपूर्णमासादिवत् दिवसान्तरितसाध्यत्वं च व्यवच्छिनत्ति । आप्रयाणादनुवृत्तिवचनं संवत्सराद्यवधिकप्रतिदिनकर्तव्यत्व-व्युदासार्थम् । **अभ्यासाधेयातिशयस्येत्यनेन** दृष्टोपकारश्चास्तीति व्यज्यते । **तदुत्पत्तये**—

---

1 **ननु सिद्धान्तेऽपि ब्रह्मवेदनकामनायाः ब्रह्मवेदनज्ञानाधीनत्वात् तस्य च ब्रह्मविषयकत्वेन ब्रह्मवेदनस्य प्रागेव सिद्धेः कथं सा कामनेत्यत्राह भक्तिरिति। विध्यर्थो न केवलवेदनम्, किं तु भक्तिरिति न दोष इति। सम्प्रयोगफलयाह अधिकारेति। भक्तिरित्यादिकारिकेयं भोगार्थेनेति कारिकानन्तरं तदिहेति वाक्यारम्भात् पूर्वं भवितुमर्हति।** 2 **इच्छोद्देशेन कर्मकरणेऽपीच्छा भवतीति समाधानम् अत्रैवमिति। विदितोऽविदितो वा विशेषो बुभुत्स्यते इति विकल्पस्य अनुपपत्तिः सुवचेति न वाच्यम्। बुभुत्सायाः प्रसिद्धत्वात् अस्य विकल्पस्यैवानुपपत्तेरित्यर्थः। विकल्पेत्यत्र कल्पेति पाठः श्रेयान्। अन्यथेति । पामरपरीक्षकोभयसंमतिविरोधः स्यादित्यर्थः।** 3 **तत्रापीति। सर्वमिदं सर्वापेक्षाधिकरणसारावली अस्मद्व्याख्याने च द्रष्टव्यम्।** 4 **तदन्वारोहात्। इच्छानुवृत्त्यर्थं कर्मविधिरित्यन्वारोहेणेत्यर्थः। अस्य आहेत्यनान्वयः। तदन्वारोहेऽपि न तदिष्टं वेदनं विवक्षितम्। किं तु स्वाभिमतं विशिष्टवेदनमेवेत्याह परोक्तेति।** 5 **कथञ्चिदिति। अनुवृत्ते-स्तत्प्रमुखत्वे कथं तद्दिष्टिः। ध्याने ब्रह्मप्राप्तिसाधनत्वं ह्यत्रोक्तम्। तत् परेषामनिष्टमिति भावः।**

प्राप्तिसाधनत्वात् तदुत्पत्तये सर्वाण्याश्रमकर्माणि यावज्जीवमनुष्ठेयानि। वक्ष्यति च, 'आप्रयाणात् तत्रापि हि दृष्टम्', "अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात्", "सहकारित्वेन च" इत्यादिषु ।

वाक्यकारश्च ध्रुवानुस्मृतेर्विवेकादिभ्य एव निष्पत्तिमाह, "तल्लब्धिर्विवेकविमोकाभ्यासक्रियाकल्याणानवसादानुद्धर्षेभ्यः सम्भवान्निर्वचनाच्च" इति । विवेकादीनां स्वरूपं

---

अनुवृत्तेरिष्टतया यज्ञादिसाधनत्वेनाभिमतायां विविदिषायां पर्यवसानमिति पत्तय इत्यर्थः । सर्वाणि इत्यनेन् यत्र हि विभज्यम् । यावज्जीवम् इत्यनेन जन्मान्तरशतेऽपि यदेः प्रयुक्तस्योपालम्भः । विविदिषायां जातायामपि मध्ये कर्मणां त्यागो न युक्तः; विविदिषाविच्छेदे वेदनविच्छेदप्रसङ्गात् । न हि सकृदुत्पन्नया विविदिषया वेदनानुवृत्तिः सिध्येत्, सकृद्बुभुक्षयेव भोजनानुवृत्तिः । प्राचीनसुकृतमूलानुवृत्तिसम्भवेऽपि पाक्षिकविघ्नशान्त्यै प्रवर्तितव्यमिति भावः । पूर्वं वेदनस्य ध्यानोपासनादिरूपत्वे सूत्रं दर्शितम्; अथ अहरहः आप्रयाणादनुवर्तनीयत्वे तद्वदेव तदङ्गकर्मानुवृत्तौ च सूत्राणि सन्तीत्याह वक्ष्यति चेति । सूत्रैरेव तत्तद्विषयवाक्यान्यपि सूच्यन्ते । एतेन श्लोकानभ्युपगमे सूत्रादिविरोधो दृढीकृतः । "आप्रयाणात् तत्रापि हि दृष्टम्" इत्यनेनैव कर्मणो यावदायुरनुष्ठेयत्वं सिद्धम्; "स खल्वेवं वर्तयन् यावदायुषम्" इति वाक्यस्य दृष्टमित्यनेन विवक्षितत्वात् । तत्र च 'कुटुम्बे शुचौ देशे' इत्याद्युक्तधर्मानुवृत्त एवं वर्तयन् इत्यत्रानूदितत्वात् । 'यावज्जीवमग्निहोत्रं जुहोति' इति नियतस्यापि विद्याङ्गत्वज्ञापनाय अग्निहोत्रादीति सूत्रोपादानम् । विहितत्वाच्चाश्रमकर्मापी त्याश्रमाङ्गतयोक्तस्य कथं विद्यार्थत्वमित्यत्र विनियोगपृथक्त्वव्यञ्जनाय सहकारित्वेन चेति सूत्रग्रहणम् । आदिशब्देन "सर्वथापि त एवोभयलिङ्गात्" इति कर्मणां विद्याश्रमाङ्गत्वे तन्त्रानुष्ठानसूचकसूत्रसङ्ग्रहः ।

(वाक्यकारोक्तविवेकादिसाधनसप्तकम्)

अथ "विरोधादप्रमाणत्वात्" इत्यादि(विरोधाप्रमाणत्वादि)पूर्वपक्षहेतून् सूत्रकाराभिप्रायविदां वचसाऽपि परिहरति वाक्येति । एवकारेण शब्दादेः यज्ञादेश्च विरोधाभावः स्वोक्तसंवादश्च ख्याप्यते । अथवा न साधनचतुष्टयेन, न च विवेकादिव्यतिक्रमेण कर्ममात्रेण शमादिमात्रेण चेत्यर्थः ।

**निषिद्धकाम्यव्यर्थेभ्यो निवृत्तस्य शमादिभिः । स्वाश्रमोचितविद्याङ्गप्रवृत्तिर्न विरुध्यते ॥**

अविरोधेन सम्भूय साधनत्वव्यक्त्यै वाक्यमुपादत्ते—तल्लब्धिरिति । अत्र तच्छब्दार्थः, ध्रुवानुस्मृतेः इत्यनेन दर्शितः । "उपासनं स्यात् ध्रुवानुस्मृतिः" इति तत्र प्रकृतं हि परामृश्यते । विवेकादीनां सप्तानामेवास्मिन् कार्ये अन्योन्यसापेक्षस्वरूपेणेतरेतरयोगेन सम[ुच्चयप्रदर्शनात्?] प्रवृत्ति-निवृत्तिरूपाणामाश्रमभेदेन व्यवस्था शक्येत्यपि कतिपयशङ्का च(?) व्युदस्ता । सम्भवात्—एकत्र [निवेश?]योग्यतया विरोधप्रसङ्गाभावात् । निर्वचनात्—अतीन्द्रियेऽर्थे निश्चायकमानतया निरुक्तत्वात् वचनात् । युक्तिसहितादागमादिति यावत् । इह विद्यायाः कर्मजन्यत्वसिद्ध्यर्थं तयोपात्ताः विवेकादयः के, कथं च तेषामविरोध इत्यत्र वाक्यकारेणैव व्याख्यातत्वमाह विवेकादीनामिति । स्वरूपं च—उद्दिष्टानां मिथो व्यावर्तकरूपं चेत्यर्थः ।

चाह " जात्याश्रयनिमित्तादुष्टादन्नात् कायशुद्धिर्विवेकः" इति, । अत्र निर्वचनम् "आहारशुद्धौ सत्त्वशुद्धिः सत्त्वशुद्धौ ध्रुवा स्मृतिः" इति । "विमोकः कामानभिष्वङ्गः" इति । "शान्त उपासीत" इति निर्वचनम् । "आरम्भणसंशीलनं पुनःपुनरभ्यासः" इति । निर्वचनं च स्मार्तमुदाहृतं भाष्यकारेण, "सदा तद्भावभावितः" इति । "पञ्चमहायज्ञाद्यनुष्ठानं शक्तितः क्रियाः" इति । निर्वचनम् – "क्रियावानेष ब्रह्मविदां वरिष्ठः, 'तमेतं वेदानुवचनेन ब्राह्मणा

जातिदुष्ट—लशुनादि आश्रयदुष्ट – शूद्रान्नादि । निमित्तदुष्ट केशयुक्तम् । तादृशदोषराहित्येनाशुद्धेभ्यो विविक्तादन्नात् सेन्द्रियस्य देहस्य रजस्तमोऽभिभवरहित-सत्त्वोन्मेषापादनेन शुद्धितः [अशुद्धतः?] पृथक्करणं विवेक इति प्रदर्शकं वाक्यमाह जातीति । अत्र निर्वचनमिति भाष्योक्तिः आहारशुद्धौ सत्त्वशुद्धिः इति निर्वचने सत्त्वमन्तःकरणं सत्त्वगुणो वा । तस्य शोधनीयसर्वो लक्षणतया वाक्ये कायोक्तः । साऽपि करणवर्गो लक्षिका । "आयुःसत्त्व" इत्यादिभिः शुद्धशुद्धाहारश्च गीतः ।

विमोकशब्दस्यात्र, "कामः क्रोधस्तथा लोभः" इत्युक्तत्याज्यवर्गानुपश्लेषपरतया कामानभिष्वङ्ग इति मूलघटोक्तिरित्यभिप्रायः । कामोऽत्र तीव्रतम[:]सङ्गजन्य ; "सङ्गात् सञ्जायते कामः" इत्युक्तेः । तेनाभिष्वङ्गोऽनुवृत्तसङ्गग्रहणम् । तदभावे, "कामात् क्रोधोऽभिजायते" इत्युक्तपरम्परानिवृत्तिः । "शान्त उपासीत" इत्यत्र शान्तशब्दः करणव्यापारनिवृत्तिमुखेन कामादिराहित्यपरः ।

आरम्भणम् —योगमारुरुक्षोः [1]चित्तालम्बनं शुभाश्रयरूपम् । विवरणे तु, "ज्ञानालम्बनमुपास्यम्" इत्युक्तम् । तस्य संशीलनम् अनुकूलतया शीलनम् । पुनः पुनरित्येतत् सङ्करकरणात्, "[2]व्यापृतेनापि मनसा" इत्यादिस्मृत्या चोत्थानकाले योज्यम् । अत एव नात्माश्रयशङ्का । इदं च योगानुगुणवासनाचयार्थं कषायापाकरणार्थं च । 'बाल्यं च पाण्डित्यं च निर्विद्याथ मुनिः" इति श्रौतनिर्वचनस्यास्पष्टार्थतया तदुपबृंहणं दर्शितमित्यभिप्रायेण स्मार्तोक्तिः । अत्र भाष्यकारो ब्रह्मनन्दिवाक्यव्याख्याता द्रमिडाचार्यः । तेनान्येषु श्रुतिरुदाहृता, अत्र तु स्मृतिः । अथवा अन्यत्र वाक्यकारेणैव श्रुतिरुदाहृता ; अत्र तु भाष्यकारेणैव स्मृतिरिति । यद्यपि, "यं यं वापि स्मरन्" इति प्रकरणात्, 'सदा' इत्यादिकं सामान्यम् ; तथापि, "तस्मात् सर्वेषु कालेषु मामनुस्मर" इत्युत्तरवाक्यानुसारेण प्रकृतार्थत्वात् तद्ग्रहः ।

पञ्चमहायज्ञोपादानं, 'गृहस्थोऽपि विमुच्यते" इति स्मृतिसूचनार्थम् । आदिशब्देनाश्रमान्तरधर्माणामपि सङ्ग्रहः । यद्यपि काम्ये सकलाङ्गोपसंहारः प्रसक्तः—तथापि अत्र वचनात् यथाशक्त्यनुष्ठानं पर्याप्तमित्यभिप्रायेण शक्तितः इत्युक्तम् । "सिद्धिं कुर्वन् यथाशक्ति प्राप्नोति परमां गतिम्" इति हि स्मर्यते । "क्रियावानेष ब्रह्मविदां वरिष्ठः" इत्यत्र सन्नयोगभावेन कर्मणां विद्यान्वयस्फोरणात् ।

1 आरभ्यते = आलभ्यते = स्पृश्यते विषयीक्रियते इत्यारम्भणम् । रेफानुरागात् णत्वम् ।
2 'व्यापृतेनापि मनसा विष्णुः सेव्योऽन्तराऽन्तरा । मेथीबद्धा भ्राम्यमाणो ग्रासग्रासं करोति गौः ।'

**विविदिषन्ति यज्ञेन दानेन तपसानाशकेन" इति च । "सत्यार्जवदया दानाहिंसानभिध्याः**

"विविदिषन्ति" इत्येतदपि नियमितम् । इदं च वाक्यं क्रियाया अङ्गत्वेन विद्यापौष्कल्यहेतुत्वपरम् ; न तु निष्क्रियब्रह्मविरुद्धभावसूचकम् ; यावज्जीवं क्रियानुवृत्तेरुक्तत्वात् । मत्वर्थीयस्य भूमपरतया विधुरादि-ब्रह्मविद्यावृत्तिपरं वा । तेषां हि वर्णधर्ममात्रयोगित्वादवरत्वम्, "अतस्त्वितरज्ज्यायो लिङ्गाच्च" इति सूत्रसिद्धम् । अत्र "मन्त्रेषु कर्माणि" इत्यारभ्य "तान्याचरत नियतं सत्यकामाः" इति श्रुतिरप्यनु-सन्धेया । क्रियाशब्दस्य चित्तसमाधानादिमात्रव्यावृत्त्यै **तमेतम्** इत्यादि उपात्तम् । **अनाशकेन**—अनशनेन । अत्र गोबलीवर्दनयात् तपश्शब्दसङ्कोचः । यद्वा नाशकादन्येनेति । यज्ञादपि भोगार्थं चेत्-संसारात्मकनाशपदमेव श्रुत्यादिसिद्धम् ।

भूतहितं यथार्थं च वाक्यं **सत्यम्** । **आर्जवं** करणत्रयस्यैकरूप्यम् । **दया**—स्वार्थनिरपेक्षा परदुःखनिराचिकीर्षा । **दानं** न्यायसिद्धद्रव्यस्य यथाविधि पात्रसात्करणम् । तेन लोभनिवृत्तिर्विवक्ष्यते । 'दैप् शोधने' इति धातो स्वपक्षादिशोधनं वा । 'दो अवखण्डने' इत्यत्र पराहङ्कारखण्डनं वा; "निगृह्णीयात् यथाशक्ति(यथाशक्ति निगृह्णीयात्) देवतागुरुनिन्दकान्" इति स्मृतेः । "न विगृह्य कथां कुर्यात्" इत्यस्य कामकारविषयत्वात् अशास्त्रीयप्राणिपीडावर्जनमत्र **अहिंसा;** "अहिंसन् सर्वा(र्व)भूतान्यन्यत्र तीर्थेभ्यः" इति स्थापनात् । **अभिध्या**—परप्रातिकूल्यचिन्ता ; अभिचारादौ हि **अभेः** प्रातिकूल्यमर्थः (अभिः प्रातिकूल्यार्थः) । [1]परकृतद्रोहे निरन्तरस्मृतिर्वा वितथाभिनिवेशो वा, परस्वे प्राप्यत्वधीर्वा । तन्निवृत्ति-**रनभिध्या** । **[सत्येनेति । ?]** [2]एवं कतिपयोपादानम् आर्जवदयादिसहपठितानामन्येषामप्युपलक्षणम् । **इत्यादीत्यनेन**, "अमानित्वमदम्भित्वम्", "दया सर्वेषु भूतेषु, क्षान्तिरनसूया" इत्यादेः संग्रहः ।

**अनवसादोऽर्थात्** सिध्येदिति कृत्वा सहेतुकं[3] तत्प्रतियोगिस्वरूपविषयं वाक्यमुपादत्ते

---

1 प्रातिकूल्यमित्युक्तं विवृणोति परेति । अतः प्रतिकूल्यमिति व्यस्तपाठः साधीयान् ।

2 भाष्ये सत्येनेत्यादि विरजो ब्रह्मलोक इत्यन्तं नैकं श्रुतिवाक्यम् । टीकाग्रन्थो विमृश्यः । सत्येनेति मुण्डके; तेषामेवेति तु प्रश्ने । तत्रापि, 'तेषामेवैष विरजो ब्रह्मलोकः' इत्येवमानुपूर्वी न भवति । तेषामेवैष इति बुभुक्षुविषयकं वाक्यम्, विरजो ब्रह्मलोक इति पदघटितं तत्रैवोपरिस्थितं मुमुक्षुविषयं वाक्यान्तरम् । एवं ह्यानुपूर्वी, "ते मिथुनमुत्पादयन्ते ; तेषामेवैष ब्रह्मलोकः ॥ येषां तपो ब्रह्मचर्यं येषु सत्यं प्रतिष्ठितं तेषामसौ विरजो ब्रह्मलोकः । न येषु जिह्ममनृतं न माया च" इति । पूर्णमिदं पूर्वाचार्योपात्तम् । अत्र सत्यार्जवादिषु यद्विषये इदं निर्वचनं न भवेत्, तत्रान्यदपि तत्र तैरुदाहृतमेव । श्रीभाष्ये तु विस्तरभिया खण्डशोऽनूद्य सर्वाभिप्रायेण इत्यादीत्युक्तम् । तेनोपात्तवाक्यशेष—वाक्यान्तरसंग्रह इष्टः । एतन्निर्वचनविषयकत्वादिह एवमित्यादिग्रन्थस्य, 'सत्येनेति' इति प्रतीकधारणमावश्यकम् । अमानित्वमित्यादिकं टीकोपात्तमेव पूर्वैरप्युपात्तमिति न निश्चयः । इदं वा एतत्तुल्यार्थं वा निर्वचनं तत्रत्यमत्र इत्यादीति भाष्ये विवक्षितमित्याशयेन तदुदाहरणम् ।

3 सहेतुकमिति सहेतुकं यथा तथा प्रतियोगिविषयकमित्यर्थः । सहेतुकप्रतियोगीति समस्ते-नोपात्तवाक्यशेष-वाक्यान्तर संग्रह इष्टः पाठो वा ।

कल्याणानि" इति । निर्वचनम्—"सत्येन लभ्यः", "तेषामेवैष........विरजो ब्रह्मलोकः" इत्यादि । "देशकालवैगुण्यात् शोकवस्त्वाद्यनुस्मृतेश्च तज्जं दैन्यमभास्वरत्वं मनसः अवसादः" इति । तद्विपर्ययोऽनवसादः । निर्वचनम्—"नायमात्मा बलहीनेन लभ्यः" इति । "तद्विपर्ययजा तुष्टिरुद्धर्षः" इति । तद्विपर्ययोऽनुद्धर्षः । अतिसन्तोषश्च विरोधीत्यर्थः । निर्वचनमपि, "शान्तो दान्तः" इति । एवं नियमयुक्तस्याऽऽश्रमविहितकर्मानुष्ठानेनैव विद्यानिष्पत्तिरित्युक्तं भवति ।

---

**देशे**ति । शोकनिमित्तं वस्तु **शोकवस्तु ;** शोचत्यनेनेति करणव्युत्पत्त्या वा **शोक**शब्दः । **आदि**शब्दो भीतिहेतुपरः । भूतभाव्यनिष्टगोचरधीरूपे दुःखे शोकभये । **वैगुण्यात् अनुस्मृतेश्च** इत्यनयोः **मनसोऽभास्वरत्वम्** इत्यनेनान्वयः । **अभास्वरत्वं** भास्वरत्वाभावः तद्विरोधि वा । तत्स्वरूपाभिव्यक्त्यै तद्विवरणवाक्यस्याकाङ्क्षायां मध्ये **तज्जं दैन्य**मिति वाक्यान्तरम् । तस्यां(स्याः?) जातं तस्मिन्[1]=मनसि वा जातमभास्वरत्वं दैन्यम् ; उपयुक्तप्रकाशनाशकत्वमित्यर्थः । यद्वा मनसो यदभास्वरत्वम्, यच्च तज्जं दैन्यं तदुभयमवसाद इति योज्यम् । **तज्जम्**—तादृशदशाविशेषा(तादृशावसादविशेषा ?)ज्जातमित्यर्थः । अस्ति हि पुंसां परदुःखदुःखित्वादि । [2]भास्वरत्वविरोधि मनसो दैन्यम् ; तज्जं च शोकादिकमिति वा नेयम् । [3]भास्वरत्वमिह प्रकाशकत्वम् । तदभावः तज्जं च दैन्यमवसादः इति । अत्र **तद्विपर्ययोऽनवसादः** इति वाक्यशेषो भाष्योक्तः । वाक्ये तु शिष्याणामूहशक्तिसम्पत्त्यै तदनुक्तिः । **बलहीनेन** । "समदुःखसुखं धीरम्" इत्युक्तमनोबलरहितेनेत्यर्थः ।

**तद्विपर्ययजा**—देशादिगुणैर्भूतभाविसुखहेतुधिया बन्धुपुत्रेण च जातेत्यर्थः । उद्धर्षोक्तावपि पूर्ववत् तद्विपर्ययोऽनुद्धर्ष इति ऊह्यत्वाद्वाक्यानुक्तं भाष्ये दर्शितम् । "यदृच्छालाभसन्तुष्टः", "संतुष्टः सततं योगी", "स्वाध्यायशौचसन्तोष" इत्यादिविरोधमाशङ्क्याह—**अतिसन्तोष** इति । असन्तोषवत् अतिसन्तोषोऽपि विषयान्तरेष्वपि प्रवर्तकतया विरोधीत्यर्थः । इदं च **उद्धर्ष** इत्युपसर्गेण सूचितम् । "ऐश्वर्यमदमत्तो हि" इत्यादिषु तत्तद्वृत्तान्तेषु चास्य विरोधित्वं प्रसिद्धम् । **निर्वचनमपि** इत्यत्र **अपि**शब्दः सम्भवसमुच्चयार्थः पूर्वनिर्वचनेष्वपि भाव्यः। प्रकृतं कर्मणामुपयोगम्, निवृत्त्यंशेन तेषामविरोधेन निवेशनं च सूत्रवाक्याभिप्रेतन्यायसमाहारसिद्धं निगमयति **एवमिति** । **एव**कारेण परानिष्टत्वं द्योत्यते । तत्त्वमस्यादिवाक्यानि वा व्यवच्छिद्यन्ते । तदिह कर्मणः अनुपयोग-विरोध-प्रमाणाभावा निरस्ताः ।

---

1 पूर्वप्रयुक्तस्यापि पश्चात् योजनात् तत्पदेन मनोऽपि सुग्रहमित्याशयेनाह तस्मिन्निति । 2 भास्वरत्वेत्यारभ्य पृथग्वाक्यम् । अत्र पक्षे तज्जमिति पदमात्रं पृथक्कृत्य उपरि योज्यते । पूर्वं तज्जंदैन्यमित्युभयं पृथक्कृतम् । तज्जमित्यस्य विशेष्यपूरणं शोकादिकमिति । 3 भास्वरत्वमिहेति । पूर्वं भास्वरत्वम् उपयुक्तप्रकाश इत्युक्तम् । अत्र प्रकाशकत्वमित्युच्यते । नञो विरोध्यर्थकत्वं प्रागुक्तम् अभावार्थकत्वाशयेन पुनराह तदभाव इति । अत्र पक्षे अभास्वरत्वं नावसादः; किंतु तज्जदैन्यमेव । दैन्यंचेति चकारस्तु पूर्वोक्तावसादपदार्थसमुच्चये । यद्वा पूर्वस्यैव तदभावतज्ज-योरप्यवसादत्वमस्तीत्युच्यते ।

तथा च श्रुत्यन्तरम्, "विद्याञ्चाविद्याञ्च यस्तद्वेदोभयं सह । अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते" इति । अत्राविद्याशब्दाभिहितं वर्णाश्रमविहितं कर्म अविद्यया= कर्मणा मृत्युं=ज्ञानोत्पत्तिविरोधि प्राचीनं कर्म तीर्त्वा=अपोह्य विद्यया=ज्ञानेन अमृतं=ब्रह्म अश्नुते=प्राप्नोतीत्यर्थः ।

(विद्यां चेति ईशावास्यश्रुत्यर्थः)

अथ मृषावादिना समुच्चयवादिभ्यां चान्यथा व्याख्याता श्रुतिरस्मदुक्तप्रकारमेव व्यनक्तीत्याह तथेति । चोऽवधारणे । श्रुत्यन्तरं च तथेति वाऽन्वयः । अन्तरशब्दः सन्नत्यपरहितत्वेन स्फुटार्थत्वात्, अङ्गानामङ्गिनिष्पादने द्वारप्रदर्शनात् कर्मणां विध्यन्तानां[1] कण्ठोक्तवेदनकरणत्व[2]फलभावनानिष्ठतया परमपुरुषार्थविश्रान्तिबोधनाच्च प्रागुक्तवाक्याद्विशेषं व्यनक्ति । विद्यां चेत्यादेः परविद्यां तदङ्गभूतां कर्मरूपाविद्यां चानुष्ठेयत्वेन शास्त्रतो यो वेत्तीत्यर्थः । चकारावुक्तसमुच्चयार्थौ । तयोरनुक्तद्योतकत्वे तु तत्तदितिकर्तव्यताविशेषयोरेव (योः एवं?) विद्याफलयोः([3]विद्याविद्याफलयोः?), निवर्त्ययोश्च प्राप्त्युपाय-विरोधिनोर्ग्रहणम् । च, उभयं, सह इति अङ्गाङ्गितया तृतीयाध्याये साधयिष्यमाणयोरनुष्ठेययोर्बुद्ध्यारोहणे साहित्यमभिप्रेतम्; न तु समकालतयोपादेयत्वे । वेद्यत्वे हि सहभाव उच्यते; न तु सहिततया वेदनम् । न ह्युत्पत्तिदशायां विरोधिनिरासदशायां च विद्याकर्मणोः सहत्वसम्भवः । अत्र, "अन्धं तमः प्रविशन्ति" इत्यादिना "ततो भूय इव ते तमः" इत्यादिना च प्रत्येकनिन्दापरत्वम्(न्दा प्रतीते?) चकारः सहशब्दश्च समसमुच्चयस्थापकाविति न भ्रमितव्यम् । [4]तेषामन्यथासिद्धत्वात् । "य उ विद्यायां रताः" इति । कर्मानादरेण विद्योत्पत्त्यर्थोत्साहवन्त इत्यर्थः । कर्मनिरतानां विद्यानिरपेक्षकर्मस्वरूपं तावत् निष्पद्यत एव; न तु तावन्मात्रेण मुक्तिः । विद्यानिरतानां हेत्वभावात् विद्यैव न सम्भवति, कुतस्तरां मुक्तिरिति भूयश्शब्दाभिप्रायः । अविद्याशब्दस्यात्र कर्मविषयत्वं प्रकरणेन स्थापयति अत्रेति । न तु सर्वत्र; "अविद्यायामन्तरे वर्तमानाः", "क्षरं त्वविद्या", "अनात्मन्यात्मबुद्धिर्या" इत्यादिषु [5]अर्थान्तरेष्वपि प्रयोगात् । इह तु, "आत्मन्येवानुपश्यति", "कुर्वन्नेवेह कर्माणि" इत्यादिना विद्या तदङ्गं कर्म च प्रकृतम् । तदेवात्र विद्याशब्देन विद्योपयोगज्ञापनार्थमनूदितम् । परव्याख्यायां व्याख्यातौ (प्रख्यातौ?) संशयविपर्ययौ छेत्तुं पदार्थवाक्यार्थौ स्पष्टयति अविद्ययेति । पापस्यानर्थहेतुतया अवयवशक्त्या गौण्या वा मृत्युशब्दवाच्यत्वाय, यज्ञादेर्विविदिषोत्पत्तिविरोधिनिवर्तकत्वव्युदासाय, चोदितज्ञाननिवर्त्यतया श्रुतिस्मृतिशतसिद्धपापस्य विरोधित्वव्यावृत्त्यै च ज्ञानोत्पत्तिविरोधित्वोक्तिः । यादवप्रकाशीयनिर्वाहोऽप्येतेन निरस्तः । यद्यत्र मृत्युतरणं मुक्तिरेव, [6]कथं विद्ययाऽन्यत् साध्यं स्यात्; क्त्वाश्रुतिश्च न घटते; स्वापेक्षया स्वस्य पूर्वत्वायोगात् ।

---

1 विध्यन्तानाम्—इतिकर्तव्यताभूतानाम् । 2 फलभावनानिष्ठतया = मोक्षोद्देश्यक-भावनान्वयितया । निष्ठतयेति पाठो वा । 3 विद्याफलम् अमृताशनम्; अविद्याफलं मृत्युतरणम् । प्राप्तीति । प्राप्तिविरोधिनः उपायविरोधिनश्चेत्यर्थः । 4 तेषां = निन्दाचकारसहशब्दानाम् । 5 अर्थान्तरेषु = क्रमेणाज्ञानं प्रकृतिर्विपरीतज्ञानञ्चार्थाः । 6 विद्यासाध्यस्यान्यत्वं कथं स्यादित्यर्थः ।

**धीसङ्कोचनिवृत्तिश्चेदविद्याख्येन कर्मणा । धीविकासोऽपि सैवेति न साध्यान्तरसम्भवः ॥**
**प्रतिबन्धनिरासश्च साध्यते चेदविद्यया । अमृताप्तिः स्वतः सिध्येत् नादृष्टान्तरकाङ्क्षिणी ॥**
**[1]स्वतः स्वानुभवाधानप्रवणः प्राणिनां प्रभुः । प्रशान्तप्रतिबन्धानां निरपेक्षं हि कारणम् ॥**

मृत्युशब्दस्य साधारण्यसम्भवेऽपि, "तमेव विदित्वाऽति मृत्युमेति" इत्यादिस्पष्टार्थबहुश्रुतिस्मृतिबलेन विद्यानिवर्त्यप्राप्तिविरोधिविषयत्वासम्भवात्, तत्र च, "नान्यः पन्थाः" इति साधनान्तरप्रतिषेधेन कर्मणो विमुक्तिसाधनत्वेन समुच्चेतव्यत्वायोगात्, कर्मणः श्रुत्यादिभिरेव विद्यासाधनत्वस्थापनात् इहोपायविरोधिनि कर्मण्येव वृत्तिः । विद्याया इव कर्मणः उत्पादविरोधित्वाभावात् **प्राचीनग्रहणम्** । 'तीर्त्वा' इत्यस्य स्वरसार्थं त्यक्त्वा, 'प्राप्य स्थितः' इति परोक्तं क्लिष्टत्वादध्याहारत्वाच्चायुक्तम् । "एतं सेतुम्" [2]इत्यादिषु गत्यभावात् तरतेः प्राप्तिवचनत्वम् । यज्ञादिसत्कर्मणां(णा?) विविदिषाविरोधितया मृत्युशब्दवाच्यं कर्म तीर्त्वा' इति गमनिकाऽपि विविदिषा[र्थं]विनियोगप्रतिषेधात् प्रत्युक्ता-इत्यभिप्रायेण **अपोह्य**त्युक्तम् । विद्याशब्दस्य शास्त्रादिष्वपि प्रयोगात् इह प्रकृतब्रह्मवेदनविषयत्वं व्यनक्ति **ज्ञानेनेति** । "एतदमृतमेतदभयमेतद्ब्रह्म", "ब्रह्मविदाप्नोति परम्" इत्यादिश्रुत्यनुसारेणाह **अमृतं ब्रह्मेति** । ननु पूर्वम्, 'अविद्यानिवृत्तिरेव मोक्षः ; सा च ब्रह्मविज्ञानादेव भवति' इति परोक्तमभ्युपगतम्; इह तु **ब्रह्म वित् आप्नोति** (ब्रह्म...प्राप्नोति?)इत्युक्त्या अस्यां श्रुतौ साधनान्तरं स्वीकृतमिति भाति ॥ **मैवम्–अविद्यानिवृत्ति**शब्देन ज्ञानसङ्कोचनिवृत्तेः विवक्षितत्वेन भावान्तराभावनयेन सैव ब्रह्मप्राप्तिरिति समानार्थत्वात् । मोक्षशब्दस्वारस्यानुरोधात्, "अविद्या कर्मसंज्ञा" इत्युक्तबन्धककर्मनिवृत्तिविवक्षायां तु तन्मात्रमेवोपासनसाध्यम् । धीसङ्कोचहेतुनिवृत्तौ सेतुभङ्गस्रोतःप्रवृत्तिनीत्या तादृशेश्वरसङ्कल्पेन स्वतःप्राप्तो धीविकासः । अतः "विद्ययाऽमृतमश्नुते" इत्यनेन प्रतिबन्धनिवृत्तौ विद्यातः सिद्धायां स्वतस्सेत्स्यन्ती ब्रह्मानुभूतिरुच्यत इति न पूर्वापरविरोधः ।

ब्रह्मप्राप्तेश्च परमपुरुषार्थतया काम्यसाधनत्वेऽपि, तत्प्रतिबन्धकनिवृत्त्युपायस्य काम्यवर्गात् पृथगेव व्यपदेशः ॥

**प्राप्तितत्साधनानां हि प्रतिबन्धनिवर्तकाः । निवृत्तिधर्माः सर्वेऽपि नैमित्तिकपदे स्थिताः ॥**

अत्र करणविभक्त्यन्तरूपकर्मज्ञानशब्दाभ्यां, "कषायपक्तिः कर्माणि ज्ञानं तु परमा गतिः" "कषाये कर्मभिः पक्वे ततो ज्ञानं प्रवर्तते" इति स्पष्टार्थोपबृंहणार्थः सूच्यते । तेन च मृत्युशब्दस्य अत्रोपायविरोधिविषयत्वम्, वेदानुवचनादीनां विविदिषन्तीत्यत्र प्रकृत्यर्थेनान्वयः, समुच्चयवादनिरासश्च सिध्येत् । कषायम्=पापस्य तज्जन्यरागादेर्वा **पक्तिः**= पच्यतेऽनेनेति पाकनिमित्तम् । गम्यतेऽनेनेति **गतिः** । **ततो ज्ञानम्** ; न तु विविदिषा, नापि मुक्तिः । **प्रवर्तते**=उचितविषये प्रकृष्टवृत्तिमद्भवतीत्यर्थः ।

---

1 स्वतः सिध्येदित्युक्तं विवृणोति स्वत इति कारिकया । अतस्तत्र न विद्या कारणमिति भावः ।

2 एतं सेतुमित्यस्य वाक्यस्य प्रत्युक्तेत्येतदनन्तरं मुद्रणमयुक्तम्, अनन्वयात् ।

**मृत्युतरणोपायतया प्रतीता अविद्या=विद्येतरत् विहितं कर्मैव। यथोक्तम्—**
**"इयाज सोऽपि सुबहून् यज्ञान् ज्ञानव्यपाश्रयः। ब्रह्मविद्यामधिष्ठाय तर्तुं मृत्युमविद्यया" ॥**
**इति। ज्ञानविरोधि च कर्म पुण्यपापरूपम्। ब्रह्मज्ञानोत्पत्तिविरोधित्वेनानिष्टफलतया उभयोरपि पापशब्दाभिधेयत्वम्। अस्य च ज्ञानविरोधित्वं ज्ञानोत्पत्तिहेतुभूतशुद्धसत्त्वविरोधिरजस्तमोविवृद्धिद्वारेण। पापस्य च ज्ञानोदयविरोधित्वम्, "एष एवासाधु कर्म कारयति तं**

(पुण्यस्य पापरूपत्वं धर्मापनोद्यत्वं च)

आस्तां प्रकरणम्। अस्मिन्नेव वाक्ये कर्मणां विद्याङ्गत्वे, साधारणानामविद्यादिशब्दानामस्मदुक्तपदार्थनियमे च निर्बाधः स्वारस्यप्राप्तो वस्तुसामर्थ्यरूपो हेतुर्लक्ष्य[ते?] इत्यभिप्रायेणाह **मृत्युतरणे**ति। **प्रतीते**ति हेतुगर्भम्। **विद्येतरत्** इत्येतत् अत्र **अविद्या**शब्दनिरुक्तिः। अब्राह्मणादिशब्दनयात् तदन्यवृत्तौ प्रकरणस्यासन्नविषयत्वं युक्तमित्यभिप्रायेण **विहितं कर्मे**त्युक्तम्; न त्वविहितं कर्म, नापि ब्रह्म(भ्रमा?)-[1]ज्ञानादिकमिति पदद्वयान्वितावधारणाभिप्रायः। एतेन, [2]"कुर्वन्नेवेह कर्माणि" इत्यत्र **कर्म**शब्दः साधारणोऽपि उचितविषये नियमितः। न हि काम्यादिकं यावज्जीवमनुष्ठेयम्। उक्तश्रुतेरुपबृंहणेन स्वोक्तौ पदार्थवाक्यार्थौ स्थिरीकृतावित्याह **यथोक्त**मिति। **ज्ञानव्यपाश्रयः**—आगमोत्थज्ञाने प्रतिष्ठितः। **ब्रह्मविद्यामधिष्ठाय**—विवेकादिजन्यां परविद्यां भक्तिरूपापन्नां निष्पाद्यत्वेनाभिसंधायेत्यर्थः। "आगमोत्थं विवेकाच्च" इति प्रस्तुतं ज्ञानद्वयमेव ह्यत्र स्पष्टीकृतम्। अत एव **मृत्यु**शब्दस्यात्र विविदिषाविरोधि-[पर?]त्वं चायुक्तम्; तस्याः साध्यत्वेनानुपादानात्। "ब्रह्मविद्यामधिष्ठाय" इत्यनेनैव विविदिषानिष्पत्तेरर्थसिद्धत्वाच्च। "तर्तुं मृत्युम्" इति प्रयोजनवचनेन, "तीर्त्वा" इत्यस्य प्राप्त्यर्थत्वशङ्का च निरस्ता। उपबृंहणीयश्रौतपदसूचका**विद्या**शब्दोक्तमेव च **यज्ञ**शब्देन व्यञ्जितम्। **यज्ञान् इयाज** - चकारेत्यर्थः।

ननु धर्मेण पापस्यैवापनोद्यत्वं श्रुतम्; अत्र तु **प्राचीनं कर्मे**त्यविशेषेण पुण्यस्यापि तरणं कथं भाषितमित्यत्र वक्ष्यमाणश्रुतौ अपनोद्यतयोक्तं शोधयति **ज्ञाने**ति। पुण्यस्य कथं धर्मापनोद्यत्वम्, पापशब्दवाच्यत्वं चेत्यत्राह—**ब्रह्मे**ति। **उभयोरि**ति [3]विगीताविगीतसंवलितत्वोक्तिर्निदर्शनपरा। अत्र **अभिधेयत्वम्** [शक्त्या?] बोध्यत्वम्। "लक्षयेत्" इति **विवरणो**क्तिवैभवात्। अयं भावः-"स एव धर्मः सोऽधर्मस्तं तं प्रति नरं भवेत्" इत्यादि स्मर्यते। अतः पुण्याभिसन्धिप्रसिद्धमपि मुमुक्षुदशायां पापायते।

**मुमुक्षुत्वामुमुक्षुत्वदशाभेदेन कर्मिणः। कर्मैकं पापपुण्यत्वे [4]साध्यैक्येऽपि समश्नुते ॥ ३२४**
**श्येनादेश्चोदितस्यैव द्वैरूप्यं द्विविधश्रुतेः। एकस्यैवैकदैवास्ति कालभेदे तु किं पुनः ॥ ३२५**

1 अविद्याशब्दस्य ब्रह्मज्ञानेत्यर्थप्रसक्तिरेव नास्ति। अत इदमशुद्धम्। ब्रह्माज्ञानेति शोध्येत। तथा ब्रह्माज्ञान-जीवाज्ञानादिविशेषनिर्देशो निष्फलः। तस्मात् भ्रमाज्ञानेति अस्मदाचार्याणां शोधनम्।

2 कुर्वन्निति। 'नाविशेषात्' इति प्रथमव्याख्यानुसारेणेदम्। स्तुतयेऽनुमतिर्वेति पक्षे हि काम्यकर्मणोऽपि ग्रहणम्।

3 विगीताविगीतयोः= सविवादनिर्विवादयोः संवलितत्वेनोक्तिः।

4 साध्यैक्येऽपीति। पुण्यस्येव पापस्यापि स्वर्गरूपफलजनकत्वमादायैव द्रष्टव्यम्।

**यमधो निनीषति" इति श्रुत्याऽवगम्यते। रजस्तमसोर्यथार्थज्ञानावरणत्वं, सत्त्वस्य च यथार्थज्ञानहेतुत्वं भगवतैव प्रतिपादितम्, "सत्त्वात् संजायते ज्ञानम्" इत्यादिना। अतश्च ज्ञानो-**

प्रकृष्टसुखरूपस्वर्गैकसाधनं पुण्यमपि ह्यन्तराय[1]निरयशब्दनिन्दितस्वफलसङ्गार्थ(?)सिद्ध्यै निरुपाधिकसुखरूपब्रह्मज्ञानं प्रतिरुणद्धि। अतः प्रवृत्तिधर्मस्य निवृत्तिधर्मेणापनोद्यत्वं युज्यते। पापलक्षणं च कर्तुरनिष्टफलसाधनत्वेन शास्त्रवेद्यत्वम्; "नैतं सेतुमहोरात्रे तरतो न जरा न मृत्युर्न शोको न सुकृतं न दुष्कृतम्। सर्वे पाप्मानोऽतो निवर्तन्ते" इति श्रुतौ च निगमनस्थस्य पाप्मशब्दस्य शोकादिषु लाक्षणिकत्वेऽपि सुकृतदुष्कृतयोर्निमित्तसम्भवान्मुख्यत्वमेव ग्राह्यम्। छत्रिन्यायेन सर्वत्र लक्षणावृत्त्यैवपक्षेऽपि तारतम्यमस्ति। न च सुकृतदुष्कृतशब्दयोरिव दुष्कृतपाप्मशब्दयोरिह गोबलीवर्दन्यायात् पाप्मशब्दस्य दुष्कृतविशेषपरत्वं शङ्क्यम्; उभयोरपि व्यक्तित्वेन हयतुरङ्गशब्दयोरिव तदयोगात्; सर्वशब्दविशेषणवैयर्थ्यं च। "अपहतपाप्मा ह्येष ब्रह्मलोक" इत्यनन्तरवाक्यं च प्रकृतसर्वहेयनिवृत्तिनिरूपणे स्वरसम्। तदिह पूर्वापरपाप्मशब्दयोरसङ्कोचेन समानार्थत्वमेव युक्तम्; एवं सति पुण्यविशेषे पापशब्दः प्रवृत्तिनिमित्तैक्यात् घटत इति। ननु रजस्तमसोर्ज्ञानविरोधित्वमिष्टम्; तत् किं पापेन सह समुच्चयतः, विकल्पतः, कारणान्तरेण वेति नियामकाभावात् पापस्य ज्ञानविरोधित्वं दुरवधारणम्। अतो दुःखसाधनत्वमेव तस्येत्यत्राह अस्येति। [2]शुद्धसत्त्वमिहाभिभूतरजस्तमस्कमुपयुक्तप्रकाशादिजनकं सत्त्वम्। ज्ञानोत्पत्तिदशायामपि पुंसां त्रैगुण्यानुवृत्त्या तदातनगुणान्तरभ्यां विशेषव्यवच्छेदाय विशुद्धिशब्दः। "कर्मवश्या गुणाः" इत्यादिभिः गुणानां तद्द्वारत्वसिद्धिः, पापस्य दुःखसाधनत्वं च नान्यव्यवच्छेदेनेति भावः। द्वयोरपि ज्ञानविरोधित्वे मानाभावे कथं द्वारद्वारित्वकल्पनमित्यत्र द्वारिणस्तावद्विरोधित्वे मानमाह— पापस्येति। "एष एव" इत्यादिश्रुतौ न तावत् अधोनिषीतीत्येतत् निरयादिनिनीषार्थम्; अतो-न्निनीषायाः स्वर्गादिविषयत्वाभावात्। "एभ्यो लोकेभ्य उन्निनीषति" इति स्वर्गादिसर्वलोकेभ्यो ह्युन्नयनं स्वरसतः प्रतीयते। अतोऽपवर्गप्रापणप्रतिपक्षभूताधोनयनार्थमिहासाधुकर्म तत्साधनविरुद्धमेव स्यात्; तत्साधनं चात्र[3], "मामुपास्स्व" इत्यादिविहितम्। तस्य चोपक्रमे, "यं त्वं मनुष्याय हिततमं मन्यसे" इति हिततमत्वमव्यवहितमोक्षोपायत्वं(स्वरूपं?) सिद्धम्। तदेवात्र सन्निधिबलात् साधारणेनापि साधुकर्मशब्देन गृह्यते। तत्कारयितृत्वं च, "ददामि बुद्धियोगं तम्" इत्यादिभिर्विशेषतोऽप्युक्तम्। तस्य चोत्पत्तिप्रतिबन्धकत्वेन विरुद्धं कर्म भगवद्वैमुख्यापादनं कर्म; तत्सांमुख्येऽधोगतिप्रसङ्गाभावात्। असाधुकर्मणश्चाधोगतिनिदानत्वम्, "तानहं द्विषतः क्रूरान्" इत्यारभ्य, "ततो यान्त्यधमां गतिम्" इत्यन्तेन स्फुटीकृतम्। यद्वा साधुकर्मशब्द इह प्रस्तुतोपायाकाङ्क्षिताङ्गपरः। न चात्र कर्मण उन्नयनशब्दोदितमुक्त्युपायत्वम् अद्वारकम्; श्रुत्यादिभिः सद्वारकत्वस्थापनात्। अतो विद्याङ्गकर्म

1 'तस्यान्तरायो मैत्रेय देवेन्द्रत्वादिकं फलम्', 'एते वै निरयास्तात' इति।

2 नित्यविभूताविवात्र सर्वात्मना रजस्तमोराहित्यस्य दुर्वचत्वादन्यमर्थमाह शुद्धेति।

3 अत्र=एष एव साधुकर्मेत्यादि वाक्यं यत्र, तत्र प्रतर्दनविद्यायाम्।

**स्पत्तये पापं कर्म निरसनीयम् । तन्निरसनं चानभिसंहितफलेनानुष्ठितेन धर्मेण । तथा च श्रुतिः—"धर्मेण पापमपनुदति" इति ।**

---

प्रतिकोटिस्थमसाधुकर्मान्तरविद्योतितं वक्तव्यमेव । किंच साध्वसाधुकर्मकारयितृत्वमिह न प्राचीनजीवकर्मनिरपेक्षम्; वैषम्यनैर्घृण्यप्रसङ्गात् । न च वायूदकादिवत् प्रेरकत्वम्; शास्त्रवैयर्थ्यादिप्रसङ्गात् । बुद्धिप्रदानादिवचनविरोधाच्च । अतः, "यमधो निनीषति" इति यद्वृत्तेन कस्यचिदनुवादोऽधोनिनीषाहेतुभूतपापकारित्वं व्यनक्ति । पूर्वपापे चो(प पेनो?)त्तरपापारम्भे [च] ज्ञानलोपः तन्मूलविपरीतज्ञानं च दृढम् । तथा चो बृंहितम् 'यस्मै देवाः प्रयच्छन्ति", "पापं प्रज्ञां नाशयति" इत्यादिभिः । सर्वदेवेषु सर्वपापेषु च सामान्योक्तमपि प्रकृतेऽप्यकुण्ठितम् । विशेषतश्च गीयते—"क्षिपाम्यजस्रम्" इत्यादि । अतः पापस्य ज्ञानोदयविरोधित्वं सिद्धम् । ननु श्रुतेन द्विविधेन पापेनैव ज्ञानं निरुध्यताम्; निवृत्तिधर्मेण चोपपत्स्यते? यत्नम्; अलमुभयत्र प्रकृतिगुणद्वारीकरणेत्यत्राह रज इति । सत्त्वोपादानमिह [1]रजस्तमसोर्व्यतिरेकव्याप्त्या च ज्ञानहेतुत्वनिश्चयार्थं साधुकर्मद्वारप्रदर्शनार्थं ज्ञानोत्पत्तिहेतुभूतशुद्धसत्त्वे प्रकृतस्य ज्ञापनार्थं च । श्रुतिस्मृतिप्रमितान्यतरत्यागम, सति गत्यन्तरे विकल्पस्य चायोगात् द्वारद्वारित्वमेवात्र युक्तमिति भावः । "रजसो लोभः" इत्यनेनान्यथाधीहेतुत्वमपि सिद्धम्, अप्राप्तविषयलोभस्य भ्रान्तिहेतुत्वात्; 'यया धर्ममधर्मं च" इत्यादिना तत् व्यक्तम् । ननु "न भुक्तं क्षीयते कर्म' इत्यादिस्मृत्या कर्मफलभोगावसाने ज्ञानं साध्यताम् । धर्मस्य च धृतिशब्दार्थसुखसाधनत्वमेव प्राप्तमिति शङ्कापनुत्त्यै निष्कृतिशास्त्र-विनियोगपृथक्त्वाभ्यां सिद्धं निरास्यनिरासकस्वभावं निर्धारयन् उक्तमर्थद्वयं निगमयति अत इति । **निरसनीयम्** । अनन्तेषु पापेषु सन्तन्यमानेषु न कदाचिदपि भोगेन निश्शेषशान्त्यवसरः; अतः शास्त्रोक्तनिष्कृत्यैव तन्निरासः कार्य इति भावः । तथाऽप्यपरिमितानां निष्कृतिरप्यशक्येत्यत्राह तदिति । 'स्वल्पमप्यस्य धर्मस्य" इत्यादिन्यायेन फलान्तरसङ्गरहितनिवृत्तिधर्ममाहात्म्यात् तन्निवर्तनं शक्यमित्याशयः । "य उ चैनमेवं वेद" इत्यादिषु शास्त्रार्थवेदने फलश्रुतिः प्रशंसार्था । परम्परया वा स्यात् । अधिकारिभेदेन वा । अतः अनुष्ठानं प्रधानम्: तत्परित्यागिनां तु कारणाभावात् कार्याभाव इत्यभिप्रायेणोक्तम् **अनुष्ठितेनेति** । उपात्तश्रुतिगतानामविद्यादिशब्दानां स्वेष्टार्थत्वं, पापस्य भोगेन विनाऽपि निवर्त्यत्वं च स्पष्टयन्तीं श्रुतिमुदाहरति **तथेति** । अत्र धर्मशब्दः प्रायश्चित्तमात्रविषयोऽप्यविशेषात् निवृत्तिधर्ममपि गृह्णाति । "विज्ञानादानन्दो ब्रह्मयोनिः" इत्यादिना ब्रह्मविद्यासन्निधानात् । सहपठितदानादिषु प्रतीतानि द्विषद्वशीकरण(णादि?)फलान्तराण्यपि ब्रह्मविद्यानिष्पत्त्यनुगुणान्येव । अङ्गिफलं चात्र, "भूयो न मृत्युमुपयाहि विद्वान्" इति स्फुटम् । अतोऽत्र निवृत्तिधर्मेण सांसारिकपुण्यपापयोर्द्वयोरपि पापशब्दोक्तयोर्निवर्त्यत्वं सिध्येदिति ।

---

1 सत्त्वोपादानमिति आन्ध्रलिपि पाठः । रजस्तमसोरिति सप्तमी । रजस्तमस्स्थले सत्त्वाभावे ज्ञानाभाव इति व्यतिरेकव्याप्त्या ज्ञानहेतुत्वनिश्चयार्थमित्यर्थः ।

**तदेवं ब्रह्मप्राप्तिसाधनभूतं ज्ञानं सर्वाश्रमकर्मापेक्षम् ।**

**अतोऽपेक्षितकर्मस्वरूपज्ञानं केवलकर्मणामल्पास्थिरफलत्वज्ञानं च कर्ममीमांसावसेयमिति सैवापेक्षिता ब्रह्मजिज्ञासायाः पूर्ववृत्ता वक्तव्या ।**

**अपिच नित्यानित्यवस्तुविवेकादयश्च मीमांसाश्रवणमन्तरेण न सम्पत्स्यन्ते फलकरणेतिकर्तव्यता**

(कर्मविचारस्य पूर्ववृत्तता)

एतावता किमायातमित्यत्र तन्मूलमुपासनात्मकं ज्ञानमित्यनेनाभिप्रेतं कर्मसापेक्षत्वं निरूढमित्याह **तदिति** । **तत्** - उक्तश्रुतिस्मृतिसूत्रोपपत्तिसम्प्रदायबलात् । **एवम्**—निष्कामकर्मणां ब्रह्मविद्याप्रतिबन्धनिरासकत्वप्रकारेण । अस्त्वेवं विचार्यस्योपासनस्य साङ्गकर्मापेक्षा । तद्विचारस्य कृत्स्नकर्मविचारापेक्षा कथमित्यत्र स्थापितमर्थं निगमनेन स्थिरयति **अत इति** । मुक्तिसाधनविद्याया निवृत्तिधर्मनैरपेक्ष्यायोगादित्यर्थः । **अपेक्षितकर्मस्वरूपज्ञानमित्यनेन**, वृद्धव्यवहारेण व्रीह्यादिवत्, कर्ममीमांसया यज्ञादिपदार्थानां सेतिकर्तव्यताकानां विशेषतो वेदितव्यतया विधिविनियोगस्वरूपापेक्षिणि विनियोगे, 'नागृहीतविशेषणा(ण)' न्यायात्, साङ्गस्य ध्यानस्य फलसाधनतया तत्स्वरूपान्वितस्यैव बुभुत्सितत्वम् अचिन्तितेऽप्युपासने कर्मणश्चिन्तयितुं शक्यत्वं च सूच्यते । विद्या कर्मनिन्दया विद्याप्ररोचनं च तादृशकर्मज्ञानापेक्षमित्यभिप्रायेण **केवले**त्यादिकमुक्तम् । **अवसेयम्**—साध्यमिति यावत् । **मीमांसा** अत्र विचारः । त्याज्योपादेयसहितोपासनशास्त्रार्थं विचारयता वश्यम्भाविनस्तदुभयस्वरूपनिश्चयस्य कर्ममीमांसासाध्यतया अत्र अपेक्षा त्वदनिष्टा वृत्तत्वेन वक्तुं युक्तेत्यभिप्रायेण **सैवे**त्युक्तम् । अन्ततः कर्मपरीक्षासापेक्षा तापत्रयवृत्तोक्तिश्च नेन निरस्ता । साधनचतुष्टयस्य वा व्युदास **एवकारे**णोपक्षिप्यते ।

(साधनचतुष्टयपूर्ववृत्ततानिरासः)

न केवलमस्मदुक्तस्य युक्तरमात्रम् ; त्वदुक्तस्य दोषोऽप्यस्तीत्यभिप्रायेणाह **अपिचेति** । तत्रान्योन्याश्रयमुद्घाटयति **नन्वेति** । चस्त्वर्थो वर्तिष्यमाणस्य वृत्ततावैपरीत्यद्योतकः । **मीमांसाशब्दोऽत्र** भागत्रयार्थः ; आत्मनि एतावुपादानात् । **श्रव**णशब्दश्च विचारपर्यन्तः । अयं भावः— किमत्र **विवेकशब्देन** निश्चयो विवक्षितः, आपातधीर्वा ? नाद्यः; कृत्स्नमीमांसासाध्यस्य ब्रह्मविचारापेक्षया पूर्ववृत्तत्वायोगात् ; आत्मनित्यत्वादिकं ब्रह्मकाण्डे हि निरूपयिष्यते । न द्वितीयः ; तस्याः कर्मब्रह्मकाण्डसाधारणत्वेन विशेषतोऽत्र वक्तुमयुक्तत्वात् । प्रथमाधिकमे कारणाभावस्य चोक्तत्वात् । न च सा फलान्तरवैराग्यादेर्हेतुः । उभयत्रामृतत्वाद्यापातधीसिद्धेः । न च कपिलकणादादितन्त्रैर्विवेकः ; अध्ययनादक्रमेण तदवसरनरोधोक्तेः । तेषु च बहुधा नश्रेयसतत्साधनादौ विवेकवैपरीत्यस्य तवापि (त्वयैव) संमतत्वात् । अत एव हि निरसिष्यन्ते "नित्यं हि नास्ति जगति" इत्याद्यु पुराणं तु श्रुत्यमनुरुध्यैव विवेकार्थं स्यात् । न तु स्वातन्त्र्येण अन्यथा किं शारीरकेण ॥ नन्वोऽन्यत्र मेशयादिदम्भ यदि चेत्, तर्हि तत्र न विवेकसिद्धिः ।

(भामत्युक्त—नित्यानित्यवस्तुविवेकशब्दार्थनिरासः)

यत्तत्र **वाचस्पतिनो**क्तम्—"नित्यानित्ययोर्विवृतीति नित्यानित्यवस्तु=तद्धर्माः, नित्यानित्ययो-

**अधिकारिविशेषनिश्चयात्मकस्ते कर्मस्वरूप-तत्फल-तत्स्थिरत्वास्थिरत्वाऽऽत्मनित्यत्वादीनां दुरवबोधत्वात् एषां साधनत्वं च विनियोगावसेयम्, विनियोगश्च श्रुतिलिङ्गादिभ्यः। स च तार्तीयः।**

धर्मिणोस्तद्धर्माणां च विवेको नित्यानित्यवस्तुविवेकः" इत्यारभ्य, "नित्यत्वं सत्यत्वम्। तत् यस्यास्ति, तन्नित्यं सत्यम्। तथा चाऽऽस्थागोचरः। अनित्यत्वमसत्यत्वम्; तत् यस्यास्ति तदनित्यमनृतम्; तथा चानास्थागोचरः" इति; "यद्दतं तन्नित्यं सुखं व्यवस्थाप्यते। तदास्थ गोचरो भविष्यति। यत्त्वनित्यमनृतं भविष्यति, तापत्रयपरीतं तत् त्यक्ष्यत इति सोऽयं नित्यानित्यवस्तुविवेकः" इति च॥ एतदपि मन्दम्—अनित्यस्याप्यबाधितत्वेन सत्यत्वस्य स्थापयिष्यमाणत्वात्। न च नित्यं सुखमनुपादेयमिति धिया कर्मिणां कर्मविचारादौ प्रवृत्तिः; किंतु तस्य कर्मसाध्यत्वभ्रमाद्वा दौर्लभ्यबुद्ध्या वा। किंच नित्यत्वादिमात्रं नाऽऽस्थागोचरत्वादिनिदानम्, पुरुषार्थतत्साधनत्वाभ्यामेव ह्यास्था; तद्वैपरीत्याच्चानास्था। ते च नित्या-(नित्येऽ?)नित्ये च यथार्हं स्याताम्। निरूपकस्यापि ह्यनित्यसुखत्यागः "अशक्यानि दुरन्तानि सम्भव्यफलानि च" इति न्यायात्, अधिकसुखलाभतृष्ण्या वा स्यात्। तदभावे अल्पष्वमपि सुखमुपादीयते। नित्यमपि यदि दुःखात्मकमनुपयरूपं वा, कथमास्थार्हम्? प्रकृतस्य प्रकृष्टसुखत्वेन प्रतीतत्वादिति चेत्; तत्प्रतीतिस्तावन्न व्याप्त्या, अदृष्टेः। न च श्रुत्या; तन्मूलापातधियस्साधारण्यादिदौस्थ्यात्; निश्चयस्य तु मिथस्संश्रयग्रस्तत्वात्; तन्त्रान्तरस्मृत्योश्चासाधकत्वस्य दर्शितत्वात्। नित्यसुखसम्भवमूलोपादित्सा च साधारणी। तन्त्रान्तरे[1] तदसम्भवश्च सुव्यक्तः(?) "आनन्दो ब्रह्म" इत्यादिरमीमांसितकर्मब्रह्मभागैर्दुर्बोधः; प्रमाणाध्याये तर्कपादे च तन्निरासात्। तत एवात्राऽऽद्यसूत्रे अन्यत्र च नित्यफलासम्भवः प्रकृतोपयोगात् प्रतिष्ठाप्यत इत्यपि दुर्वचम्; युष्माभिरेवं सूत्रवाक्यार्थानुक्तेश्च। अपिच नित्यसुखस्यात्र सम्भावनामात्रम्। स्वर्गादिसुखस्यानित्यत्वं च न शास्त्रान्तरेणानुमानेन वा सिध्येत्। ताभ्यामेव वैपरीत्यस्यापि सुवचत्वात्। स्वर्गसुखमनित्यं सुखत्वादित्यादेरमृतत्वादिश्रुतिबाधात्। तदान्यपर्यस्य तन्निरूपणसापेक्षत्वात्, अन्यथा मुक्तसुखमनित्यं सुखत्वादित्यादेरपि प्रसक्तेः। तदप्रसक्तिश्च त्रय्यन्तार्थनिर्णयात्, स च तथेति मिथस्संश्रयः। अतः कर्मविचार एवात्रापेक्ष्यः।

**(शमदमादिवृत्तत्वविमर्शः)**

शमदमादीनां साधनत्वविवेकः तत्स्वरूपमात्रं वा वृत्तमित्युच्यते। न पूर्वः—तस्य, "शमदमाद्युपेतः स्यात्" इति साधनलक्षणे निष्पाद्यत्वात्। नोत्तरः—तत्र श्रवणौपयिकावधानादिमात्ररूपाणां सर्वशास्त्रसाधारण्येन विशेषतोऽत्र वक्तुमयुक्तत्वात्। योगौपयिकानां तु बाह्यान्तःकरणनिरोधादिरूपाणां त्रय्यन्तार्थश्रवणात्पूर्वमयुक्तेः। "तस्मादेवंविच्छान्तो दान्तः" इति ब्रह्मधीपूर्वकत्वोक्तेश्च।

किंच नित्यानित्यविवेकादयः किं हेतुसाध्यरूपेण स्थिताः अन्यथा वा। आद्ये, कर्मविचारोऽपि,

---

1 तन्त्रान्तर इति। अत्र तन्त्रान्तरे तदसंभवश्चामीमांसितकर्मब्रह्मभागैर्दुर्बोधः पश्चात् सुव्यक्तः; प्रमाणान्तरे तर्कपादे च तन्निरासात् इत्येवं वाक्यं स्यात्। आनन्दो ब्रह्मेत्यादितः नित्यसुखसंभवमूलोपादित्सा च साधाणी इति वाऽन्यथा वा वाक्यान्तरं स्यात्।

"परीक्ष्य लोकान्' इत्यादिप्रकारेण मुमुक्षायाः परम्परया हेतुहेतुमद्भावात् सह पाठ्यः (पठ्यताम्)। अन्यथा मुमुक्षुत्वमेकमेव हि पाठ्यम्; किं चतुष्कग्रहणेन। द्वितीयेऽपि अभ्युगमविरोधात्(धः?)। "विवेकाद्वैराग्यम्" इत्यादिक्रमस्य परैर्व्याख्यातत्वादिति।

अत्र मीमांसाश्रवणमन्तरेणेत्युक्तं विवृणोति—फलेति। कर्मभागे स्वर्गादिर्यागादिः प्रयाजादिः बुभुक्षुश्च फलादयः; ब्रह्मभागे तु मुक्त्युपास्तिशमादिमुमुक्षवः। एषां विशेषः पूर्वपक्षोक्तात् व्यावृत्तं रूपम्, मिथो भेदश्च। नन्वत्र फलकरणादिनिश्चयेन कर्मस्वरूपादिबोधोक्तौ साध्याविशेषः; पदार्थवाक्यार्थनीत्या तेषु तेष्वधिकरणेषु[1] तत्तदवान्तरवाक्यार्थनिश्चयेन पश्चान्मिथस्संसृष्ट विशिष्टमहावाक्यार्थबोधोक्तेः। वैराग्यादिमूलभूतस्य नित्यानित्यविवेकस्य फलकरणादिनिश्चयान्तर्गत(गतस्य?)(गतिः?) बोधन[2]परत्वाच्च। कर्मग्रहणमिहोपास्तेरप्युपलक्षकम्। क्रियत इति वोभयसंग्रहः। उपासनेऽपि कर्मशब्दः सूत्रेऽप्युक्तः—"प्रकाशश्च कर्मण्यभ्यासात्" इति। तत्र च भाष्यम् "उपासनात्मके कर्मणि" इति। अन्यत्र च, "यागादिकमुपासनात्मकं च कर्म" इति। मानसकर्मोक्तिश्च स्मृत्यादिषु दृश्यते। कर्मशब्दस्यात्र ज्योतिष्टोमादिमात्रविषयत्वं मत्वा तत्स्थिरत्वास्थिरत्वेत्येतत् निरूपण[3]प्रकारस्यानुकारः; न तु निश्चयप्रकारस्येति केचित् [आहुः?]। अत्र वैधर्म्यव्यञ्जकेन व्यतिरेकेण भाष्य(ष?)माणस्यायं च भावः—किं केन कथमित्याकाङ्क्षितफलांशत्रयनिश्चयमन्तरेण कथं ज्यंशभावनात्मककर्मबोधः; कथं च जीवनादिविशेषिताधिकारान्वितस्वर्गादिपदार्थस्य देहान्तरदेशान्तरभोग्यत्वनिश्चयः। तदभावे च कथं लोकायत-सौगतगतिखण्डनगर्भपूर्वोत्तरदेहानुवृत्तात्माध्यवसायः। आत्मनि च मुक्ततयोपलब्धेरन्यथासिद्ध्या वचनमन्तरेण कथं मुक्तत्वमतिमुख्यत्वम्। तादृशात्मनिश्चयाभावे देहमेवात्मानं मन्यमानस्य कथमैहिकफलविरक्तिः। नित्यमुक्तरूपतया सिद्धस्याप्यधिकर्तुः, प्रवृत्तिधर्मफलं कृत्स्नं परिमितविषयभोगरूपमनित्यं, निवृत्तिधर्मफलं परं नित्यमिति निश्चयालाभे, कथं स्वर्गाद्यनित्यफलजिहासा नैगमान्तिकनित्यफलधिया समाकर्षश्च। अतः साधनचतुष्कवृत्त[त्व?]वादे विवेकविशेषादेर्मूलतया भागद्वयविचार एष्टव्यः। ततश्च कर्मविचारसापेक्षत्वं परम् (वरम्?)। अन्योन्याश्रयत्वधिक[4] इति। आदिशब्देन ज्ञानानन्दरूपत्वसंग्रहः।

शमादिसाधनसम्पत्तौ विशेषतश्च दोषमाह एषामिति। "शान्तो दान्तः" इत्यादिविनियोजकवाक्योक्तानामित्यर्थः। विनियोगोऽङ्गाङ्गित्वबोधनम्। "सम्बन्धः' इति तु न्यायसुदर्शनम्। शमादेरङ्गत्वे बोधिते अत्र साधनत्वमनुक्तमप्यर्थात् सिध्येत्॥ ततः किमित्यत्र शेषलक्षणसिद्धप्रमाण[लक्षण] सापेक्षत्वमाह विनियोग इति। एतैर्मानैर्ब्रह्मकाण्ड एव तद्विनियोगश्चिन्त्यतामित्यत्राह स इति। स च

1 अधिकरणेषु = मीमांसाघटकेष्वधिकरणेषु। पश्चात् = पूर्णमीमांसार्थग्रहणानन्तरम्।

2 परत्वाच्चेत्यत्र अस्य भाष्यवाक्यस्येति शेषः। 3 निरूपणप्रकारस्य = अधिकरणेषु विचारदशायां कोटिद्वयोल्लेखप्रकारस्य। निश्चयप्रकारस्य = सिद्धान्तभूतस्य निश्चयविषयस्य।

4 अधिके इति पदच्छेदः। साधनचतुष्टयं कर्मविचारप्रपञ्चनमेव। तस्मिन् शारीरकविचाराधीननित्यादिविवेककोडीकारेणाधिके त्विष्टे अन्योन्याश्रयः स्यादित्यर्थः। यद्वा परमित्युपर्यन्वेति; कर्मसापेक्षत्वं सिद्धम्; परं तु अन्योन्याश्रयोऽधिकः इत्यर्थः।

**उद्गीथाद्युपासनानि कर्मसमृद्ध्यर्थान्यपि ब्रह्मदृष्टिरूपाणि ब्रह्मज्ञानापेक्षाणीतीहैव चिन्तनीयानि । तान्यपि कर्माण्यनभिसंहितफलानि ब्रह्मविद्योत्पादकानीति तत्साद्गुण्यापादकान्येतानि सुतरामिहैव सङ्गतानि । तेषां च कर्मस्वरूपाधिगमापेक्षा सर्वसंमता ॥**

---

**तार्तीयः**=प्रागुक्तसङ्गतिक्रमेण कर्मकाण्डतृतीयाध्यायोक्तः । इह पुनस्तृतीये लाघवानुसारात् पूर्वं व्युत्पादितैस्तैरेवाऽऽक्षेपसमाधानमात्रं करिष्यते । एवमेवाध्यायान्तरन्यायोपजीवनं चात्र द्रष्टव्यमिति भावः ।

(उद्गीथाद्युपासननिरूपणसाङ्गत्यम्)

अथ युक्त्यन्तरं दर्शयन् उद्गीथाद्युपासनविचारस्य स्थानान्तरानर्हतया अत्रैव मुख्यसङ्गत्या कर्मब्रह्मचिन्ताक्रमं स्थापयति **उद्गीथेति** । **कर्मसमृद्ध्यर्थान्यपि** इत्यनेन—पूर्वत्रोपयोगः, इह नेति शङ्कोद्घाट्यते । **कर्मसमृद्धिः**—"तदेव वीर्यवत्तरम्" इति श्रुत्युक्तः प्रबलकर्मभिरप्रतिबन्धो गुणफलरूपः । **ब्रह्मदृष्टिरूपाणी**ति हेतुगर्भम् । **ब्रह्मज्ञानापेक्षाणि** । न ह्यारोप्यस्वरूपमन्यत्राजानतः क्वचिदपि तदारोपः; अनिर्वचनीयादिदृष्टेर्दूषयिष्यमाणत्वात् । इह च ब्रह्मज्ञानं प्रथमद्विकसाध्यमित्याशयः । दृष्ट्युपासनानां प्रधानानुपयोगं प्रणाड्योपयोगात् परिहरति **तानी**ति । उद्गीथाद्युपासनपरिहार्याण्यूहानीति यावत् । **अपि**रत्र परारोपितविरोधद्योतकः । यद्वा पूर्वग्रन्थे अनुपयोगमन्वारुह्य सजातीयप्रयोगमात्रात्सङ्गतिः अनन्यगतिकाक्षेपोक्त्या परिहृता ; अत्र तूपयोगश्चास्तीति व्यज्यते । **अनभिसंहितफलानि** । बन्धकफलसङ्कल्परहितत्वादित्यर्थः । ब्रह्मविद्याऽत्र स्वाभीष्टा । **साद्गुण्यं** पूर्वोक्तैव समृद्धिः ; न तु वैकल्यनिवृत्तिः । **तदापादकानि** कर्मसमृद्ध्युत्पादकानि ।

**[1]कर्मजात् कर्मसाद्गुण्यं विद्या साद्गुण्यतश्च सा ।**
**अतो विरोध इत्यल्पं व्यक्तिभेदाद् व्यवस्थितेः ॥ ३२६ ॥**

**सुतराम्** । स्वापेक्षया परविद्यापेक्षया चेति भावः । इहैवेत्ययोगवदन्ययोगोऽपि व्यवच्छिद्यते ।

**अब्रह्मदृष्ट्यादिषु [2]तु प्रधानैकार्थता भवेत् । विद्यौपयिकदृष्ट्यादि हेतुन्यायादिहेष्यते ॥ ३२७**
**[3]नातिप्रसक्तिरेवं स्यादधीत्यासत्त्यनुद्रुतेः । कथञ्चित्सङ्गतिश्चात्र परेष्टा न प्रणुद्यते ॥ ३२८॥**

अस्तु यथावदनवगतेऽधिष्ठाने मिथ्यादृष्टिः[4] प्रसिद्धेत्यत्राह—**तेषामिति** । न ह्येतत् मिथ्यादृष्टिमात्रम् ; अपितु यथावत् अवगते वैधमारोपणम् । ततश्चाधिष्ठानभूतं कर्माङ्गं यथावदविजानता तत्रान्यदृष्टिविधिर्न चिन्तयितुं शक्यते । **सर्वसंमता** । विश्वापलापिनोऽपि निरूपकसन्निधौ दुरपह्नवा ।

---

1 उपासनात् कर्मजात् कर्मसाद्गुण्यम्, तस्माच्च साद्गुण्यात् विद्येति विरोधो नास्ति विद्याया विभिन्नत्वादित्यर्थः । 2 ब्रह्मान्यदृष्टिरूपोपासनानां सामान्यतः कर्मवीर्यवत्तरत्वार्थता भवति । तत्र विद्यार्थकर्मानुष्ठाने विद्योपासनयोर्हेतुहेतुमद्भावात् संगतिरित्यर्थः । 3 तावता न कर्मविचारावसरे तद्विचारापत्तिः ; उपनिषद्येव दृष्टिविधीनामधीत्या आसत्तिवशादुपनिषद्विचारमनुसृत्य तत्र प्रवृत्तेः । कथञ्चित्—उपासनत्वरूपसामान्याकारतः ।
4 मिथ्यादृष्टिः=अन्यथाज्ञानम् । वैधमारोपणम्=आहार्यज्ञानम् ।

(महापूर्वपक्षः)

**यदप्याहुः—अशेषविशेषप्रत्यनीकचिन्मात्रं ब्रह्मैव परमार्थः ।**

---

आहत्य [1]सन्मात्रे(तन्मात्रे?) अवगतिविमतेरिति भावः । ननु काम्यकर्मणोऽप्यनङ्गैरपि स्वीयैर्वत्सरत्वा-पादकैरेतैरपे[2]क्षास्ति ; तेषामपि विचारे अनुष्ठाने च कर्मज्ञानापेक्षा सिद्धा, अत उभयाकाङ्क्षया कर्मकाण्डे तच्चिन्ताऽस्तु ॥ नैवम्—अविदितब्रह्मणस्तद्योगस्योक्तत्वात् । अत एव ह्युपनिषत्स्वेव तदधीतिः ।

यत्तु, "अधीतवेदान्तस्य" इत्यादिना वेदान्तमात्राध्यायिनस्तावन्मात्रचिन्ता शक्येति पूर्वं चोदितम्—तदसत् ; अध्ययनविधिर्हि यथाक्रमं कृत्स्नाध्ययनं प्रयुङ्क्ते । न च विध्यतिलङ्घनेन प्रवृत्तमापत्कृतं वा त्वयन्तमात्राध्ययनमपेक्ष्येदानीं तद्विचारस्य पूर्ववृत्तं मृग्यते ॥ एतेन प्राचीनसुकृत-विशेषनियतवैराग्यातिशयादेकदेशाध्ययनविचारौ स्यातामित्यपि निरस्तम् । तस्याध्ययनविध्यति-लङ्घनायोगात् । अनधिगतकर्मणः कर्माङ्गविद्याधिगतिरशक्यविचारेति चोक्तम् । अविशदनिरूपणेन पश्चाच्छेषपूरणं च क्लिष्टम् । ब्रह्मचिन्तोद्यतस्य विद्याङ्गकर्मणां गुरूपदेशमात्रेण ज्ञप्तिरस्त्विति चेत्, तर्हि तेनैव न्यायेन ब्रह्मविचारोऽपि मा भूत् । तदिह यथाविधि कृत्स्नाध्यायिनः प्रागिव कृतावशिष्टे विचारपर्वणि वृत्तविशेषः स्थाप्यत इति शुद्धः पन्थाः ॥

**श्रुतिकिरीटशरीर विचार(विकृष्टि)कुन्मलिनवृत्तिमलिम्लुचवृत्तिभिः ।**
**विघटितामिव विंशतिलक्षणीं यतिपतेरिति नीतिरजीघटत् ॥ ३२९ ॥**

**इति लघुसिद्धान्तः ॥**

एवं, "विरोधादप्रमाणत्वात्" इत्याद्युक्तानां कर्मनैरपेक्ष्यहेतूनां साङ्गोपायविधिनिरूपणेन बाधा-सिद्धिसाधारण्यान्यथासिद्ध्यादिदोषाः प्रदर्शिताः । अथ साधनचतुष्टयस्य पूर्ववृत्तत्वे, कर्मणो विरुद्धत्वे, वाक्यार्थधियो मोक्षोपायत्वे च हेतुतया समाहारेण प्राक् प्रदर्शितं सामर्थ्यं प्राप्यनिवर्त्यगोचरश्रुति-समीक्षया निराकर्तुं विस्तरेणानुभाषते—**यदप्याहुरित्यादिना** [3]**आरभ्यन्ते इतीत्यन्तेन** ।

**साधितं त्विह निर्बाधम् ; बाधितं निष्प्रतिक्रियम् । तथापि पुनरारम्भः खलुशेषविमर्दवत् ॥**
**परपक्षप्रसिद्धत्वं गौरवं व्यक्तभाषणम् । बहूनामपि संवादो यदप्याहुरितीर्यते ॥ ३३१ ॥**
[अशेषेत्यादिना?] **ब्रह्मपारमार्थ्यं** [प्रबोध्यते?] **। तदन्यमिथ्याभावस्तु तदित्यादिभिरुच्यते ॥ ३३१**

**यच्छब्दः** परगोष्ठीप्रसिद्ध्यर्थः । **अपिः** दूषितादूषितसमुच्चयार्थः ; परेष्टगौरवद्योतको वा ।

---

1 अत्र यादवप्रकाशादिप्रस्तावाभावात् सन्मात्र इति अशुद्धम् । दृष्ट्युपासनानां कर्मस्वरूपाधि-गमापेक्षायां विमतिर्नास्ति ; साक्षात् तन्मात्रे संगतिविषय एव विमतेः । यत्प्रधानं शास्त्रं तदपेक्षितमेव वक्तव्यमिति ह्युक्तम् । तथा च आहत्य = साक्षात्, तन्मात्रे = अप्रधानभूतोद्गीथो-पासनमात्रार्थं कर्मावगतिरित्यत्रैव विमतेरित्यर्थः । 2 एतैरपेक्षा = एतत्सापेक्षता ।

3 'अशेषेत्यादिना' इत्यस्ति चेत्, आरभ्यन्त इत्यन्तेनेति युक्तम् । यदप्याहुरित्यादिना इति वचनात् आरभ्यन्त इति इत्यन्तेनेति स्यात् । लघुसिद्धान्तारम्भे, 'यदुक्तमविद्यानिवृत्तिरेव' इत्यभ्युप-गम्योक्तिदर्शनात् स्वमतं तत्त्वं तत्रास्फुटम् । तत्प्रकटनाय परपक्षविस्तरः ।

तदतिरेकि नानाविधज्ञातृज्ञेयतत्कृतज्ञानभेदादि सर्वं तस्मिन्नेव परिकल्पितं मिथ्याभूतम् ।
"सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्", "अथ परा; यया तदक्षरमधिगम्यते"

आहुरित्यनेककण्ठोक्तिः । तेन बहुव्याख्यातृसंमतिं तदुक्तकृत्स्नानुवादं च सूचयति । अशेषेत्यादि-चिन्मात्रेत्यन्तं प्रागुक्तार्थम् ।

**वाक्ययोः सत्यमिथ्यार्थप्रतिज्ञारूपयोरिह । यथार्हं हेतुसाध्यत्वं पदार्थेषु विभाव्यते ॥ ३३**

(ब्रह्मसत्यत्वप्रपञ्चमिथ्यात्ववर्णनम्)

चिद्रूपतया सजातीयाद्यशेषभेदशून्यं परमार्थस्वप्रकाशं च ; तत एव हि तुच्छव्यावृत्तिः । अवधारणेन अन्यपरविधिवाक्यसिद्धस्य सगुण[त्व]स्य कल्पितत्वं मिथ्यात्वसाधकदृश्यत्वस्य व्यतिरेकव्याप्तिश्च व्यज्यते । प्रपञ्चोपलम्भात् विरोधशान्त्यै(सदन्तरोपलम्भविरोधशान्त्यै) धीमात्रनिवर्त्यत्वाय च अवधारणार्थं व्यनक्ति **तदतिरेकि** इति । स्वतस्सिद्धे तस्मिंस्तु प्रकृतैतावत्त्वसूत्रोक्तन्यायेन, "अथात आदेशो नेति नेति", "असदेवेदमग्र आसीत्" इत्यादिभिर्न बाधः स्यादिति तच्छब्दाभिप्रायः । ब्रह्मान्यत्वात् भिन्नत्वात् ज्ञातृत्वात् ज्ञेयत्वादित्यादयस्तदन्यमिथ्यात्वहेतवः । उक्तेषु [1]वीतावीतेषु शुक्तिरूप्यादिर्घटादिश्च दृष्टान्तः । **नानाविधशब्देन, "नेह नाना"** इत्यादीनां विषयो दर्शितः । स्वरूपज्ञानव्यावृत्त्यै वृत्तिज्ञान-संगृहीत्यै चन्द्रनीतिव्यक्त्यै ज्ञातृत्वज्ञेयत्वज्ञानक्रियात्वतद्विशेषाणां करणभेदकृतस्मृतित्वानुभवत्वादीनां ब्रह्मण्यध्यस्तत्वसिद्ध्यै च **तत्कृतशब्दः** । कर्मकर्तृवच्छिन्नं हि ज्ञानमहङ्कारविकारः क्रियास्वरूपः(पम् ?); न त्वात्मस्वरूपम् ; न च तद्धर्मः । अन्तःकरणतद्वृत्तिस्फुरितचैतन्यभेदस्तु जलचन्द्रभेदकल्प इति भावः । यो **विशेषः** पूर्ववाक्योक्तस्तत्र [2]**भेदशब्दो** योज्यः । तत्रेषु नानाविधत्वमवान्तरविशेषैः । **आदिशब्देन** गोबलीवर्दनीत्या सुखदुःखतद्धेतुजन्मजरादेः कर्मकर्त्रादिविकल्पान्तराणां च संग्रहः । एकस्मिन्नेव एकदैव मिथोविरुद्धानन्ताध्यासो गगनगन्धर्वनगरनीत्या युक्त इत्यभिप्रायेण, "सर्वमात्मैवाभूत्" इति श्रुत्यनुसारात् **सर्वं तस्मिन्नेवे**त्युक्तम् । एतेन माध्यमिकयोगाचारमताभ्यां विशेषः ख्यापितः । **एव**कारेण निरधिष्ठानभ्रमायोगात् तुच्छव्यावृत्तस्य तस्यैवाधिष्ठानत्वं युक्तमिति व्यज्यते । निरधिष्ठानश्च भ्रमो न युक्तः । शुक्तिरजतादेरध्यस्तद्रव्यधर्माणां चान्ततस्तदेवाधिष्ठानमिति चात्र भावः । निष्कले ब्रह्मणि अविद्यादर्शितानन्तांशे कल्पनाव्याप्तिसूचनाय **परिशब्दः** । **कल्पितम्**=अविद्यमानं वेऽस्तीति प्रतीतम् ; असत्यमित्यर्थः । स्वात्यन्ताभाववन्निष्ठतया प्रतिभातमिति यावत् । तत एव **मिथ्याभूतम्** सर्वदैव सदसद्व्यावृत्तमिति यावत् । कल्पितत्वे वक्ष्यमाणमिथ्यात्वं हेतुतयोच्यते इति केचित् ।

एवं युक्तिसूचके प्रतिज्ञाद्वये श्रुतिसूत्रस्मृतीः प्रमाणयति—**सदेव** इत्यादिना **अभिधानात्** इत्यन्तेन । 'शाखाग्रे चन्द्रः' इतिवत् कारणत्वेन ब्रह्मण उपलक्ष्यत्वमभिप्रेत्य आदौ शङ्कितदोषनिवर्तकेभ्यः शोधकेभ्यः पूर्वं कारणवाक्योपादानम् । तत्रापि षड्विधतात्पर्यलिङ्गवत्तया बलीयस्त्वात् प्रथमं सद्विद्योक्तिः ।

1 वीतावीतेषु=अन्वयिव्यतिरेकिहेतुषु ।
2 तत्र भेदशब्द इति । तथा च ज्ञातृज्ञेयज्ञानान्येव भेदा इत्यर्थः ।

यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुश्श्रोत्रं तदपाणिपादम्, नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः", "सत्यं ज्ञानमनन्तं ब्रह्म", "निष्कलं शान्तं निरवद्यं निरञ्जनम्", "यस्यामतं तस्य मतं मतं यस्य न वेद सः। अविज्ञातं विजानतां विज्ञातमविजानताम्", "न दृष्टेर्द्रष्टारं पश्येर्न मतेर्मन्तारं मन्वीथाः", "आनन्दो ब्रह्म",

---

अत्र सत उत्पत्तिर्यस्य स्थाप्यते, तस्य सत्त्वेनानूदितस्यापि असत्यत्वसूचकाभ्याम्, अग्र इत्युक्तेऽपि सर्वदा निषेधतत्परा[भ्या]मवधारणाभ्यामद्वितीयपदेन चाभिप्रेतेऽर्थे कण्ठो[1]क्त्याशङ्कनीयविशेषनिषेधोपक्रमं कारणवाक्यान्तरमुपादत्ते अथेति। अद्रेश्यम्=अदृश्यम्। ऐन्द्रियकप्रत्यक्षानर्हमित्यर्थः। अग्राह्यम् अनुमयाऽपि दुर्ग्रहम्। चक्षुश्श्रोत्रादेरगोचर इति वा पदद्वयार्थः। "ज्ञानकर्मेन्द्रियानर्हत्वमिह विवक्षितम्" इति केचित्। अगोत्रम् अव्यवधानेन देवादिनामभिरस्पृष्टम्। सद्ब्रह्मादिशब्दैरपि हि लक्षणयैव प्रदर्श्यते। अवर्णं सितरक्तादिशून्यम्। कुलं च ब्राह्मण्यादि च दूरापास्तम्। अचक्षुश्श्रोत्रं तदपाणिपादमिति। इन्द्रियायत्तज्ञानक्रियारहितमिति भावः। नित्यं विभुम्=कालतो देशतश्चानवच्छिन्नम्। एतेन प्रतिज्ञास्थब्रह्मत्वप्रदर्शनम्। सर्वगतं स्वव्यतिरिक्तैः सर्वैरध्यस्तैरधिष्ठानतया श्रितम्। वस्त्वन्तराभावाद्वस्तुपरिच्छेदरहितमित्याशयः। सुसूक्ष्मम् आकाशादिन्यायेन स्पर्शवत्सु प्रतिघातरहितम्; दृश्यत्वाद्यनुगुणस्थौल्यादिरहितमिति वा। तेन योग्यानुपलब्धिबाधशङ्कानिरासः। तदव्ययम्; तत्रैवं निरुक्तिः—"सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु। वचनेषु च सर्वेषु यन्न व्येति तदव्ययम्॥" इति। एतदेव शब्दे योजितं तद्वक्तैः। भूतयोनिम् अविद्याशबलितरूपेण भूतरूपविवर्तोपादानमित्यर्थः। अत्र "यथोर्णनाभिः" इत्यादिना तत्प्रपञ्चः। एवं तटस्थलक्षणलक्षितस्य चिन्मात्र[त्व?]प्रतिज्ञानिर्वाहाय प्रकृष्टप्रकाशश्चन्द्र इतिवत् अतद्व्यावृत्तितत्परेण स्वरूपलक्षणेन शोधनं व्यनक्ति सत्यमिति। अत्र सामानाधिकरण्यादिबलादन्यव्यावृत्तिपरत्वं कल्प्यम्। विशेषतोऽन्यधर्मव्यावृत्तिकण्ठोक्तिमाह निष्कलमिति। ब्रह्मणश्चिन्मात्रशब्दसूचितं ज्ञेयत्वनिषेधं कस्यचित् स्तुत्या अन्यस्य निन्दया च स्थापयति यस्येति। मननोपासनाद्यविषय इति भावः। ज्ञातृत्वनिषेधमप्याह न दृष्टेरिति। दृष्ट्यादिशब्दोपलक्षितज्ञानव्यतिरिक्तज्ञाताऽपि नास्तीति भावः। [2]परमप्रेमास्पदत्वादानन्दरूपो जीवः, [स्वप्रकाशत्वान्नित्यप्राप्तस्यापि प्राप्यत्वोपचारः]

---

1 सद्विद्यावाक्यस्थावधारणद्वितयाद्वितीयपदाभिप्रेतभेदाभावरूपार्थकण्ठोक्तिः, आशंकनीयानां विशेषाणां निषेधश्चोपक्रमे यत्र तत् वाक्यमित्यर्थः।

2 ननु ज्ञानातिरिक्तस्याभावेऽपि जीवप्राप्य आनन्दः पुरुषार्थः कश्चिद् वक्तव्यः। स च न ब्रह्म; ब्रह्मण आनन्द इति व्यधिकरणनिर्देशात्। तस्य जीवापेक्षयाऽप्यन्यत्वे गौरवात् अस्तु जीव एवानन्दः। तस्य प्राप्तत्वेऽपि प्राप्यत्वोपचारः। स च ज्ञानरूपतया स्वप्रकाशतया दृश्यत्वाभावात् सत्य इति तमादाय ब्रह्म सद्वितीयं स्यादिति शंका परमेत्यादिनोच्यते। आन्ध्रलिपिग्रन्थे कुण्डलितत्वात् स्वप्रकाशत्वादित्यादिकमत्र प्रक्षिप्तम् अन्यत्रोत्तरत्र स्थितमिति ज्ञायते। अथापि तत्स्थितिं स्वीकृत्यैवार्थो वर्णितः। निरासार्थे चेति चकारप्रयोगात् पूर्वत्रापि पाठान्यथात्वं तर्क्यते।

**"इदं सर्वं यदयमात्मा", "नेह नानाऽस्ति किञ्चन । मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति", "यत्र हि द्वैतमिव भवति, तदितर इतरं पश्यति । यत्र त्वस्य सर्वमात्मैवाभूत् तत् केन कं पश्येत् तत् केन कं विजानीयात्", "वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्", "यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते, अथ तस्य भयं भवति", "न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि", "मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात्",**

---

ज्ञानशक्त्या स्वप्रकाशत्वात् सत्यः । तेन ब्रह्मणः सद्वितीयत्वमिति शङ्कानिरासार्थं चासुखाद्व्यावृत्तिमाह **आनन्द** इति । जीवोऽपि ब्रह्मानतिरिक्ततयैवानन्दरूप इति भावः । न हि आनन्दस्यानन्दित्वम् । अतश्च निर्गुणत्वसिद्धिः । "ब्रह्मण आनन्दः" इति श्रुतेश्चान्यपरत्वम् । 'सर्वं तस्मिन्नेवं परिकल्पितम्' इत्यत्र श्रुतिमाह **इदं सर्व**मिति । इदङ्कारविषयं कृत्स्नमनूद्य तद्विरुद्धात्मत्वविधौ, 'चोरः स्थाणुः' इतिवत् अनूदितं(त?)[1]बाधार्थसामानाधिकरण्यम् । "ब्रह्मैवेदं सर्वम्", "आत्मैवेदं सर्वम्", "पुरुष एवेदं सर्वम्" इत्यादिषु एतत् व्यक्तम् । अत्र बाधार्थत्वमन्यत्र कण्ठोक्त्या द्रढयति **नेहे**ति । **इह**=प्रपञ्चे, "यस्मिन् पञ्च पञ्चजनाः" इति प्रस्तुते ब्रह्मणि वा ; यन्नानात्वेन भाति तन्न सत्यमित्यर्थः । भेदद्रष्टुः प्रत्यवायोक्त्या भेदनिषेधं द्रढयति **मृत्यो**रिति । "तमसो वा एष तमः प्रविशति" इत्यादिवत् अविद्यागृहीतः पुनरविद्यां तत्फलं वा प्राप्नोतीत्यर्थः । यदि भेदो नास्ति, खपुष्पवन्न दृश्येत ; नित्यमसतोऽपि भ्रान्त्या दृश्यत्वे खनैल्यवन्नित्यं किं न दृश्येतेत्यत्र स्वप्नजागरकल्पबद्धमुक्तदशया युक्तायुक्तावस्थया वा नियमोक्तिमाह **यत्रे**ति । कालानुक्तिरियम् । **नानेव, द्वैतमिव**—इति **इव**शब्दाभ्यां मिथ्यात्वस्य सिद्धवत्कारः । **तत्** तदेत्यर्थः । 'इतरेण' इति पूर्वस्मिन् वाक्येऽध्याहार्यम् ; परस्मिंस्तु 'कः' इति । कर्तृकरणादिकल्पना निरस्ता । **पश्येत् विजानीयात्** इति निषेध्यज्ञानावान्तरभेदपरम् । कार्यमिथ्यात्वं कारणसत्यत्वं च लोकदृष्ट्या निदर्शितमाह **वाचे**ति । अत्र दार्ष्टान्तिकमात्रे सत्यत्वस्थापनाय दृष्टान्ते व्यावहारिकसत्यत्वमात्रम् । अतो न विरोधः ।

अन्वयव्यतिरेकाभ्यां भेदबुद्धेर्भयहेतुत्वेन त्याज्यत्वं दर्शयितुमाह—**यदा ही**ति । अभयहेतुरैक्यधीः पूर्ववाक्योक्ता । **उ** इत्यवधारणार्थम् । **दरमन्तरं कुरुते** ईषद्भेदं मन्यते [[2]ईषद् **अन्तरं** भेदं **कुरुते** मन्यते] **उद्**इति विभज्य **उत्कुरुत** इति केचित् । उद्भवतीति चान्ये । **अरम्**—द्रुतम् । [3]**अथ**=तदा । अनिरूप्येत्यर्थः । (द्रुतम्=अनिरूप्येत्यर्थः । **अथ** = तदा?) अस्य तु निर्विशेषत्वे सूत्रमादत्ते **न स्थानत** इति । नोभयलिङ्गमित्यन्वयः । साकारत्वं साकारनिराकारत्वं च नास्ति ; किन्तु निराकारत्वमेवेत्यर्थः । ब्रह्मान्यमिथ्यात्वे सूत्रमाह—**माये**ति । इदं सूत्रं स्वप्नविषयमपि तन्मुखेन दुर्निरूपत्वाविशेषात् धीमात्रेतरकृत्स्नमिथ्यात्वपुरस्कारकमिति भावः ।

---

**ब्रह्मण आनन्दत्वरूपधर्मवत्त्वेऽपि सविशेषत्वमिति शंकानिरासाय असुखाद् व्यावृत्तिरित्युक्तम् ।**

**1 अनूदितबाधेति समस्तम् । अनूदितस्य चोरत्वादेर्बाधः । 2 कुण्डलितम् आन्ध्रलिपिकोशे नास्ति ।**

**3 आन्ध्रकोशे अथ तदेति नास्ति । अयथातथा अनिरूप्येत्यर्थः इत्यस्ति । भेदं कुरुत इत्यन्वयः ।**

"प्रत्यस्तमितभेदं यत् सत्तामात्रमगोचरम् । वचसामात्मसंवेद्यं तज्ज्ञानं ब्रह्मसंज्ञितम् ॥"
"ज्ञानस्वरूपमत्यन्तनिर्मलं परमार्थतः । तदेवार्थस्वरूपेण भ्रान्तिदर्शनतः स्थितम् ॥"
"परमार्थस्त्वमेवैको नान्योऽस्ति जगतः पते । यदेतत् दृश्यते मूर्तमेतज्ज्ञानात्मनस्तव ॥
भ्रान्तिज्ञानेन पश्यन्ति जगद्रूपमयोगिनः ॥
ज्ञानस्वरूपमखिलं जगदेतदबुद्धयः । अर्थस्वरूपं पश्यन्तो भ्राम्यन्ते मोहसम्प्लवे ॥
ये तु ज्ञानविदः शुद्धचेतसस्तेऽखिलं जगत् । ज्ञानात्मकं प्रपश्यन्ति त्वद्रूपं परमेश्वर ॥"
"तस्माऽऽत्मपरदेहेषु सतोऽप्येकमयं हि यत् । विज्ञानं परमार्थो हि द्वैतिनोऽतथ्यदर्शिनः ॥"
"यद्यन्योऽस्ति परः कोऽपि मत्तः पार्थिवसत्तम । तदैषोऽहमयं चान्यो वक्तुमेवमपीष्यते ॥"
"वेणुरन्ध्रविभेदेन भेदष्षड्जादिसंज्ञितः । अभेदव्यापिनो वायोस्तथाऽसौ परमात्मनः ॥"
"सोऽहं स च त्वं स च सर्वमेतदात्मस्वरूपं त्यज भेदमोहम् ।
इतीरितस्तेन स राजवर्यस्तत्याज भेदं परमार्थदृष्टिः ॥"

---

इदं पाराशर्योक्तमर्थद्वयं पराशरोक्तश्लोकाभ्यां संवादयति **प्रत्यस्तमितभेदमिति** । सजातीयादिसर्वविशेषरहितमित्यर्थः । तर्हि शून्यं स्यात्; नेत्याह **सत्तामात्रमिति** । सर्वत्र निर्बाधानुवृत्तं सत्तामात्रं हि न शून्यं स्यात् । गोबलीवर्दनयेन स्वगतो भेदो वा मात्रचा निषिध्यते । अथवा सत्ताशब्दस्य धर्मवाचितया धर्म्यपेक्षया भेदराहित्यं च धर्म(धर्मस्व?) मात्रचा व्युदस्यति । स्वाध्यस्तापेक्षया धर्मत्वं धर्मित्वं च कल्पितमिति भावः । तथापि सत्तादिशब्दवाच्यत्वं दुस्त्यजमित्यत्राह **अगोचरं वचसामिति** । निमित्तभूतधर्माभावे, गोत्ववत् निमित्तत्वाभावे च कथं शब्दप्रवृत्तिरिति भावः । अनुपाख्यत्वे तुच्छत्वं स्यादित्यत्र स्वप्रकाशत्वमाह **आत्मसंवेद्यमिति** । हेतुं व्यनक्ति **ज्ञानमिति** । [1]**ब्रह्मसंज्ञितम्**—ब्रह्मत्वाद्यभावेऽपि ब्रह्मशब्देनोपचरितमित्यर्थः । तर्हि, 'ब्रह्मास्मि(स्ति)' इति विशिष्टधीः कथमित्यत्र, उपसंहारोक्तमेतत् उपक्रमानुगुणमित्यभिप्रायेणेमौ घटयति **ज्ञानस्वरूपमिति** । अजडत्वेन ज्ञेयत्वज्ञातृत्वरहितमिति च भावः । **अत्यन्तनिर्मलं** नित्यास्पृष्टाविद्यादिसर्वदोषम् । तत्रापि हेतुर्ज्ञानस्वरूपत्वम् । **अर्थस्वरूपेण** जडरूपदेवादिपिण्डात्मना, कृत्स्नप्रपञ्चात्मना वा । अनेन अन्यमिथ्यात्वं सिद्धम् । **परमार्थं** इत्याद्युपादानं तु पुराणद्वयेऽपि सत्यैकत्वसाधकाभ्यासलिङ्गस्फूर्त्यर्थम् । **नान्योऽस्तीत्युक्तं** विवृणोति **यदेतदिति** । उक्तमेव **ज्ञानस्वरूपमित्यादिना** पुनरपि द्रढयति । **ये तु ज्ञानविदः** इत्याद्यपि केषुचिद्बाधप्रदर्शनेन व्यतिरेकेण स्थिरीकरणम् । भ्रमनिवृत्तेर्धीमात्रसाध्यत्वरूयापकं च । कर्मशास्त्रनिरूढकर्तृनानात्वोपलम्भविरोधशान्त्यै तत्रैवात्माद्वैतमपि स्थापितमित्याह **तस्येति** । **एकमयमिति** । मयडिह स्वार्थिकः । आत्मपरशब्दाभ्यां भेदशङ्कां परिहर्तुं **यदीति** श्लोकः । **वेणुरन्ध्रेत्यादिना** दृष्टान्तमुखेनात्मभेदस्योपाधिकल्पितत्वोक्तिः । निदर्शितस्यैव निर्वाह्योपदेशं दर्शयति **सोऽहमिति** । उक्तमर्थमविसंवादिना यथोक्तकरणेन द्रढयति **तत्याज भेदमिति** । भेदमोहमित्यर्थः । जीवानां मिथो भेदधीनिवृत्तिरुक्ता । अथ

---

1 ब्रह्मसंज्ञितम् = संजातब्रह्मसंज्ञम् । समित्येकीकारे । संज्ञा आरोपः, लक्षणा, उपचार इति ।

"विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते । आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति ॥"

"अहमात्मा गुडाकेश सर्वभूताशयस्थितः । क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत ॥"

"न तदस्ति विना यत् स्यान्मया भूतं चराचरम् ॥" **इत्यादिभिर्वस्तुस्वरूपोपदेशपरैः शास्त्रैः, 'निर्विशेषचिन्मात्रं ब्रह्मैव सत्यम्, अन्यत् सर्वं मिथ्या' इत्यभिधानात् ।**

**मिथ्यात्वं नाम प्रतीयमानत्वपूर्वकयथावस्थितवस्तुज्ञाननिवर्त्यत्वम् । यथा रज्वाद्य**

---

जीवब्रह्मभेदबुद्धेरज्ञानमूलत्वं तदनुवृत्तौ हेत्वभावात् तन्निवृत्तिं चाह— **विभेदे**ति । स्पष्टार्थतया पुराणोक्तिः पूर्वमुदाहृता । ऐतिहासिकं वाक्यमात्मनां परस्परं ब्रह्मणा चैक्ये तदन्यमिथ्यात्वे च दर्शयति **अहमात्मे**ति । अत्र **सर्वभूत**शब्दस्य जीवविषयत्वशङ्का **सर्वक्षेत्र**शब्देन प्रशमिता । **'न तदस्ति'** इत्यादौ(दि?) मया विना यत् स्यात् तन्नास्ति=मद्व्यतिरिक्तं न परमार्थसदित्यर्थः । **इत्यादिभि**रिति भूयसां बलीयस्त्वार्थम् । उपासनविधिपरेषूक्तानां गुणविग्रहादीनां कल्पितत्वव्यवस्त्यै **वस्तुस्वरूपोपदेशपरै**रित्युक्तम् ।

ननु एतेषु **मिथ्याशब्दो** न दृष्टः । नानात्वनिषेधादितात्पर्यतस्तत्सिद्धावपि किमिदं मिथ्यात्वम् असत्त्वम् अन्यथाधीगोचरत्वं सदसदन्यत्वं चतुष्कोटिमुक्तत्वं वा? आद्यान्त्यौ निवर्त्याभावे निवर्तकशास्त्रादिवैयर्थ्यप्रसङ्गान्निर्बाधास्तिबुद्ध्या च निरस्तौ ; तव चानिष्टौ । अत एव न द्वितीयः— अधिष्ठानस्य मिथ्यात्वप्रसङ्गात् , आरोप्यस्यान्यत्र सत्त्वप्रसङ्गाच्च । न च तृतीयः— सदसद्भिद्योरिव व्याघातात् अप्रसिद्धेश्च । अन्यच्च न युक्तं पश्यामः इत्यत्र प्रतिपन्नोपाधौ निषेधप्रतियोगित्वाभिप्रायेण प्रतिवक्ति **मिथ्यात्वमि**ति । **नामशब्दः** शुक्तिरूप्यादिषु तत्प्रसिद्धिपरः ।

**ख्यातत्वादसदन्यत्वं बाध्यत्वेन सदन्यता । तेनानिर्वचनीयत्वं स्यादित्यत्राभिसंहितम् ॥**

**प्रतीयमानत्वमिह** प्रकाशमानत्वम् । [1]तेन वृत्तिविषयत्वमपि । साक्षिणः प्रकाशमानायामविद्यायामपि अनुवृत्तेः । "तदितरविवक्षयोक्तिः" इति मन्दम् । [2] "प्रतीयमानत्वपूर्वकतया बाधकधीप्रागभावादिव्यावृत्तिः" इति केचित् । नियमश्चात्र विवक्षितः ।

**तत्त्वधीप्रागभावादिः प्रतिपन्नोऽन्यथाऽपि च । तत्त्वबुद्ध्या निवर्त्येत व्यावर्त्य इह तेन सः ॥**

**असदत्र व्यवच्छेद्यं कैश्चिदिष्टं तदा पुनः । नास्तिधीगोचरत्वेन धीनिवर्त्यत्वकल्पनम् ॥**

भ्रान्तिनिवर्त्यसर्पादिव्यावृत्त्यै लोकदृष्ट्यनुसारेण **यथावस्थितशब्दः** । सत्यस्य हि निषेधकालस्थितत्वेऽपि तदानीं नास्तीति बुद्ध्या आभिमानिकं निवर्त्यत्वं स्यादिति भावः ।

**व्यवच्छेद्येषु [3]सत्यत्वमन्वारुह्यात्र लक्षणम् । तन्मुखेन प्रबुद्धस्य तेषां बाधोऽपि सेत्स्यति ॥**

---

1 साक्षिभास्य-वृत्तिविषयोभयसाधारणं प्रकाशमानत्वमेव प्रतीयमानत्वमित्यर्थः ।

2 प्रतीयमानत्वपूर्वकतयेति । प्रतीयत्वपूर्वकत्वदलनिवेशेनेत्यर्थः । केचिदिति कथनम्, असदत्र व्यवच्छेद्यमिति पक्षान्तरस्य वक्ष्यमाणत्वात् । नन्वसतः शशविषाणस्य कथं निवर्त्यत्वम्, अनुत्पन्नत्वादकल्पितत्वाच्चेत्यत्राह नास्तीति । नेति धीविषयत्वं तदिति भावः ।

3 सत्यत्वाभिमतसर्पादेरपि वस्तुतो मिथ्यात्वात् लक्ष्यत्वमेव । तत्रातिप्रसक्ताविष्टा-

ष्ठानसर्पादिः । दोषवशाद्धि तत्र तत्कल्पनम् ; एवं चिन्मात्रवपुषि परे ब्रह्मणि दोषपरिकल्पितमिदं देवतिर्यङ्मनुष्यस्थावरादिभेदं सर्वं जगत् यथावस्थितब्रह्मस्वरूपावबोधबाध्यं मिथ्यारूपम्।

लक्ष्यमेव व्यवच्छेद्यं लक्षणस्थपदैर्यदि । विपक्ष एव पक्षः स्यादस्तु पर्यवसानतः ॥ [इति ।]

**वस्तुज्ञाननिवर्त्यत्व**मिति । अत्र मात्रशब्दो योज्यः ; याथार्थ्यबुद्ध्यैव निवर्त्यमित्यर्थः । तेन मन्त्रादिशक्तिविशेषसहितधीनिवर्त्यविषादिव्युदासः । वेद्यगतविरुद्धाकारग्रहणाग्रहणयोर्बाधादिप्रयोजकत्वव्यक्त्यै सामानाधिकरण्यभ्रमजन्यातिप्रसङ्गशान्त्यै च समासविशेषणव्यत्यर्थो वस्तुशब्दः । दण्डादिनिवर्त्यव्यावृत्त्यै ज्ञानोक्तिः। नाशबाधयोरविशेषाभिमानाद्वा निषेधबुद्ध्यर्हत्वसाम्याद्वा नाश्यबाध्ययोर्निवर्त्यशब्दानुवृत्तिः । **निवर्त्यत्वम्**—निवर्तनार्हत्वम् ; तेन भूरभ्रादिभ्रमनिवर्त्यै(निवृत्त?)रज्जसर्पादिष्वव्याप्तिर्निरस्ता । न चात्र बाधकधीनिवर्त्यभयादावतिव्याप्तिः ; निवर्तमानदुःखस्य क्षणिकतया तन्निवृत्तौ बाधकधीवैफल्यात् , सामग्र्यभावादुत्तरदुःखानुत्पत्तेः । अदिह यन्निष्ठतया प्रतिपन्नं, तन्निष्ठात्यन्ताभावप्रतियोगितयाऽपि तत्त ज्ञानेन विषयीकारार्हत्वमिति तु तात्पर्यविश्रमः । उक्तस्य सर्वसम्मत्यर्थमाह **यथे**ति । ननु सारूप्यतत्त्वाग्रहौ सर्वत्र भ्रान्तिनिदानम् । तौ च जडेष्वेव स्तः, न ब्रह्मणि ; तस्य निर्विशेषत्वनित्यस्वप्रकाशत्वाभ्युपगमादित्यत्राह **दोषे**ति । अनिर्वचनीयदृष्टान्तस्थापनमत्र । (स्थापनेऽत्र) (स्थापनमिति अत्र) हिः प्रसिद्धौ । दुःखाद्यभावेषु सुखादिभावारोपे सारूप्यतत्त्वाग्रहासम्भवादिति च हेरभिप्रायः । सारूप्यसद्भावेऽप्यतिरिक्तदोषाभावे भ्रान्त्यभावात् स एव न (नः?) प्रयोजक इति भावः ।

निदर्शितं दोषकल्पितत्वं तत्कल्पितमिथ्यात्वलक्षणं च पक्षेऽतिदिशति **एव**मिति । जडत्वसविशेषत्वपरिच्छिन्नत्वपराक्त्वादिकं नाध्यासाधिष्ठानत्वे प्रयोजकमित्यभिप्रायेण **चिन्मात्र**त्वानूक्तिः । तत्त्वाग्रहश्च ब्रह्मणि स्वरूपविषयविशदवृत्तिज्ञानानुदयात् सिद्धः । स्वतो वा परतो वा प्रकाशमानत्वं च अध्यासापेक्षितं भ्रमविरुद्धत्वेन न शङ्कनीयम् । सर्वज्ञत्वमपि परब्रह्मण्यध्यस्तमिति ज्ञप्त्यै सर्वाध्यासयोग्यत्वाय च **परब्रह्म**शब्दः । अत्र कल्पितत्वमिदन्त्वं च बाध्यत्वे हेतुतयाऽभिप्रेते । अध्यसनीयत्वे सादृश्यवैसादृश्य —अल्पत्वानन्तत्वादिकं न तन्त्रमिति ज्ञापनार्थं **देवे**त्यादिना क्वचित्कचिदचिद्भेदोक्तिः । न ह्यत्र मिथ्यात्वे साध्ये व्यभिचारस्थलम् ; न च प्रत्यनुमानेन सत्यत्वे साध्ये बाह्येषु दृष्टान्तः । ब्रह्मणि तु दृष्टान्तेऽनुवृत्तसत्यहेत्वसिद्धिः ; कल्पितस्तु भासमानत्वादिः खपुष्पादावपि कथञ्चित् स्यादिति भावः । "यस्मिन् सर्वाणि भूतानि आत्मैवाभूद्विजानतः । तत्र को मोहः कः शोक एकत्वमनुपश्यतः" इत्यादिपरामर्शेन **यथावस्थिते**त्यादिकमुक्तम् । **बाध्यम्**— नास्तीति वेद्यमित्यर्थः । एवं मिथ्यालक्षणयोगात् **मिथ्यारूपम्**=मिथ्याशब्दवाच्यमित्यर्थः । स्वाधिकरणधीविषयनिष्ठात्यन्ताभावप्रतियोगि(गीति ?) वा । एवं भ्रान्तिबाधोक्त्या दोषतिरोधानयोः कल्प्यत्वादर्थापत्तिद्वयसिद्धं [1]ज्ञानमिति सूच्यते ।

पत्तिरिति मत्वा पृच्छति लक्ष्यमेवेति । समाधत्ते अस्तु पर्यवसानत इति । व्यवहारदशायामपि असत्यत्वव्यवहारभिया तथा नेष्यते । पश्चात्तु स्यादिति भावः । 1 दोषतिरोधानयोर्ज्ञानं भ्रान्त्यनुपपत्त्या बाधानुपपत्त्या चेत्यर्थापत्तिद्वयोपपादनाय कल्प्यत्वादित्यन्तम् ।

**दोषश्च स्वरूपतिरोधानविविधविचित्रविक्षेपकरी सदसदनिर्वचनीया अनाद्यविद्या ।**

**"अनृतेन हि प्रत्यूढाः", "तेषां सत्यानां सतामनृतमपिधानम्", "नासदासीन्नो सदासीत् तदानीम् । तम आसीत् तमसा गूढमग्रे प्रकेतम्", "मायां तु प्रकृतिं विद्यान्मायिनं**

---

ननु अतिरोहिताकारे नाध्यासः, तिरोधौ स्वरूपतदतिरिक्तप्रकाशविकल्पेन स्वप्रकाशात्मस्वरूपनिवृत्तिः सविशेषत्वं वा स्यात् । [1]अतस्तिरोधा[न कल्प?]नार्थमविद्यान्तरं कल्प्यम् । सदसदादिविकल्पदुःस्थश्चासौ । तस्य च कल्पितत्वे दोषान्तरापेक्षया अनवस्था, अकल्पितस्तु ब्रह्मस्वरूपान्यत्वानन्यत्वादिविकल्पासहः । न च दोषत्वेन लोकवेददृष्टः कश्चित् ब्रह्मणि सम्भाव्यते । एकश्च दोषो न सर्वाध्यासकृदित्याशङ्कयाह **दोषश्चेति । स्वरूपतिरोधानेत्यादिभिः** क्रमाच्छङ्कोद्धारः । अहन्त्वेदन्त्वादिभिस्तदवान्तरैश्च **विक्षेपस्य विचित्रत्वम् ।** 'स्वरूपतः स्वभावतश्च" इति केचित् । "आच्छादिका विक्षेपिका चेति विभागावेकस्या एवाऽऽकारभेदात्" इति केचित् । **विक्षेपिका**—विशेषप्रतिभासिकेत्यर्थः । दुर्घटस्वभावाविद्यामाहात्म्यात् सर्वमिदं समाहितम् । युगपत्कोटिद्वयारोपात्मकसंशयविशेषहेतुदोषवत् विचित्राध्यासहेतुत्वोपपत्तिः । विरुद्धसमुच्चयभ्रमजनकानेकान्तवादवच्च । तिरोधानमपि न वास्तवम् । परमार्थद्विस्त्वमर्थक्रियाविरहं[2] च परिहर्तुं सदसद्वैलक्षण्योक्तिः ।

(अविद्याया अनिर्वाच्यत्वं ब्रह्मणः अविद्यातिरोहितत्वं च)

तस्याः स्वरूपं परब्रह्मदोषत्वं तत्फलं च श्रुत्यैव स्थापयति—**अनृतेनेति । प्रत्यूढाः**—प्रतीपं प्रापिताः; प्रतिरुद्धा इत्यर्थः । तरङ्गचन्द्रवत् कल्पितजीवभेदविवक्षया बहुवचनम् । [3]पाशवदविवक्षितार्थं वा । "एवं ब्रह्मलोकं न विन्दन्ति" इत्यत्र प्रत्यूढत्वं हेतुः । इदं पूर्ववाक्योक्तेन विवृणोति—**तेषामिति ।** "त इमे सत्याः कामा अनृतापिधानाः" इत्युक्तानां तत्तत्कामो[4]पाधिप्रतियोगिभूतकल्पितार्थव्यावृत्तिरूपाणां ब्रह्मस्वभावानां तदभिन्नतया प्रामाणिकानां सतां मिथ्याभूतमज्ञानमाच्छादकमित्यर्थः । व्यावर्त्यभेदेन व्यावृत्तिभेदकल्पनयाऽत्र बहुत्वोक्तिः । 'पूर्ववत् पाशन्यायेन [तदविवक्षा ?] वा' इति केचित् । अविद्याया अनिर्वाच्यत्वं दर्शयति **नासदासीदिति ।** नात्र निषेधमात्रे पर्यवसानम्; उभयनिषेधेन, **तम आसीदिति** विहितम् उभयविलक्षणमेव हि स्यादिति भावः । केचिदाहुः, "बन्धमूलमज्ञानं कर्मरूपम्; प्रवाहानादिभ्रान्तिज्ञानमूलं त्वज्ञानमिन्द्रियादिदोषाधिष्ठानयाथात्म्यज्ञानप्रागभावश्चेत्येतत्सर्वम् तत्कार्याणि च सदसद्विलक्षणानि । सर्वमूलाविद्या त्वधिष्ठानाकारा । तन्निवृत्तिर्हि पञ्चमप्रकारा" इति । तमश्शब्देन ज्ञानविरोधित्वं तिरोधायकत्वं च व्यज्यते । **तमसा गूढम्**—अज्ञानेनावृतम् । अत्र **प्रकेतमिति** विशेष्यं ब्रह्म । ननु सुबालश्रुतौ तमश्शब्देनातिसूक्ष्मा मूलप्रकृतिरुच्यते, न त्वदिष्टाविद्येत्यत्र प्रकृतेर्मायात्वेन मिथ्यात्वमीश्वरस्यापि मायाकल्पितत्वं श्रुतमित्याह-**मायां तु**

---

1 तिरोधानस्य वास्तवत्वे स्वरूपनाशादिदोषात् तिरोधानं कल्पितमिति वक्तव्यत्वादित्यर्थः । 2 अर्थक्रियाविरहं—कार्यकरत्वाभावम् । 3 पाशाधिकरणे पाशानित्यत्र बहुवचनमविवक्षितार्थमित्युक्तम् । 4 तत्तत्कामरूपविशेषणप्रत्यनीकधर्मव्यावृत्तिरूपा अभावा एव कामा इति उच्यते निर्गुणत्वसिद्धये ।

तु महेश्वरम्", 'इन्द्रो मायाभिः पुरुरूप ईयते', 'मम माया दुरत्यया', 'अनादिमायया सुप्तो यदा जीवः प्रबुध्यते' इत्यादिभिर्निर्विशेषचिन्मात्रं ब्रह्मैवानाद्यविद्यया सदसदनिर्वाच्यया तिरोहितस्वरूपं स्वगतनानात्वं पश्यतीत्यवगम्यते । यथोक्तम्—

"ज्ञानस्वरूपो भगवान् यतोऽसावशेषमूर्तिर्न तु वस्तुभूतः ।
ततो हि शैलाब्धिधरादिभेदान् जानीहि विज्ञानविजृम्भितानि ॥
यदा तु शुद्धं निजरूपि सर्वकर्मक्षये ज्ञानमपास्तदोषम् ।
तदा हि संकल्पतरोः फलानि भवन्ति नो वस्तुषु वस्तुभेदाः ॥",

इति । प्रकृतिं मायां विद्यादिति विपर्ययस्यान्वयः । एकस्य सतो मायामरीचकाभिर्विविधत्वेन भानमाह **इन्द्रो मायाभिरिति** । अत्र **इन्द्रः** सर्वदृगीश्वरः ; "रूपंरूपं प्रतिरूपो बभूव तदस्य रूपं प्रतिचक्षणाय" इति पूर्ववाक्यस्वारस्यात् । "स एतमेव पुरुषं ब्रह्म [1]ततममपश्यत् इदमदर्शमिति । तस्मादिदन्द्रो नाम", "इन्धो ह वै नामैष योऽयं दक्षिणेऽक्षन् पुरुषः । तं वा एतमिन्धꣳ सन्तमिन्द्र इत्याचक्षते परोक्षेण" इत्युपनिषदेव तद्विषयत्वेन निरुक्तेश्चेति भावः । "ज्ञानवान् मां प्रपद्यते वासुदेवः सर्वमिति" इत्युक्तैक्यज्ञानमन्तरेणास्या मायाया दुस्तरत्वं गीतमित्याह **मम मायेति** । तदनादित्वं तया तिरोधानं कदाचित् तन्निवृत्तिश्च समर्थ्यत इत्याह **अनादीति** । **आदिशब्देन**, "अविद्यया मृत्युं तीर्त्वा", "भूयश्चान्ते विश्वमायानिवृत्तिः", "गुणमायासमावृतः", "यन्त्रारूढानि मायया" इत्यादिसंग्रहः । स्वरूपविधिवाक्यसिद्धशुद्धाकारानुरोधेन दोषविधिपरेषु महेश्वरादिशब्दाः बहुवचनश्च मायोपश्लिष्टविषयतया न त्रिविधभेदसत्यत्वं स्थापयितुं क्षमन्त इत्यभिप्रायेणानुदाहृतानेकवाक्यसंकलितार्थस्य निर्विशेषत्वादेरनूक्तिः । "तदैक्षत बहु स्याम् ।", "एकधा बहुधा चैव दृश्यते जलचन्द्रवत्—" इत्यादि प्रमाणं सर्वार्थानां च सच्चिदनुवेधेन भानं चानुसरन् शुक्तिरूप्यादिवत् भ्रमस्य विषयाश्रयभेदशङ्कां च व्युदस्यति **स्वगतनानात्वमिति** । स्वाध्यस्तं चिदचिद्भेदम्, वृत्तिसंभेदेन स्मृतित्वानुभवादिधर्मभेदं चेत्यर्थः ।

दोषविषयतयोदाहृतश्रुतीनां महेश्वरादिशब्दैरन्यपरत्वशङ्कां निवारयितुं श्रुतितदर्थापत्तिसिद्धमर्थं निर्विशेषवस्तुदोषविषयोपबृंहणेन व्यनक्ति **यथोक्तमिति** । निर्विशेषेऽपि **भगवानि**त्युपचारः । **अशेषमूर्तिः** सर्वत्वेन भ्रान्तिसिद्ध इत्याशयः । **न तु वस्तुभूतः** 'पुमान् न देवो न नरो न पशुर्न च पादपः", "चतुर्विधोऽपि भेदोऽस्य मिथ्याज्ञाननिबन्धनः" इत्यादिवादात् न देवादिजडवस्तुरूपः ; यद्वा वक्ष्यमाणशैलादिकृत्स्नजगद्वस्तुरूपः । अत्र स्वरूप-साक्षि-वृत्तिज्ञानानां प्रपञ्चरूपविकृत्ययोगात् **विज्ञान**शब्दो विविधं ज्ञायतेऽनेनेत्यविद्याविषयः । **विजृम्भितानि**—अध्यस्तानि [इत्यर्थः] । भेदस्य दोषकल्पितत्वं व्यतिरेकेण द्रढयति **यदेति** । **शुद्धम्**—अविद्यामुक्तम् । **निजरूपि** तन्मूलभेददृष्टिशून्यम् । तत एव **सर्वकर्मक्षयेऽपास्तदोषं** कर्मसाध्यक्लेशादिरहितम् । **संकल्प** इहाविद्या ; "[2]अविद्यातरुसंभूति" इति एतत्स्थाने दर्शनात् ; "विज्ञानविजृम्भितानि" इत्युक्तस्यैव चात्र परामर्शात् समन्तात्, ब्रह्मणैकीकृत्य वा कल्प्यन्तेऽनेन

1 ततमं = व्याप्ततमम् । 2 "अविद्यातरुसंभूतिबीजमेतत् द्विधा स्थितम्" इति ह्यविद्या तरुत्वेनोक्ता ।

"तस्मान्न विज्ञानमृतेऽस्ति किञ्चित् क्वचित् कदाचिद् द्विज! वस्तुजातम् ।
विज्ञानमेकं निजकर्मभेदविभिन्नचित्तैर्बहुधाऽभ्युपेतम् ॥
ज्ञानं विशुद्धं विमलं विशोकमशेषलोभादिनिरस्तसङ्गम् ।
एकं सदैकं परमः परेशः स वासुदेवो न यतोऽन्यदस्ति ॥
सद्भाव एवं भवतो मयोक्तो ज्ञानं यथा सत्यमसत्यमन्यत् ।
एतत्तु यत् संव्यवहारभूतं तत्रापि चोक्तं भुवनाश्रितं ते ॥" इति ।

अस्याश्चाविद्याया निर्विशेषचिन्मात्रब्रह्मात्मैकत्वविज्ञानेन निवृत्तिं वदन्ति,—

---

भेदा इति व्युत्पत्तिसंभवाच्च । **वस्तुषु वस्तुभेदाः** । वस्तुत्वेन पृथग्भूतेषु देवादिपिण्डेषु, कल्पितेषु जीवेषु वा [1]तद्वद्भाता देवत्वादयो देवादिपिण्डाश्च न भवन्ति। देवादिप्रतिभासो न स्यादित्याशयः। उक्तप्रदर्शन-मात्रार्थतया "वस्त्वस्ति" इत्यादिश्लोकद्वयमत्र नोपात्तम् । श्लोकचतुष्टयोक्तं विजातीयभेदाभावं निगमयति **तस्मा**दिति । ज्ञानमात्रात्मनि यथादर्शनं तत्तद्बुद्ध्यादिभिरुक्तः सजातीयभेदोऽपि भ्रान्तिसिद्धतया मिथ्याभूत इत्याह **विज्ञान**मिति । **विज्ञान**शब्दाविह[2] स्वप्रकाशानन्दरूपविलक्षणज्ञानपरौ । तथापि निरसनीयत्वेना-भिमताः स्वगता भेदा दुस्त्यजा इत्यत्राह **ज्ञान**मिति । **विशुद्धम्**—अविद्योज्झितम् । अत एव **विमलं** भेददृष्टितन्मूलकर्मरहितम्। **विशोकं** कर्माभावादेव तत्फलभूतशोकमोहादिशून्यम्। **एक**मिति पूर्वोक्तात्मानु-वादः । **सदैकं** सर्वदाऽनाघ्रातविकारषट्कम् । ईदृशस्योत्पत्त्यादिकमपि अन्तःकरणवृत्तिसम्भेदादध्यस्तम् । मिथ्यात्वादेवात्र वृद्धिह्रासादिकं निषिध्यते । स्फटिकरागकल्पस्याविद्यादेरवस्तुत्वेऽपि स्वाप्नसर्पादिनीत्या निराचिकीर्षादिकमपि न विरुद्धमिति भावः। **परमः परेशः** इत्यादिना सामानाधिकरण्येन जीवेश्वर-भेदस्यापि कल्पितत्वोक्तिः । किमसौ दुरारोहः पूर्वपक्ष इत्यत्राह **सद्भाव** इति । भेददृष्टेरविद्याजन्यत्वं सत्यत्वशङ्काया निश्शेषोन्मूलनाय निगमयति **एत**दिति । **एतत्** ज्ञानमात्रस्वरूपं ब्रह्म [**भुवनाश्रितम्**] स्वाप्नप्रपञ्चकल्पेन भुवनेनाधिष्ठानतयाश्रितम् । **संव्यवहारभूतम्** समन्तात् , एकीकृत्य वा व्यवहारकर्म-भूतमिति यावत् । तत्रापि कारणमविद्येति चोक्तमित्यर्थः। चकारः "सद्भाव उक्तः" इत्यनेन भ्रमहेतूक्तेः समुच्चयार्थः। एवं वा योजना-"संव्यवहारभूतं"=भुवनकोशादिकम् , तत्रापि एतदेवाध्यासतो भुवनाश्रितं, "ज्योतींषि विष्णुः" इत्यादिना तथोक्तमिति । यद्वा—एतत्तु [**भुवनाश्रितम्**] भुवनगतं **संव्यव-हारभूतं** संव्यवहारेण प्राप्तं व्यावहारिकं सत्यत्वं यत्, तत्राप्यध्यास एव कारणमुक्तमिति । तथा च परेष्टा-नुवादे भाषिष्यते—"तस्य भुवनादेः सत्यत्वं व्यावहारिकमिति तत्त्वं तवोपदिष्टम्" इति । **चः** त्वर्थः ।

(**अविद्याया ब्रह्मात्मैक्यज्ञाननिवर्त्यत्वं मृत्युशब्दवाच्यत्वं च**)

एतावता प्रकृते किमायातमित्यत्र मुक्त्युपायस्य कर्मनैरपेक्ष्यं सिद्धपरवाक्यानुविधायि मोक्षोपाय-परवाक्यशक्त्या व्यनक्ति—**अस्या** इति । अनिर्वाच्यत्वादिविशिष्टाया इत्यर्थः । तत एव ज्ञानमात्र-

---

1 तद्वत् = वस्तुवत् ; वस्तुत्वेनेति यावत् । धर्मिणो धर्माश्च न भासेरन्नित्यर्थः ।
2 इहेति । न तु विज्ञानविजृम्भितानीत्यत्रेव अन्यार्थाविति भावः ।

"न पुनर्मृत्यवे तदेकं पश्यति", "न पश्यो मृत्युं पश्यति", "यदा ह्येवैष एतस्मिन् अदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते, अथ सोऽभयं गतो भवति", "भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः। क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे" ॥ "ब्रह्म वेद ब्रह्मैव भवति", "तमेव विदित्वाऽति मृत्युमेति नान्यः पन्थाः" इत्यादयः श्रुतयः। अत्र मृत्युशब्देनाविद्या अभिधीयते। यथा सनत्सुजातवचनम्, "प्रमादं वै मृत्युमहं ब्रवीमि सदाऽ-

---

निवर्त्यत्वम्; ब्रह्मात्मैकत्वं महावाक्यार्थः; ऐक्यदर्शनमविद्यानिवर्तकमित्याह—न पुनरिति। एकं पश्यतीति यत्, ततो न पुनर्मृत्यव इति योजना। य इति वाऽध्याहारः। तदेकं पश्यति इत्यत्र कर्तृकर्मभेदव्युदासोऽप्यभिप्रेतः। शब्दजन्यप्रत्यक्षाभिप्रायेण पश्यतीत्याद्युक्तिः। दृगधीनसिद्धेरविद्यायास्तत्कार्याणां च रोगादीनामदर्शनमत्र साध्यमित्याह—न पश्य इति। निर्विशेषात्मैक्यबुद्धिदार्ढ्यानन्तरमेव भयनिवृत्त्या तत्कारणाविद्यानिवृत्तिसूचनमाह—यदा हीति। अदृश्ये दृक्कर्मत्वरहिते। अनात्म्ये अशरीरे। आत्मना व्याप्यं हि शरीरम् आत्म्यम्। अनिरुक्ते अशब्दगोचरे। अनिलयने अनाधारे; यद्वा निलीयतेऽस्मिन् अध्यस्तैरिति निलयनमविद्या; तद्रहिते। अभयमिति प्रतिष्ठाविशेषणम्। लिङ्गव्यत्ययश्छान्दसः। क्रियाविशेषणं वा। अव्ययीभावेन भयाभावायेति वा। अथ सोऽभयं गतः इति फलोक्तिसंवादात्। प्रतिष्ठाम् ऐक्यबुद्ध्या स्थितिमित्यर्थः। बन्धकतया सिद्धान्तेष्टानां कर्मपर्यन्तानामपि धीनिवर्त्यत्वेन मिथ्यात्वं दर्शयति भिद्यते इति। हृदयग्रन्थिः अविद्या, संशयादि तत्कार्यमिति सकार्याविद्यानिवृत्तिरिहोक्ता। ननु, "तादृगेव भवति", "निरञ्जनः परमं साम्यमुपैति", "सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता" इत्यादिषु फलदशायां तादृक्त्व-साम्य[1]भेदोक्तिस्वारस्यात्, [उपासनदशायां?] "पृथगात्मानम्", इत्युक्तेश्च भेदज्ञानमेव मुक्तिहेतुः स्यादित्यत्राह ब्रह्म वेदेति। अत्राविद्याकृतभेदनिवृत्तिरवधारणद्योत्या। न ह्यत्र तद्भूतस्यातद्भूतस्य वा तद्भावः साध्यः। कर्मसमुच्चयादिनिरासार्थम् ऐक्यज्ञानेनाविद्यातरणव्यक्त्यर्थं चाह तमेवेति। "वेदाहमेतं पुरुषं महान्तम्" इति सर्वलोकप्रत्यक्षसिद्धजीवैक्येन प्रकृतो ह्यत्र तमिति परामृश्यत इति भावः। इदं वाक्यद्वयं ज्ञानस्यैव साक्षान्मोक्षसाधनत्वाय प्रागुपात्तम्; इह त्वविद्यानिवृत्त्यतिरिक्तसाध्यनिरासार्थम्। "नान्यः पन्था" इति कर्मनिषेधपरम्। आदिशब्देन 'ज्ञात्वा तमेवं मनसा हृदा च भूयो न मृत्युमुपयाहि विद्वान्' इत्यादिसंग्रहः। श्रुतय इति प्रकृत्या बहुवचनेन च श्रुतस्यैव ग्राह्यत्वं मिथस्संवादेन दार्ढ्यं च सूच्यते। उपात्तवाक्येष्वविद्यानिवृत्तिर्न भाति; मृत्युशब्दस्तु अर्थान्तरेऽपि स्यादित्यत्राह अत्रेति। मोक्षोपायवाक्येषु ज्ञाननिवर्त्यविषयत्वौचित्यादस्याविद्यात्वमिति भावः। प्रसिद्धिविरोधिशङ्कां निरस्यति यथेति। प्रमादः अनवधानता—अज्ञानम्। कार्येण वा कारणलक्षणा। अप्रमादम्—अविद्यानिवृत्तिम्। यद्वा—अत्र अमृतत्वसाधनतयोक्तः अप्रमादस्तत्त्वज्ञानम्;

---

1 भेदेति। सह ब्रह्मणेत्यत्र भोक्तृसाहित्यस्यानिष्टतया भोग्यसाहित्योक्तावपि ब्रह्मणः कर्मकारककोटिनिविष्टतया कर्तृकर्मभावरूपभेदकाकारविवक्षया भेदशब्दः। भोक्तृभोग्यगुणगुणिभेदोक्तीति यावत्। पाठान्तरं वा।

प्रमादममृतत्वं ब्रवीमि" इति ।

"सत्यं ज्ञानमनन्तं ब्रह्म" "विज्ञानमानन्दं ब्रह्म" इत्यादिशोधकवाक्यावसेयनिर्विशेषस्वरूपब्रह्मात्मैकत्वविज्ञानं च [1]"अथ योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मीति न स वेद", "अकृत्स्नो ह्येषः—आत्मेत्येवोपासीत", "तत्त्वमसि", "त्वं वा अहमस्मि भगवो देवते अहं वै त्वमसि भगवो देवते तद्योऽहं सोऽसौ योऽसौ सोऽहम्" इत्यादिवाक्यसिद्धम् । वक्ष्यति चैतदेव—"आत्मेति तूपगच्छन्ति ग्राहयन्ति च" इति । तथा च वाक्यकारः—"आत्मेत्येव तु गृह्णीयात् सर्वस्य तन्निष्पत्तेः" इति ।

अनेन च ब्रह्मात्मैकत्वविज्ञानेन मिथ्यारूपस्य सकारणस्य बन्धस्य निवृत्तिर्युक्ता[2] ॥

---

तत्प्रतिपक्षः प्रमादोऽप्यनात्मज्ञानमेव । 'अहं ब्रवीमि' इति तत्त्ववित्सिद्धान्तख्यापनपरम् ।

ब्रह्मणो निर्विशेषत्वं जीवतादात्म्यमैक्यज्ञानस्य मुक्तिहेतुत्वं च नैतेषु व्यक्तं भातीत्यत्र शोधयन् निर्विशेषत्वमुपायपरवाक्यैस्तत्त्वनिर्देशैस्तदनुसन्धानपरैश्च वाक्यैर्जीवैक्यज्ञानसिद्धिं चाह **सत्यमिति** । 'त्वं वा' इत्यादिना देवतां प्रति उक्तस्यैव तदर्थस्य—**तद्योऽहम्** इत्यादिना स्वस्मिन्ननुसन्धानं स्थापयति । उक्तस्य सूत्रकृदिष्टत्वमाह—**वक्ष्यतीति** । **एतदेव** । न त्वदिष्टमिति भावः । **आत्मेति** । स्वानन्यत्वेनेति यावत् । सूत्राभिप्रेतं तद्विदुक्त्या स्पष्टयति—**तथेति** । **सर्वस्य तन्निष्पत्तेः**—भातस्य सर्वस्य तस्मिन्नध्यस्तत्वादित्यर्थः । बाधावस्थायामधिष्ठानभूतब्रह्मात्मतया परिशिष्टत्वादिति भावः ।

[3]अद्वैतधीकरणस्य वाक्यस्य सूत्रवाक्याभ्यां सूचितमनुग्राहकं (?) वचः सन्मूलाः(नुग्राहकं "स च समूलः"?) इत्यादिना प्रागुक्तमेव चोद्योत्थापनायाऽऽह—**अनेनेति** । सत्यभेदबाधस्वरसेनेति भावः । चः पूर्ववदुभयार्थः । "द्वितीयाद्वै भयं भवति" इत्यादिसूचनाय ब्रह्मात्मैकत्वोक्तिः । मिथ्याभूतस्य

---

1 अकृत्स्नो ह्येष इति वाक्ये एकत्वज्ञानमस्पष्टम् । 'स योऽत एकैकमुपास्ते' इति तत्पूर्ववाक्यतोऽपि तन्न विज्ञायते । अतः एकैकमिति वाक्यार्थस्य व्यक्तदर्शकं अथ योऽन्यां देवतामिति वाक्यं पश्चात्तनमेव पूर्वं प्रदर्श्य अकृत्स्न इति वाक्यं पश्चाददात्तेति मन्तव्यम् । भेदज्ञाननिषेधे दर्शिते हि आत्मेत्येवेति वाक्यमैक्यपरमिति स्फुटं भवेत् । अथ योन्यामित्यारभ्य उपासीतेत्यन्तं वाक्यानुपूर्व्यमिति न मन्तव्यम् । लघुसिद्धान्तेऽपीदं टिप्पणे दर्शितम् ।

2 श्रुत्युपन्यास आसीत्; उपपत्तिरप्यस्तीति ज्ञापनायेदं वाक्यमिति युक्तेतिपदेन ज्ञाप्यते ।

3 ननु अनेन चेति वाक्यं किमर्थम् । तदर्थस्य लघुपूर्वपक्षान्ते, "सचसमूलोऽपारमार्थिकत्वादैक्यज्ञानेनैव निवर्त्यते" इति प्रागेवोक्तत्वादित्याशंकायां, वाक्यस्यार्थनिर्णयायानुग्राहकतर्कसापेक्षत्वात् अनुग्राहकतर्कप्रदर्शनमत्र । अत एवात्र युक्तेति पदप्रयोगः। प्रागुक्तमेवार्थं तदर्थं ज्ञापयतीति। न केवलमेतावत्; उपरि चोद्योत्थापनपूर्वकपरिहारेण प्रागुक्तस्थापनार्थमपीत्याह । अत्राहुरस्मदाचार्याः—अत्र वाक्ये वचः सन्मूला इत्येतदशुद्धम् । स च समूल इति शोधनीयम् । न च सन्मूल इति वाक्यं प्रागुक्तमस्ति । न च वाक्यस्य वाक्यमेवानुग्राहकं भवति । तथा प्रागुक्तमेवेत्यत्र वाक्यच्छेदोऽप्ययुक्त इति । सहृदयश्लाघनीया स्वाचद्भुतेयं शोधनशक्तिः । अनुकूलतर्कप्रदर्शनमेवात्रेति समन्तरवाक्यतोऽपि स्पष्टम् ।

**ननु च सकलभेदनिवृत्तिः प्रत्यक्षविरुद्धा कथमिव शास्त्रजन्य[वि]ज्ञानेन क्रियते ॥ कथं वा, रज्जुरेषा न सर्प इति ज्ञानेन प्रत्यक्षविरुद्धा सर्पनिवृत्तिः क्रियते ॥ तत्र द्वयोः प्रत्यक्षयोर्विरोधः, इह तु प्रत्यक्षमूलस्य शास्त्रस्य प्रत्यक्षस्य चेति चेत्— तुल्ययोर्विरोधे वा कथं बाध्यबाधकभावः ? ॥**

**पूर्वोत्तरयोर्दुष्टकारणजन्यत्वतदभावाभ्यामिति चेत्-शास्त्रप्रत्यक्षयोरपि समानमेतत् । एतदुक्तं भवति—बाध्यबाधकभावे तुल्यत्व-सापेक्षत्वनिरपेक्षत्वादिः अकारणम् ;**

---

ज्ञानेतरकर्मनिवर्त्यत्वे सत्यत्वं स्यात । तच्च मानविरुद्धम् । न च रज्जुसर्पादिनिवृत्तौ मन्त्रौषधदण्डघाताद्यपेक्षेति भावः । अपुनरङ्कुरत्वाय सकारणत्वोक्तिः ॥

(शास्त्रजन्यविज्ञानेन बन्धनिवृत्त्युपपत्तिः)

आस्तामनुकूलस्तर्कः ; प्रतिकूलस्तु सिद्ध इत्यभिप्रायेण चोदयति **ननु चे**ति । बाधकतयेष्टयोः शास्त्रानुमानयोः शब्दार्थस्वरूपतद्व्युत्पत्तीनां व्याप्तिधर्मिलङ्गादीनां च सिद्ध्यर्थमुपजीव्यं प्रत्यक्षं न ताभ्यां बाध्येत । अन्यथा—आदित्यो यूपः, पावकोऽनुष्णः इत्यादेरपि प्रत्यक्षबाधकत्वं स्यात् । चन्द्रादिभेदबाधकस्य तु तत् नोपजीव्यमित्यभिप्रायेण **सकल**शब्दः । सकलभेदबाधे ह्युपजीव्यबाधोऽप्यन्तर्गतः । **कथमिव**—न कथञ्चित् । प्रत्यक्षविरुद्धं शास्त्रमेव बाधितमुख्यार्थं भाक्तं नेयमिति भावः ।

अत्र किं प्रत्यक्षत्वान्न बाध्यम्, उत परोक्षत्वान्मूलित्वाच्च न बाधकमिति शङ्काद्वये प्रथमं परिहरति **कथं वे**ति । प्रत्यक्षशब्द इहापरोक्षमात्रपरः ; बाधात्पूर्वमनाभासत्वाभिमानो बाधश्च प्रपञ्चरज्जुसर्पभ्रमयोः सम इति भावः । मूलित्वादिना न शास्त्रं बाधकमिति शङ्कते **तत्रे**ति । **प्रत्यक्षयोः**-अपरोक्षयोरित्यर्थः । इदं च मूलमूलित्वरहितयोः प्रत्यक्षपरोक्षयोरप्युपलक्षणम् । अत एवेह दूष्यं निष्कृष्यानुवक्ति **इहे**ति । सकलभेदनिवृत्तावित्यर्थः । वैषम्यव्यक्त्यै **तु**शब्दः । **प्रत्यक्ष**शब्दोऽत्र प्रत्यक्षप्रमाणविषयः[1] । **द्वयोः प्रत्यक्षयो**रित्युक्तस्य तुल्यबलत्वस्य बाधं प्रति अप्रयोजकत्वात्, अन्यथा [2]प्रकरणसमेऽतिप्रसङ्गात् विपरिवर्तप्रसङ्गाच्चान्यत् प्रयोजकं शिक्षयितुमाह—**तुल्ययो**रिति । चोद्यत्रयनिवृत्त्यै सिद्धान्तीष्टं प्रयोजकं शङ्कते **पूर्वे**ति । **पूर्वोत्तरयो**रिति क्रमो न नियतः । उक्तं प्रयोजकमपि प्रस्तुते तावदस्तीत्याह **शास्त्रे**ति । शास्त्रशब्द इह तज्जन्मधीलक्षकः । धीद्वयविवेकार्थं विशेषविवक्षया वा तत्कारणे(तत्करणे)ऽन्वयोक्तिः । **एतत्**—वैषम्यमित्यर्थः । ननु दुष्टहेतुजत्वस्य बाध्यताहेतुत्वमुपजीव्यत्वाद्यभावेन तुल्यत्वे सति स्यात्, उपजीव्यबाधे चाधर्मत्वसाधकहिंसा[त्वा?]द्यपि प्रमाणं स्यादित्यत्राह **एतदुक्त**मिति । तुल्यत्वोक्तिर्दृष्टान्तार्था । तद्विशिष्टं वा दुष्टहेतुजन्यत्वादिकं विवक्षितम् । **आदि**शब्देनोपक्रम-अपच्छेदाधिकरणोक्तनियतानियतपौर्वापर्यादेः परोक्षत्वादेश्च संग्रहः । **अकारणम्**—अप्रयोजकम् ; अव्याप्तेरिति शेषः । उक्तमर्थमुदाहरणस्थेन तर्केण द्रढयति **ज्वाले**ति । कारणं

---

1 विषय इति । प्रत्यक्षप्रमाणपर इत्यर्थः । 2 प्रकरणसमे = सत्प्रतिपक्षे ।

**ज्वालाभेदानुमानेन प्रत्यक्षोपमर्दायोगात्। तत्र हि ज्वालैक्यं प्रत्यक्षेणावगम्यते। एवं च सति द्वयोः प्रमाणयोर्विरोधे यत् सम्भाव्यमानान्यथासिद्धि तत् बाध्यम्। अनन्यथासिद्धम् अनवकाशमितरत् बाधकमिति सर्वत्र बाध्यबाधकभावनिर्णय इति। तस्मादनादिनिधन-अविच्छिन्नसम्प्रदाय-असम्भाव्यमानदोषगन्ध-अनवकाशशास्त्रजन्यनिर्विशेषनित्यशुद्ध बुद्ध-मुक्त-**

---

चेदित्यध्याहार्यम्। **अयोगादिति** प्रसज्यमानोक्तिः। ननु प्रत्यक्षं वर्तमानग्राहितया ज्वालास्वरूपं गृह्णाति; भिन्नसन्तताविव सूक्ष्मदृशामेकसन्तताव‍पि ज्वालाभेदः प्रत्यक्षसिद्ध इत्यत्राह **तत्रेति**। **प्रत्यक्षशब्द इह** प्रत्यभिज्ञाख्यविशेषविषयः। सा चात्र भ्रान्तिरूपा पटुतरदृष्टीनामपि पूर्वापरकालवर्त्यैक्यविषया अत्यन्त सादृश्य-सादेश्यादिभिर्जायत एव। अतो विरोधो बाधश्चात्र सिद्ध इति भावः। तर्हि प्रसिद्धस्याप्रयोजकत्वे प्रयोज्यं [1]निष्कारणं स्यादित्यत्राह— **एवं च सतीति**। **चः** शङ्कानिवृत्त्यर्थः; समुच्चयार्थो वा; अव्याप्त्या च सह तर्कबाधे(तद्बाधे) च सतीति यावत्। सजातीययोर्विजातीययोर्वेति न निर्बन्ध इत्यभिप्रायेण **द्वयोरि**त्युक्तम्। **प्रमाणयोः**। बलविमर्शपूर्वं मानत्वेन भातयोरित्यर्थः। **विरोधे** मिथो विषयापहाररूपे। **अन्यथासिद्धिः**-स्वविषयसत्यत्वमन्तरेणापि स्वरूपलाभः। तत्र हेतुत्वेन **सावकाशत्वम्** आकृष्टव्यम्। तच्च द्विचन्द्रादिधीवत् अप्रमाणकोटिनिवेशार्हत्वाद्वा पदाहवनीयादिनयेन अविरुद्धविषयलाभाद्वा स्यात्। **अनन्यथासिद्धम्**— स्वविषयमिथ्यात्वेऽनुपपन्नस्वरूपम्, विरुद्धमबाधित्वोपत्तुम[2]नर्हत्वाद्वा (मनर्हं वा ?)। तत्र हेतुरनवकाशत्वम्। तच्च पूर्वोक्ता[3]वकाशद्वयाभावसमुच्चयरूपम्। **इतरत्**। अनादृतसाजात्यादिविशेषमिति भावः। **सर्वत्र**; तुल्यातुल्योदाहरणेषु तार्तीयबाधस्थलेषु चेत्यर्थः। **निर्णयः**-प्रमाणतर्कसिद्धोऽध्यवसायः। **इति**शब्दः पूर्वो हेतौ, उत्तरः समाप्तौ। **समानमेत**दित्यत्राभिप्रेतं शास्त्रप्राबल्यं विवृण्वन् **एतदुक्त**मिति प्रक्रान्तं निगमयति **तस्मा**दिति। अस्मदुक्तस्यैव प्रयोजकत्वादित्यर्थः। यद्यपि— अविद्यानिवृत्तौ वेदोऽपि न स्यात्; तथापि सर्गप्रलयकालेषूत्पत्तिनाशाभावात् **अनादिनिधन**त्वोक्तिः। तद्विषयैव— "अनादिनिधना ह्येषा वागुत्सृष्टा स्वयंभुवा" इति स्मृतिरिति भावः। **अविच्छिन्नसम्प्रदाय**त्वोक्त्या मन्वन्तरादिष्वविच्छेदेन विप्लवासम्भवः सूच्यते। "प्रतिमन्वन्तरं चैषा श्रुतिरन्या विधीयते।" इत्येतदपि कालविशेषाद्यनुगुणशाखाविशेषप्रवर्तनपरम्; अन्यथा, "ब्रह्म स्वयम्भ्वभ्यानर्षत्" इत्यादिभिर्विरोधात्। सर्तव्यत्वे सति अस्मर्यमाणकर्तृकत्वादित्यपौरुषेयत्वसाधकं चात्र सूचितम्। अत एव वक्तृदोषसम्भवः। मन्वाद्याप्तवाक्यानां श्रुतिविरोधे क्वचिद्बाध इष्टः; न तथेत्यभिप्रायेण **गन्ध**शब्दः। एवमप्रमाणकोटिनिवेशोऽपास्तः॥ विरुद्धविषयोऽपि नास्तीति व्यवस्थै **निर्विशेष**त्वाद्युक्तिः। **नित्य**शब्दः शुद्धत्वादौ सर्वत्र योज्यः; अबाधपरो वा। **शुद्धम्**— अविद्यासाक्षित्वावस्थायामपि वस्तुतस्तद्रहितम्। तेन **बुद्धम्**— अतिरोहितनित्यप्रकाशम्। तत एव **मुक्तं** सर्वदा कर्मतत्फलवियुक्तम्।

---

1 **निष्कारणं=प्रयोजकरहितम्। 2 अनर्हमिति पाठ एव पूर्वग्रन्थश्रुतप्रकाशिकादिसर्वानुगुणः।**
**3 अवकाशद्वयेति। अप्रमाणकोटिनिवेशार्हत्व-अविरुद्धविषयलाभरूपावकाशेत्यर्थः।**

स्वप्रकाशचिन्मात्रब्रह्मात्मभावावबोधेन सम्भाव्यमानदोष - सावकाशप्रत्यक्षादिसिद्धविविध-विकल्परूपबन्धनिवृत्तिर्युक्तैव । सम्भाव्यते च विविधविकल्पभेदप्रपञ्चग्राहिप्रत्यक्षस्यानादि-भेदवासनादिरूपाविद्याख्यो दोषः ॥

ननु अनादिनिधनाविच्छिन्नसम्प्रदायतया निर्दोषस्यापि शास्त्रस्य, "ज्योतिष्टोमेन स्वर्गकामो यजेत" इत्येवमादेर्भेदावलम्बिनो बाध्यत्वं प्रसज्येत ॥ सत्यम्—पूर्वापरापच्छेदे पूर्वशास्त्रवत् मोक्षशास्त्रस्य निरवकाशत्वात् तेन बाध्यत एव । वेदान्तवाक्येष्वपि सगुणब्रह्मो-

स्वप्रकाशं मिथ्यात्वप्रयोजकदृश्यत्वोज्झितम् । तत्र हेतुश्चिद्रूपत्वम् । अत्र निषेधकज्ञानाश्रयत्वस्यापि मिथ्यात्वशङ्क्यै(व्यवच्छित्त्यै) मात्रशब्दः । ब्रह्मात्मभावः—ब्रह्मण एव प्रत्यगात्मत्वम् । प्रत्यक्षस्य सम्भाव्यमानदोषत्वं–प्राचुर्येणान्यत्र दोषदर्शनादन्यत्रापि दोषशङ्कार्हत्वम् । तत एवानुमानादेरपि शङ्कितदोषत्वाय आदिशब्दः। देवादिभेदैस्तदवान्तरैश्च बन्धस्य विविधविकल्परूपत्वम् । विशेषतः कल्प्यत इति विकल्पः। एवकारः—प्रतिकूलतर्कासम्भवपरः । ननु काचाद्यभावान्निर्दोषत्वेन प्रसिद्धे(द्धेः)प्रत्यक्षे दोषो दुर्वचः ; तज्जातीये दोषदृष्ट्याऽन्यत्रापि तच्छङ्कायां वेदे बाधयत्वादिभिस्तथा क्लृप्तिः स्यादित्यत्राह सम्भाव्यते इति । चः शङ्कानिवृत्त्यर्थः ; बाधकप्रत्ययेन सह कारणदोषनिश्चयस्य समुच्चयार्थो वा । भेदप्रपञ्चः निजकर्मभेदविभिन्नचित्तैरविद्याकल्पितश्चिदचिद्विस्तारः । प्रत्यक्षस्येति भेदग्राहकमात्रस्योपलक्षणम् । आदिशब्देन मूलाविद्यां भेददृष्टिं च संगृह्णाति । एतेषु यथार्हमन्योन्याश्रयादिनिरासाय अनादिशब्दः । एतेषां दोषत्वम्, "वासनारेणुकुण्ठितः", "अविद्यासञ्चितं कर्म" इत्यादिभिस्सिद्धम् ।

(श्रुतीनामपच्छेदन्यायेन बाध्यबाधकभावः)

भेदग्राहकप्रत्यक्षादीनामद्वैतश्रुतिविरोधात् बाध्यत्वमुक्तम् ; तत्रातिप्रसक्त्या चोदयति नन्विति । अपिः सदोषनिर्दोषसमुच्चयार्थः ; विरोधार्थो वा । बाध्यत्वप्रयोजकभेदावलम्बित्वव्यक्त्यै ज्योतिष्टोमा-द्युक्तिः । द्वैतीयभेदावलम्बिनी तृतीयादिदशाध्यायी । आदिशब्देन कर्मविध्यन्तरसंग्रहः । बाध्यत्वोक्त्या प्रमाणलक्षणविरोधोऽपि सूचितः ।

तत्र [1]धर्मप्रमाणस्य साकल्येनांशतोऽपि वा । पादेन वा त्रिपाद्या वा ह्यप्रामाण्यमपाकृतम् ॥

इष्टप्रसङ्गोऽयमित्याह सत्यमिति । यद्वा—बाध्यत्वमस्ति ; तावता सदोषत्वमप्रामाण्यं च न स्यादित्यर्धाङ्गीकारः ; मिथ्यात्वेऽपि दृष्टिविधिनयात् साध्यसाधनभावे व्याहत्यतिरिक्तं प्रामाण्यमिति भावः । अङ्गीकृतं निर्दोषस्य बाध्यत्वांशं पौर्वापर्यरूपविशेषेऽपि स्वोक्तबाधप्रयोजकव्याप्तिं च श्रौतदृष्टान्तेन विवृणोति— पूर्वेति । मोक्षशास्त्रस्य-बन्धरूपभेदनिवर्तकतत्त्वावेदकवाक्यस्येत्यर्थः । "पञ्च ऋत्विजः समन्वारब्धाः सर्पन्ति । अध्वर्युं प्रस्तोताऽन्वारभते, प्रस्तोतारं प्रतिहर्ता प्रतिहर्तारमुद्गाता उद्गातारं ब्रह्मा ब्रह्माणं यजमानः" इत्यस्मिन् प्रयोगे, "यदि बहिष्पवमानं सर्पतां प्रस्तोताऽपच्छिद्येत" इत्यादिना

1 तत्र—प्रमाणलक्षणे मीमांसाप्रथमाध्याये । पादेन, प्रथमेन । अर्थवादादेरप्रामाण्यं पुनराशङ्क्य प्रामाण्यस्थापनादाह त्रिपाद्येति । प्रथमद्वितीयचतुर्थैरित्यर्थः । तृतीयपादस्य स्मृत्यादिविषयत्वात् ।

पासनपराणां शास्त्राणामयमेव न्यायः ; निर्गुणत्वात् परस्य ब्रह्मणः । ननु च, "यस्सर्वज्ञः सर्ववित्", "पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च", "सत्यकामः सत्यसङ्कल्पः" इत्यादिब्रह्मस्वरूपप्रतिपादनपराणां शास्त्राणां कथं बाध्यत्वम् । निर्गुणवाक्यसामर्थ्यादिति ब्रूमः ।

एतदुक्तं भवति—"अस्थूलमनण्वह्रस्वमदीर्घम्", "सत्यं ज्ञानमनन्तं ब्रह्म", "निर्गुणम्", "निरञ्जनम्" इत्यादीनि वाक्यानि निरस्तसमस्तविशेषकूटस्थनित्यचैतन्यं ब्रह्मेति

---

अपच्छेदप्रायश्चित्तविधौ, "यदि प्रतिहर्ता, पशुभिर्यजमानो व्यृध्येत ; सर्ववेदसं दद्यात्, यद्युद्गाता, यज्ञेन यजमानो व्यृध्येत; अदक्षिणः स यज्ञः संस्थाप्यः" इत्युक्तम् । तदिदं नैमित्तिकद्वयमेकस्मिन् प्रयोगे विरुद्धम् । तत्र युगपदपच्छेदे उद्गातुः प्रायश्चित्तं प्रतिहर्तुः प्रायश्चित्तं वा कार्यम् । पूर्वापरापच्छेदे, यो जघन्योऽपच्छिद्येत तस्य प्रायश्चित्तमेवेति व्यवस्थापितम् । तदुक्तम्, "पूर्वापरापच्छेदे पूर्वदौर्बल्यं प्रकृतिवत्" इति । अत्रैवं पूर्वपक्षः-उपक्रमनयेनासञ्जातविरोधितयोदितत्वात् पूर्वस्य प्राबल्यम्; परस्य तु उदितविपक्षसन्निधावेव प्रवृत्तेर्दौर्बल्यमिति । सिद्धान्तस्तु—परस्मिन्ननुत्पन्ने तदसंनिधानात् परमबाधित्वा पूर्वस्योदयः । इतरस्य तु पूर्वोदितविरोध्यबाधेनोदयायोगात् निमित्तोदये नैमित्तिकशास्त्रोदयावश्यम्भावाच्च परप्राबल्यम् । उपक्रमोपसंहारयोस्तु विरुद्धस्य परस्यानुदय एवेति । इह तु कर्मिणां मुक्तौ पूर्वप्राबल्येन अर्थक्रमात् तदनुगुणपाठक्रमाच्चापच्छेदवत् पूर्ववृत्तकर्मशास्त्रोपमर्देन भोगनिवृत्तिरूपमुक्तिशास्त्रोदयः । ईदृशोदाहरणेष्वेव, "पूर्वाबाधेन नोत्पत्तिरुत्तरस्य हि सिध्यति" इत्युच्यते । एवमुत्सर्गापवादाद्युदाहरणान्तरेष्वपि **निर्दोषवाक्यसिद्धस्य निरवकाशेन बाधो** निदर्शनीयः ॥ ननु वेदान्तेष्वपि सगुणोपास्तिविधीनां भेदावलम्बित्वं सिद्धम् । न च तेषां निर्गुणवाक्यापेक्षया पूर्वत्वनियमः । अतस्तेषु नापच्छेदनीतिरित्यत्राह **वेदान्तेति** । **सगुणब्रह्मोक्तिर्दृष्ट्यादेरुपलक्षणार्था** । **उपासनपराणामित्यनेन**, सिद्धे तात्पर्यं नास्तीति व्यज्यते । पौर्वापर्याभावेऽपि तत्फलभूतबाधस्य तात्पर्यलब्धत्वदर्शनात् **अयमेव न्यायः** इत्युक्तम् । "सङ्कल्पादेवास्य पितरः समुत्तिष्ठन्ति", "जक्षत् क्रीडन्" इत्यादिसांसारिकफलोक्त्या तादृशविद्यानां मोक्षशास्त्रापेक्षया कर्मशास्त्रवत् आर्थं पूर्वत्वं च सिद्धम् । यद्वा-निर्दोषत्वेऽपि **निरवकाशवाक्येन बाधः स्यादित्युक्त एव न्याय** इत्यर्थः । गुणविधिरेवात्र आलम्भविधि[1]न्यायान्निरवकाश इत्यत्राह **निर्गुणत्वादिति** । निर्विशेषस्वरूपपरतया निरवकाशैर्वाक्यैर्गुणबाधादिति भावः । विधिपदानन्वयेन सिद्धविषयाणां सगुणवाक्यानां पूर्वत्वाऽऽनन्यपर्ययोरयोगात् न बाध्यत्वं स्यादित्यभिप्रायेण चोदयति–**ननु चेति** । **कथमिति** प्रतिक्षेपवचनं प्रश्नवद्भावयन् पौर्वापर्यमभिसन्धाय प्रतिवक्ति **निर्गुणेति** ।

[अनन्यपरसगुणवाक्यबाधसमर्थानि कानि वाक्यानि? तेषां च तद्बाधे कीदृशं सामर्थ्यम्? इत्यत्राह **एतदुक्तमिति** । **कूटस्थम्**—विश्वविकाराध्यासे तन्निवृत्तौ च स्वयं कूटवत् अविकृतम् ; कूटे=

---

1 आलम्भविधिः=अग्नीषोमीयं पशुमालभेतेत्यादिः ।

प्रतिपादयन्ति; इतराणि च सगुणम्। उभयविधवाक्यानां विरोधे तेनैवापच्छेदन्यायेन निर्गुणवाक्यानां गुणापेक्षत्वेन परत्वाद्बलीयस्त्वमिति न किंचिदपहीनम्।

ननु च—"सत्यं ज्ञानमनन्तं ब्रह्म" इत्यत्र सत्यज्ञानादयो गुणाः प्रतीयन्ते॥ नेत्युच्यते; सामानाधिकरण्येनैकार्थत्वप्रतीतेः। अनेकगुणविशिष्टाभिधानेऽप्येकार्थत्वमविरुद्धमिति चेत्—अनभिधानज्ञो देवानांप्रियः। एकार्थत्वं नाम सर्वपदानामर्थैक्यम्। विशिष्टपदार्थाभिधाने विशेषणभेदेन पदानामर्थभेदोऽवर्जनीयः। ततश्च एकार्थत्वं न

---

ध्यसनीये स्वयं सत्यतया सर्वाधिष्ठानत्वेन स्थितं वा। इतराणि—उपात्तानि 'यस्सर्वज्ञः' इत्यादीनि, [1]तादृशान्यपि। चस्त्वर्थः; विरुद्धवर्गद्वयसमुच्चयपरो वा। तेनैव मुक्तिमुक्तिशास्त्रयोरिह प्रदर्शितेनैवेत्यर्थः। निषेध्यप्रसञ्जकापेक्षया निषेधकस्य परत्वमर्थसिद्धमित्यभिप्रायेण गुणापेक्षत्वेनेत्युक्तम्। सगुणवाक्यानां निर्दोषत्वेऽप्यार्थेन पूर्वत्वेन बाध्यत्वम्, उपास्तिविधिशेषत्वक्लृप्त्या साफल्यात् कथञ्चित् प्रामाण्यं च स्यादित्यभिप्रायेणाह न किञ्चिदिति।

अत्र सत्यत्वादिशिष्टपरं वाक्यं कथं निर्गुणवाक्यतयोपात्तमिति चोदयति—ननु चेति। सत्यज्ञानादयः; "द्व्येकयोः" इतिवत् भावप्रधानोक्तिः। आनन्त्यमपि व्यापित्वरूपो गुण इति बुद्ध्या बहुवचनम्। अयं भावः—अत्र गुणप्रतीतिर्नापह्नोतुं शक्या; तस्याश्च बाधाभावात् स्वतः प्रमात्वं सुस्थमिति॥ नेयं प्रमितिरिति युक्त्या स्थापयिष्यत इत्याह नेत्युच्यते इति। एकार्थतात्पर्यहिःस्वरूपवृत्त्या गुणभेदधीर्बाध्येत्याह सामानाधिकरण्येनेति। कारकभेदक्रियैकत्वबुद्ध्योरिव विशेषणभेदविशेष्यैक्यधियोरविरोधात् न बाध्यबाधकतेति चोदयति अनेकेति। समानाधिकरणव्यधिकरणपदानां वृत्तिवैषम्यम्, एकार्थशब्देनान्ययोगव्यवच्छेदं च न जानासीत्युपालम्भमुखेन प्रतिवक्ति अनभिधानेति। देवानांप्रिय इति अज्ञातनाम्नामुपचारप्रयोगः; इह त्वमूर्ख्यात इत्यर्थः। छाग इत्येके। तदापि, अज्ञ इति यावत्। तदज्ञातं स्वाभिप्रेतं विवृणोति एकार्थत्वमिति। त्रेधा हि पदानामर्थैक्यम्—प्रकृतिप्रत्ययसमुदायबोध्यप्रातिस्विकविशेष्यैक्यम्, "अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्यात्" इत्येतावता मिथोऽन्वितार्थपदजातबोध्यप्रधानैक्यम्, पदभेदेऽर्थभेदाभावश्चेति। तेष्वाद्यं पदमात्रे; द्वितीयं व्यधिकरणवाक्ये; तत्र तृतीयमिह मदुक्तम्। तच्च, "भिन्नप्रवृत्तिनिमित्तानां शब्दानाम्" इत्यादिपतञ्जलिवाक्यप्रसिद्धमित्यभिप्रायेण नामशब्दः। एवमप्यस्य प्रधानप्रतिपाद्यविशेष्यभेदाभावमात्रपरत्वे को विरोध इत्यत्राह विशिष्टेति। विशेषणभेदेनेत्येतत् बहुधा योज्यम्—विशेषणानां मिथो विशेष्याच्च भेदेन, विशेषणभेदेनैव विशिष्टभेदाद्विशेष्यभेदप्रसङ्गेन चेति।

**भेदकं हि स्वभावेन प्रत्यक्षाद्यनिराकृतम्। विशेषणान्तराधारात् स्वाधारं भेत्तुमर्हति॥२२९**

'श्यामो युवा' इत्यादौ दृष्टत्वादेव विशेषणानां भेदकत्वस्वभावोऽपोदितः। इह तु भेदकं विशेषणं

---

1 यः सर्वं इत्यादि पूर्वोपात्तवाक्यानि तत्तुल्यानि चेतरपदार्थः।

**सिध्यति ॥ एवं तर्हि सर्वपदानां पर्यायता स्यात् ; अविशिष्टार्थाभिधायित्वात् ॥ एकार्थाभिधायित्वेऽप्यपर्यायत्वमवहितमनाः शृणु—एकत्वतात्पर्यनिश्चयादेकस्यैवार्थस्य तत्तत्पदार्थविरोधिप्रत्यनीकत्वपरत्वेन सर्वपदानामर्थवत्त्वमेकार्थत्वमपर्यायता च ।**

---

मेदं विशेष्यमिति व्यवस्थाया नित्यातीन्द्रिये शब्दोपस्थाप्ये कः प्रतिरोद्धा ॥ **अनावृत्त एकवचनान्तो** विशेष्यशब्द[1] इति चेन्न—जात्यैक्यविवक्षयाऽपि तदुपपत्तेः ; यथा, 'खण्डो मुण्डो गौः' **इति ॥ प्रत्यक्ष** बलात् तत्र भेद इति चेन्न ; अप्रत्यक्षेऽपि तथोक्तौ व्यक्तिभेद[2]बुद्धेः। तद्वत् ब्रह्मणि । **किञ्च तेन तेन पदेन** उद्दिष्टे विशिष्टे पदान्तरार्थविधौ विशेषणानां मिथः समवायः स्यात् , [3]उपादेयस्य यावदुद्देशव्यापित्वात् । तथा च तेषां विशेषणस्वरूपाद्भेदेन नानाविशिष्टापत्तिः । किञ्च—

**विशिष्टार्थाभिधायित्वे मेदकेष्वपि मेद्यवत् । अन्योन्यसमवायैक्यप्रसङ्गौ चात्र तन्त्रितौ॥ ३४०**

तथा हि--विशेषणभेदेन विशेषणानां परस्परसमवायतादात्म्याभ्यामन्यथाभावेन पदानामव्युत्पन्नाप्रामाणिकार्थभेदः, विशिष्टविधावपि समानविभक्तिर्विशेष्यांशमिव विशेषणांशमप्येकीकुर्यात् ; प्रकृत्युपस्थापितैक्यपरत्वात् । तदाऽपि स्वान्यैक्याद्विशेषणानां स्वस्माद्भिदः स्यात् इत्यादयः प्रसङ्गा इहाभिप्रेताः । एतैः फलितं प्रसङ्गान्तरमाह—**तत्र** इति । विशिष्टस्यैवमनभिधेयत्वे विशेषणमात्रोक्तिर्दूरापास्तेति मत्वा विशेष्यमात्रपक्षे चोदयति **एवं तर्हीति** ; उक्तप्रकारेण विशेष्यमात्रपरत्वे सतीत्यर्थः । भिन्ननिमित्तानामनुपपत्त्या निमित्तत्यागे कथं पर्यायत्वमित्यत्राह **अविशिष्ट** इति । एकपदोक्तमात्राभिधायित्वादिति यावत् । अत एव पदान्तरवैयर्थ्यात्(र्थ्यम् ?)पर्यायत्वं सामानाधिकरण्यभङ्गश्च स्यात् । आहुश्च—"नातत् तन्मन्यसे तावत् न तत् तदपि मंस्यसे । सामानाधिकरण्यं हि रूपभेदमपेक्षते ॥" इति । विवक्षितस्य लोकोत्तीर्णत्वान्नैतत् त्वरमाणेन लभ्यमित्यवहितेन क्रमेणेदं बोद्धव्यमित्यभिप्रायेणाह **एकार्थाभिधायित्वेऽपीति** । उक्तप्रसञ्जकानुवादोऽयम् । तेन त्वदुक्तं न प्रसज्यत इत्याह **एकत्वेति** । अयं भावः—वाक्यतात्पर्यानुसारेण हि सर्वत्रोपचारः । अत्र च स्वरूपप्रबुभुत्सया समानविभक्त्या चार्थैक्ये तात्पर्यं निश्चितम् । तेन विशेषणाभिधानं त्यक्तम् । तत्फलभूतव्यावृत्तिपरत्वं तु स्थितम् । तदिह विरोधिव्यावृत्तिभेदैः प्रतिपदं प्रयोजनं सामानाधिकरण्यलक्षणानुगुणमैकार्थ्यम् निमित्तभेदव्युत्पत्तिफलैः पर्यायत्वनिरासश्च स्यादिति । उक्तं च **सुरेश्वराचार्यैः**—"[4]प्रतिपद्य पदार्थं हि विरोधात् तद्विरोधिनः । पश्चादभावं जानाति वध्यघातकवत् पदात् ॥ शब्दात् प्रतीयते तावत् संगतिर्धर्मधर्मिणोः। मानान्तरादपोहस्तु न शाब्दस्तेन स स्मृतः ॥ तत्रो[5]नन्तोऽन्तवद्वस्तुव्यावृत्त्यैव विशेषणम् । स्वार्थार्पणप्रणाड्यैव परिशिष्टौ विशेषणम् ॥" इति ।

---

1 **विशेष्यशब्द इति । प्रतिरोद्धेत्यनुषञ्जनीयम् ।** 2 **व्यक्तिभेदस्य लोके प्रतीयमानत्वादित्यर्थः ।** 3 **उपादेयस्य = विधेयस्य । यावदुद्देशं = सर्वेषु उद्देश्येषु ।** 4 **आदौ भावरूपधर्मविशिष्टग्रहणं शाब्दम् । अनु व्यावृत्तिग्रहणमार्थम् । व्यावृत्तावेव तात्पर्यात् धर्मत्यागे व्यावृत्तेश्च धर्मिरूपत्वे धर्मिमात्रग्रहसिद्धिः। एवं भावरूपधर्मद्वारा व्यावृत्तिग्रहणमेव स्वार्थार्पणप्राणाड्येत्युक्तम् ।** 5 **अनन्तः = अनन्तशब्दः, परिशिष्टौ = सत्यज्ञानशब्दौ ।**

**एतदुक्तं भवति—लक्षणतः प्रतिपत्तव्यं ब्रह्म सकलेतरपदार्थविरोधिरूपम् । तद्विरोधिरूपं सर्वमनेन पदत्रयेण फलतो व्युदस्यते । तत्र सत्यपदं विकारास्पदत्वेनासत्याद्वस्तुनो व्यावृत्तब्रह्मपरम् । ज्ञानपदं चान्याधीनप्रकाशजडरूपाद्वस्तुनो व्यावृत्तपरम् । अनन्तपदं च देशतः कालतो वस्तुतश्च परिच्छिन्नाद्व्या(भव्या)वृत्तपरम् । न च व्यावृत्तिर्भावरूपोऽभावरूपो वा धर्मः ; अपितु सकलेतरविरोधि ब्रह्मैव, यथा—शौक्ल्यादेः**

[1]तद्विरोध्यभेदिनश्चाह—(न्या कु.उ.२का.) "व्यावर्त्याभाववत्तैव भाविकी हि विशेष्यता" इति ।

ननु एकत्वतात्पर्येऽपि तत्त्वमस्यादिवदुपलक्षणमुखेन स्वरूपैक्यपरत्वमस्तु । सर्वेभ्यश्च व्यावृत्तिर्विशेषतो दुर्वचा ; [2]अप्रयोजकत्वेन संग्रहेऽप्येकेनालम् व्यावृत्तीनां धर्मत्वे [3]ताभिः(?)प्रतिपदोपस्थापितव्यावृत्तिभेदात् सविशेषणत्वं, तद्वत्त्वादैकार्थ्यभङ्गो विशेष्यभेदप्रसङ्गश्च । स्वरूपत्वे तु प्रयोजनभेदाभाव इत्याशङ्क्याह **एतदुक्तमिति** । "ब्रह्मविदाप्नोति परम्" इति प्रस्तुतं ब्रह्म किमिति बुभुत्सिते, कारणत्वस्य **तटस्थतया** स्वरूपलक्षणतो अत्र तत्स्वरूपं शोध्यते । तत्र विशेषणोक्तिराम्रप्रश्ने कोविदारप्रत्युक्तिवत् स्यात् । लक्षणं च सर्वत्र व्यावृत्त्यर्थमेवेत्यभिप्रायेणाह **लक्षणत** इति । **रूपम्** इह स्वरूपम् । निश्शेषव्यावृत्तिः प्रयोजकेन संग्रहात्सुवचेत्याह—**तद्विरोधीति** । अत्र[4] **रूपं** स्वरूपं वा अनृतत्वादिब्रह्मेतरव्याप्तधर्मो वा । **अनेन**=प्रत्येकं कृत्स्नव्युदासक्षमेण । न हि पदान्तरमेवंविधमस्तीत्यभिप्रायेण **पदत्रयोक्तिः** । एकेन पर्याप्तेऽपि प्रयोजनकात्स्न्यार्थमेतावत् वक्तव्यम् । आनन्दपदस्य तूपलक्षणमेतत् । **फलतः** ; विरोधिव्युदासस्य फलत्वान्नात्र स्वरूपमात्रपरत्वं(त्वे?) विरोध इति भावः । पदानां पृथक्प्रयोजनानि व्यनक्ति—**तत्रेति** । तस्मिन् पदत्रय इत्यर्थः । प्राकरणिकेन कारणत्वेन तुच्छव्यावृत्तौ सिद्धायां शङ्कितं विकारित्वेनानृतत्वमत्र **सत्यपदेन** व्युदस्तम् । **वस्तुशब्दोऽत्र** व्यावहारिकसत्यार्थः । **अन्याधीनप्रकाशत्वं जडशब्दार्थः** । असङ्कोचात् **अनन्तपदेन** त्रिविधपरिच्छेदव्यावृत्तिरुक्ता । यदि व्यावृत्तयो भावरूपा धर्माः, तदा सत्यत्वादीन्येव स्युः; अभावरूपा अपि तत्तुल्यचोद्या इत्यत्राह **न चेति**: तदापि नैष्फल्यप्रसङ्गं परिजिहीर्षुराह-**अपितु** इति । व्यावृत्तिर्हि यथा स्वत एव स्वेतरव्यावृत्तिः तद्वद् ब्रह्मस्वरूपमेव सकलेतरविरोधित्वात् स्वयं सर्वव्यावृत्तिः ; भावाद्वैतपक्षस्तु भीरुकल्पित इति भावः । भावस्याभावत्वमेकस्यानेकत्वं च कथमित्यत्र भावान्तराभावपक्षे तिष्ठन्निदर्शयति **यथेति** । अवधारणेन धर्मान्तरानुपलम्भं व्यनक्ति अन्यथानवस्थामभिप्रेत्याह **न धर्म** इति । एवमेकस्यैव सर्वव्यावृत्तिरूपत्वे व्यावृत्तेरपि

1 तद्विरोध्यभेदिनः=अद्वैतिविरोध्याः ये भेदिनः=द्वैतवादिनः तार्किका इत्यर्थः। तत्रैकवस्तुविशेष्यत्वं नाम तद्व्यावर्त्यपदार्थप्रतियोगिकाभाववत्त्वमित्युदयनाचार्योक्त्या धर्मविधेः व्यावृत्तौ पर्यवसानमेव ज्ञायत इति भावः। 2 अप्रयोजकत्वेनेति । विशिष्यैव एकैकव्यक्तिव्यावृत्तिग्रहणस्यावश्यकत्वाभावेन, तत्र प्रयोजनविशेषाभावेन अनुगतेन प्रयोजकेन धर्मेण यथासंभवं गृहीतेन व्यक्तीनां संग्रहे त्विष्ट एकधर्ममुखेन व्यावृत्तिरेव क्रियतामित्यर्थः। प्रयोजनकात्स्न्याय सर्वव्यावृत्तिकथनमिति चेत्—तत्राह व्यावृत्तीनामिति । 3 अत्र, ताभिः सविशेषत्वम् तद्वत्त्वादैकार्थ्यभंगः प्रतिपदोपस्थापितव्यावृत्तिभेदात् विशेष्यभेदप्रसंगश्चेति पाठो युक्तः ।

4 अत्र =द्वितीयवाक्ये रूपं =रूपपदविवक्षितम् ।

**काष्ण्यादिव्यावृत्तिः तत्तत्पदार्थस्वरूपमेव, न धर्मान्तरम् । एकस्यैव वस्तुनः सकलेतरविरोध्याकारतामवगमयदर्थवत्तरमेकार्थमपर्यायं च पदत्रयम् । तस्मादेकमेव ब्रह्म स्वयञ्ज्योतिर्निर्धूतनिखिलविशेषमित्युक्तं भवति । एवं वाक्यार्थप्रतिपादने सत्येव, "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्" इत्यादिभिरैकार्थ्यम् । "यतो वा इमानि भूतानि जायन्ते", "सदेव सोम्येदमग्र आसीत्", "आत्मा वा इदमेक एवाग्र आसीत्" इत्यादिभिर्जगत्कारणतयोपलक्षितस्य ब्रह्मणः स्वरूपमिदमुच्यते, "सत्यं ज्ञानमनन्तं ब्रह्म" इति । तत्र सर्वशाखाप्रत्ययन्यायेन कारणवाक्येषु सर्वेषु सजातीयविजातीयव्यावृत्तमद्वितीयं ब्रह्मावगतम् ।**

---

पदबोध्यत्वे पदान्तरवैयर्थ्यं स्यादित्यत्र दृष्टान्तोक्तं दार्ष्टान्तिकेऽतिदिशति **एकस्येति** । शौक्ल्यं(**क्ल्यम ?**) **काष्ण्यं**मित्यादि[1] प्रतिबन्दिरिहाभिप्रेता । तत्र **अनन्त**पदे तावत् व्यावृत्तिबोधकत्वं सिद्धम्; पदान्तरयोरपि तथात्वे को विरोध इति भावः । प्रतिबन्दिवाक्यमिह प्रत्यक्षानुवादित्वान्मन्दफलम् । इदं तु न तथा; गुणपरत्वे चात्र निमित्तमात्रलाभः; तत्परित्यागे तु तात्पर्यार्थः सिद्धः(र्थस्य सिद्धिः) । अतः **अर्थवत्तर**मित्युक्तम् । व्युत्पत्तिभेदं प्रयोजनभेदं चाभिसन्धाय **अपर्याय**त्वोक्तिः । **पर्याय**शब्दोऽत्र भावप्रधानः । पर्यायत्वं यस्य नास्ति तत् **अपर्याय**मिति गतिः; यस्य पदत्रयस्य मिथः पदानि पर्याया न भवन्ति, तत् **अपर्याय**मिति वा । "अपर्यायत्वम्" **इति केचित् पठन्ति** । नात्र किञ्चित् बाधकमित्यभिप्रायेण अखण्डपरत्वं सहेतुकं निगमयति **तस्मादिति** । तात्पर्यप्राबल्यात् शङ्कितचोद्यनिस्ताराच्चेत्यर्थः ॥ **एकमेव ब्रह्मे**त्यनेन विशेष्यभेदस्य प्रसङ्ग एवापास्त इत्यभिप्रेतम् । इदमपि वाक्यं नाबुद्धबोधार्थम्; किंतु स्वतः सिद्धपरामर्शेन कल्पितविरोध्याकारनिषेधार्थमित्यभिप्रायेण **स्वयञ्ज्योति**रित्यादि उक्तम् । सत्यत्वादीनामनृतत्वादीनां तद्व्याप्यस्थूलत्वादीनां तद्व्यावृत्तीनां च **निखिल**शब्देन संग्रहः । उक्तानभ्युपगमे कारणवाक्यविरोधः स्यादित्याह **एवमिति** । ननु, "यो वेद" इत्युपास्त्यन्वयेन सगुणपरत्वान्माभूदैकार्थ्यम्; तत्राह **यतो वा इति** । कारणत्वानुवादितटस्थलक्षणवाक्यमिदम् । 'सदेव' इत्यादि तु [2]तत्प्राप्त्यै, लक्ष्यस्य निर्विशेषत्वव्यक्त्यै च पुनर्गृहीतम् । **जगत्कारणतयोपलक्षितस्य** । शाखयेव चन्द्रस्य दूरे स्थित्वा दर्शितस्येत्यर्थः । कारणवाक्योक्तस्वरूपशोधकस्य तच्छेषतया तदेकार्थत्वं युक्तम्; 'यो वेद' इत्येतच्च यच्छब्दान्वितवाक्यस्थतया नोपास्तिपरमिति भावः । 'यः सर्वज्ञः सर्ववित्' इत्यारभ्य, "तस्मादेतत् ब्रह्म नाम रूपमन्नं च जायते" इति कारणवाक्यान्तरे गुणोक्त्या तदैकार्थ्यं स्यात्, नेत्याह **तत्रेति** । कारणशोधकवाक्ययोरैकार्थ्यं सिद्धम्; मिथः कारणवाक्यानां किमुतेत्याशयः । कर्तव्ये दर्शितः शाखान्तरनयः सिद्धेऽपि समः । तेनैव सर्वेषु गुणपरत्वं किं न स्यादित्यत्रोक्तं **सजातीये**त्यादि । अपच्छेदनीत्या हि निषेधप्राबल्यं स्थापितम् । 'पराऽस्य शक्तिः' इति वाक्यविशेषवत् गुणपरत्वेव

---

1 शौक्ल्यमकाष्ण्यमलौहित्यमितिवत् ब्रह्मानन्तमजडमिति प्रयोग इति भावः ।

2 तत्प्राप्त्यै=कारणत्वप्राप्त्यै कारणत्वप्रापकवाक्यं सदेवेति ।

जगत्कारणतयोपलक्षितस्य ब्रह्मणोऽद्वितीयस्य प्रतिपिपादयिषितं स्वरूपं तदविरोधेन वक्तव्यम् । अद्वितीयत्वश्रुतिर्गुणतोऽपि सद्वितीयतां न सहते ; अन्यथा "निर्गुणम्", "निरञ्जनम्" इत्यादिभिश्च विरोधः । अतश्चैतल्लक्षणवाक्यमखण्डैकरसमेव प्रतिपादयति ॥

ननु च सत्यज्ञानादिपदानां स्वार्थप्रहाणेन स्वार्थविरोधिव्यावृत्तवस्तुस्वरूपोपस्थापनपरत्वे लक्षणा स्यात् ॥ नैष दोषः ; अभिधानवृत्तेरपि तात्पर्यवृत्तेर्बलीयस्त्वात् । सामानाधिकरण्यस्य हि ऐक्य एव तात्पर्यमिति सर्वसम्मतम् । ननु च सर्वपदानां लक्षणा न दृष्टचरी ;

---

किं न स्यात्, मा भूत् तस्य शोधकवाक्यत्वमित्यत्राह जगदिति । अद्वितीयेत्यादि(अद्वितीयस्येति?) हेतुपरम् । [1]पूर्ववाक्ये सामान्यतः प्रस्तुतस्य व्यावृत्ततया प्रतिपित्सितस्य, "तदेषाऽभ्युक्ता" इति प्रतिपिपादयिषितत्वात्, तस्य चाद्वितीयत्वेन तदन्यस्य गुणस्यावक्तव्यत्वादिति । कारणवाक्येषु निर्गुणत्वं न कण्ठोक्तम् ; अवधारणयोरन्यथाऽप्युपपत्तेः । अद्वितीयत्वोक्तिस्तु, सम्राडद्वितीयः' इतिवत् समनिषेधार्थः स्यादित्यत्राह अद्वितीयेति । अवधारणाभ्यां सजातीयादिनिरासौचित्यात्[2] समनिषेधे सिद्धे परिशेषात् बुभुत्साक्रमेणात्र(णापि ?) गुणनिषेधः प्राप्त इति भावः । गुणपरत्वे शोधकान्तरं च विरुध्येतेत्याह अन्यथेति । निर्गुणशब्दो हि स्थूलत्वादिवत् सत्यत्वादिकमपि निषेधेदिति भावः । ननु सर्वत्र लक्षणवाक्यं स्वार्थं समर्प्यैवान्यत् व्यावर्तयति ; तद्वदिहापि स्यादित्यत्राह अत इति । चः समुच्चये । सामानाधिकरण्यसामर्थ्यात् कारणवाक्यैकार्थ्यात् शोधकवाक्यान्तरैकार्थ्याच्चेत्यर्थः । एतल्लक्षणवाक्यमित्यनेन धर्मसमर्पकलक्षणवाक्यान्तरेभ्यो व्यावृत्तिः सूच्यते । अखण्डैकरसम् ; नित्यनिर्विशेषस्वप्रकाशस्वभावमित्यर्थः ।

(लक्षणाया दोषत्वपरिहारः)

"ब्रह्मविदाप्नोति परम्" इत्यनन्यथासिद्धफलकरणदर्शनकल्पितविधिशेषतया विशिष्टविधितात्पर्ये सम्भवति न लक्षणा स्याद्ध्येत्यभिप्रायेण चोदयति ननु चेति । यद्यपि वाच्ये विशेष्यांशो न त्यक्तः, तथापि द्वारत्यागात्र तस्य शक्तिगोचरत्वमिति भावः । अत्र वाच्यबहिर्भूते वृत्तिस्तावत् नास्ति । वाच्यैकदेशे प्रधानभूते विशेष्ये वृत्तिस्तु न लक्षणा ; इह [3]जहदजहल्लक्षणा वा स्यात् । सा चात्र न दोषः ; प्रत्युत विध्यनर्हवाक्यार्थज्ञानानुवादितयाऽन्यथासिद्धे वाक्ये विधिकल्पनायोगात् तदर्थमुख्यासम्भवे लक्षणा अनुगुणैवेति दर्शयितुमाह नैष दोष इति । तात्पर्यविषये शब्दस्य प्राधान्यतः प्रामाण्यात् तद्विरोधे सर्वत्र मुख्यवृत्तिदौर्बल्याल्लक्षणाप्राबल्यमाह अभिधानेति । स्वतस्सिद्धस्वरूपे कथं शब्दतात्पर्यम्; अतो गुणविवक्षा स्यादित्यत्र तद्विरुद्धे प्रागुक्तं तात्पर्यं व्यनक्ति सामानाधिकरण्यस्येति । स्वप्रकाशस्यापि निमित्तभेदवदनेकपदपरामृष्टस्यापि विशेष्यत्वान्यसंसर्गासहमैक्यमिह समानविभक्तिवेद्यम् । तच्च कल्पितभेदनिवृत्त्यर्थम् । प्रकृतिभिस्तु कल्पितान्याकारनिवृत्तिः प्राग्दर्शिता इति-उक्तं सर्वसम्मतम्=त्वयापि दुस्त्यजमिति यावत् । त्वदुक्त-

---

1 अद्वितीयस्येत्यस्य हेतुपरत्वमेवोपपादयति पूर्वेत्यादिना । 2 न समनिषेधोऽद्वितीयश्रुत्या, समस्य सजातीयाद्यन्तर्गततया तन्निषेधेनैव निषेधादिति भावः । 3 जहदिति । विशेष्ये विशिष्टतादात्म्यसंबन्धरूपा जहदजहल्लक्षणेयम् ।

ततः किम्? वाक्यतात्पर्याविरोधे सति एकस्यापि न दृष्टा। समभिव्याहृतपदसमुदायस्यैतत् तात्पर्यमिति निश्चिते सति द्वयोस्त्रयाणां सर्वेषां वा तदविरोधायैकस्येव लक्षणा न दोषाय। तथा च [1]शास्त्रस्थैरभ्युपगम्यते—कार्यवाक्यार्थवादिभिर्लौकिकवाक्येषु सर्वेषां पदानां लक्षणा समाश्रीयते। अपूर्वकार्य एव लिङादेर्मुख्यवृत्तत्वात् लिङादिभिः क्रिया कार्यं लक्षणया प्रतिपाद्यते। कार्यान्वितस्वार्थाभिधायिनां चेतरेषां पदानामपूर्वकार्यान्वित एव मुख्यार्थ इति क्रियाकार्यान्वितप्रतिपादनं हि लाक्षणिकमेव। वाक्यतात्पर्याविरोधाय

---

प्रक्रिययाऽत्र तात्पर्यस्थापकाभावाल्लक्षणैव न स्यादित्यभिप्रायेण पुनश्चोदयति **ननु चेति**। मुख्येन केनचिदंशेन क्वचित् तात्पर्यसिद्धौ अंशान्तरे ह्युपचारो दृष्ट इत्याशयः। अविरुद्धेऽन्यत्रादर्शनमकिञ्चित्करमित्यभिप्रायेण प्रतिवक्ति **ततः किमिति**। अभिप्रेतं विवृण्वन् प्रतिबन्दिञ्च सूचयति **वाक्येति**। एकपदलक्षणाया अप्यन्यत्रादर्शनमस्ति; अतस्तस्या अपि त्यागप्रसङ्ग इति भावः। तात्पर्यमुख्यार्थबाधयोरेव प्रयोजकत्वं पदैकत्वद्वित्वादेरप्रयोजकत्वं द्वित्वादिपदप्रतिबन्दिञ्चाभिप्रेत्याह **समभिव्याहृतेति**। एकद्व्यादिपद-लक्षणावत् सर्वपदलक्षणाऽपि, 'विषं भुङ्क्ष्व' इत्यत्र दृष्टेत्यभिप्रायेण **सर्वेषां वे**त्युक्तम्। इदं हि [2]पदद्वयं निषिद्धभोज्यं तद्भुक्तेरकर्तव्यत्वं च लक्षयति। तत्र प्रत्ययितोक्तौ युक्तायुक्तविमर्शात् तात्पर्यनिश्चयः। इह तु समानविभक्तिसामर्थ्यात् बुभुत्सितबोधनानुपपत्त्या चेति विशेषः। स्वोक्तं सर्वपरीक्षकसम्मत-मित्याह **तथा चेति**। चोऽवधारणे। यद्वा—ब्रह्मप्रतिपादनप्रद्विष्टैरप्यभ्युपगतमित्युच्यते; तैरनुक्तमपि तत् उक्तसामर्थ्यादभ्युपगमनीयमिति भावः। कैरियं कुत्राभ्युपगतेत्यत्राह **कार्येति**। अत्र तदुक्तं विव-क्षितत्य द्वारं तावदाह **अपूर्वेति**। वृद्धव्यवहारोपक्रान्ता वेदावसाना कार्यव्युत्पत्तिरेवंप्रकारेण तैः स्थापि-तेत्यर्थः। अपूर्वमेव कार्यम**पूर्वकार्यम्**। **क्रियाकार्य**मुखेनापूर्वकार्यव्युत्पत्तिः। एवं तदुक्तनयेन सर्वपद-लक्षणायाः फलितत्वमाह **कार्यान्वितेति**। अयं भावः—[3]गङ्गायां घोष इत्यादौ तु लक्ष्यस्य प्राधान्या-भावात्तदन्विताभिधायिनां न लक्षणा। एवं कमलानि निमीलन्तीत्यादिषु प्रधानेऽपि निमीलने सर्वशब्दानां तत्परत्वव्युत्पत्त्यभावात् पदान्तराणां तदनुसारो न युक्तः। [तथा च?] यद्यपि गङ्गाद्यप्रधानपदलाक्षणिकतया घोषादिपदेष्विव, कमलानि निमीलन्तीत्यत्र निमीलन्तीत्यवान्तरप्रधानपदलक्षणयाऽपि(?)कमला(पद्मा)दिपदेषु

---

1 तथाच कार्यवाक्यार्थेत्येतावति पर्याप्ते शास्त्रस्थैरभ्युपगम्यते इत्यधिककथनात् शास्त्र-स्थैरिति मीमांसाशास्त्रस्थानामिव अन्येषामपि संभवतां ग्रहणम्। तत्र निदर्शनतया एकप्रदर्शनं कार्येति। एतत्सूचनाय टीकायां सर्वपरीक्षकेति सर्वपदम्। 2 पदद्वयमिति। सुप्तिङन्तं पद-मित्याशयेन सर्वपदलक्षणोक्तिः; न तु शक्तं पदमिति प्रकृतिप्रत्ययविभागेन। प्रत्ययितः= आप्तः।

3 लाक्षणिकस्थलान्तरतो भाष्योक्तोदाहरणे वैलक्षण्यं दर्शयितुमाह अयं भाव इति। गङ्गान्विताभिधायिनो घोषादिपदस्य पश्चात् लक्ष्यार्थभूततीरान्विताभिधायितास्वीकारात् सर्वपद-लक्षणेति न; तीरस्य लक्ष्यस्याप्रधानत्वात्। कमलोदाहरणे कुमुदानीत्यादेरेतदसंबन्धात् न सर्वपद-लक्षणा। कारकापेक्षया क्रियायाः प्राधान्यात् निमीलतिपदलक्षणाबलात् कमलपदे लक्ष्यार्थभूत-प्रधानान्विताभिधानमस्ति; अथापि निमीलनस्यावान्तरप्रधानत्वेऽपि महाप्रधानत्वाभावात् न सर्वपदलक्षणा। कार्योदाहरणे तु सेत्यर्थः। लक्ष्यभूतमहाप्रधानान्वया भावः।

**सर्वपदानां लक्षणाऽपि न दोषः । अत इदमेवार्थजातं प्रतिपादयन्तो वेदान्ताः प्रमाणम् ।**

**प्रत्यक्षादिविरोधे च शास्त्रस्य बलीयस्त्वमुक्तम् । सति च विरोधे बलीयस्त्वं वक्तव्यम्; विरोध एव न दृश्यते; निर्विशेषसन्मात्रब्रह्मग्राहित्वात् प्रत्यक्षस्य ।**

**ननु च घटोऽस्ति पटोऽस्तीति नानाकारवस्तुविषयं प्रत्यक्षं कथमिव सन्मात्रग्राही-**

---

लक्षणा [1]न स्यात्; तथापि लोकोपक्रमवेदावसानकार्यपरव्युत्पत्तिबलादन्यान्वितमात्रे, क्रियाकार्यान्विते, कार्य[2]मात्रान्विते वा पदान्तराणां शक्तिकल्पनानभ्युपगमात् तेषामपूर्वकार्यान्वित एव शक्तेर्लौकिकवाक्येषु सर्वेषु तदभावात् सर्वपदलक्षणा स्वीकर्तव्येति । [3]न च अन्यान्वितमात्रे पदान्तरशक्तिः; कार्यपरतयैव व्युत्पत्त्यङ्गीकारात् । नापि कार्यमात्रान्विते शक्तिः स्यात्; तथा सति लिङादेरपि कार्यमात्रे मुख्यत्वप्रसङ्गात् । न च तत् युक्तम्; अपूर्वाख्यविशेषे लिङादिशक्तेरसिद्धौ मानान्तराभावाच्च तस्याप्रामाणिकत्वापातात् । एवं कार्यमात्रान्विते शक्तानां वेदे कार्यविशेषान्वयोऽपि न सिध्येत् । स्वर्गकामपदसमभिव्याहारात्सिद्धावपूर्वमपि तथा सिध्येदिति न तद्वाच्यत्वादिक्लृप्तिः स्यात् । तस्माल्लौकिकवाक्येषु विशिष्टापूर्वस्थायिकार्यपरत्वाभावाल्लिङादेरमुख्यार्थत्वमिति ॥ उक्तोपपत्त्या सर्वपदलक्षणाया अदोषत्वं निर्बाधत्वाभिप्रायेण निगमयति **अत इति** । युक्तिबलात्, परीक्षकैरभ्युपगतत्वाच्चेत्यर्थः । एवं प्रत्यक्षस्य सम्भाविन्दोषत्वात् शास्त्रस्य निर्दोषत्वात् तद्विरुद्धार्थत्वाच्च परमप्रकृतं शास्त्रप्राबल्यमुपसंहरति **अत इति** । **इदमेव ।** प्रत्यक्षादिविरुद्धमेवेत्यर्थः । भेदपरत्वेऽनुवादित्वं स्यादिति चाभिप्रेतम् । **इदमर्थजातम्**—प्रमाणागोचरस्वप्रकाशनिर्विशेषसत्यत्वतदन्यमिथ्यात्वानिर्वचनीयाविद्यास्वरूपतन्मूलतिरोधानाध्यासधीनिवर्त्यत्वादिकम् ।

(शास्त्रस्य प्रत्यक्षाविरोधः)

**पक्षान्तरमथाऽऽदित्सुः [4]शास्त्रप्राबल्यमीरितम् । प्रत्यक्षस्य विरुद्धत्वमन्वारुह्येति भाषते ॥ ३४ ॥**

**प्रत्यक्षादीति** । चः अप्यर्थः । तत्त्वविद्भ्यो विषयविरोधाभावाद्बलीयस्त्वं न वक्तव्यमित्यभिप्रायेणाह **सतीति** । चोऽवधारणे । अत्र बलाबलविचारस्य मूलमेव च्छिन्नमित्याह **विरोध इति** । विरोधादर्शनं द्वयोरपि स्वारसिक्या परस्पराविरुद्धभेदविषयतया स्यादित्यत्राह **निर्विशेषेति** । प्रत्यक्षसिद्धं सदेव निष्कृष्य शास्त्रे ब्रह्मेत्युच्यत इति भावः ।

(प्रत्यक्षस्य भेदाविषयत्वं सन्मात्रग्राहित्वं च)

असिद्धोऽयं हेतुः, सर्वलोकोपलम्भविरोधात् इति शङ्कते **ननु चेति** । न हि कश्चिदपि

---

1 **न स्यादिति** । अवान्तरप्रधानपदे लक्षणायामपि मुख्यप्रधानपदे लक्षणाविरहादिति भावः । क्वचित् कोशे नञ् नास्ति । 2 **कार्यमात्रेति** । अपूर्वक्रियोभयसाधारणकार्यसामान्येत्यर्थः ।

3 **स्वीकर्तव्येति** इत्यत्र इतिशब्दो मा भूत् । अमुख्यार्थत्वमिति भविष्यदितिशब्दे अयं भाव इत्येतदुपसंहारसंभवात् । इतिशब्दसत्त्वेऽपि एतद्घटकांशविवरणमेव नचेत्यादिवाक्यैः क्रियते । उपरि उक्तोपपत्त्येत्यादिरवतारिका । वाक्यतात्पर्येत्याद्युक्तयोपपत्त्येति तदर्थः ।

4 आदित्सुर्भाषते इत्यन्वयात् भाष्यत इति पाठान्तरमशुद्धम् । प्रत्यक्षस्य विरुद्धत्वमन्वारुह्य शास्त्रप्राबल्यं प्रागीरितमित्यन्वयः ।

**नानानादाभिव्यक्तस्यैव शब्दस्य तत्तन्नादाभिव्यङ्ग्यस्वरूपेणार्थविशेषैः सह संबन्धग्रहणवशादर्थभेदबुद्ध्युत्पत्तिहेतुत्वात् । शब्दस्यैकरूपत्वमपि न साधीयः । गकारादेर्बोधकस्यैव श्रोत्रग्राह्यत्वेन शब्दत्वात् । अतोऽसत्याच्छास्त्रात् सत्यब्रह्मविषयप्रतिपत्तिर्दुरुपपादा ॥**

**ननु न शास्त्रस्य गगनकुसुमवदसत्यत्वम्; प्रागद्वैतज्ञानात् सद्बुद्धिबोध्यत्वात् । उत्पन्ने तत्त्वज्ञाने ह्यसत्यत्वं शास्त्रस्य । न तदा शास्त्रं निरस्तनिखिलभेदचिन्मात्रब्रह्मज्ञानोपायः।**

---

रुदात्तादिक्रमेण चोज्जृम्भमतस्येत्यर्थः । **शब्दस्य** स्फोटाख्यस्य । **नादविशेषेण** स्वरव्यञ्जनरूपवर्णभेदेनेति यावत् । अपिरन्वारोहद्योतकः । अत्र व्यङ्ग्यव्यञ्जकतयोक्तयोर्नादस्फोटयोस्तदर्थसंबन्धस्य तद्ग्रहणस्य चासत्यत्वं दुर्वचम् । नादधर्माणां कत्वादीनां शब्देऽध्यासश्च नास्ति । तदभावेऽपि तादृशनादाभिव्यक्ततयैव तत्तद्बोधकसिद्धेरित्यभिप्रायेण प्रतिवक्ति **नानेति** । **वृत्तिकारोपज्ञं** स्वमतमाह **शब्दस्ये**ति । अपिर्दूषणसमुच्चयार्थः । अत्र **शाबरम्** "गौरित्यत्र कः शब्दः, गकारौकारविसर्जनीया इति भगवानुपवर्षः" इति । ([1]वृत्तिकारस्य बोधायनस्यैव ह्युपवर्ष इति स्यान्नाम ।) तदिह पातञ्जलादिप्रोक्तं प्रामाणिकमिति न भ्रमितव्यम्; तेषां बाह्यनतिक्षेपार्थं वैभ(क्तिः?)रपि स्यात्, युक्तिविरोधाच्च । स्फोटवादस्यानपेक्षत्वमाह **गकारादे**रिति । अयं भावः— किमत्र वर्णातिरिक्तमेकरूपं वाचकं दृष्टत्वाद्गृह्यते, बोधकान्यथाऽनुपपत्त्या वा, शब्दश्शब्द इत्यनुवृत्तव्यवहारसिद्ध्यर्थं वा, शास्त्राद्वा? नाद्यः; वर्णानामेव श्रोत्रेण गृह्यमाणत्वात् । अतिरिक्तमपि श्रवणेन गृह्यत इति धार्ष्ट्यादलीकवादः । शब्दादर्थं प्रतीम इत्येकवचनोक्तिस्तु वर्णसमुदायेऽपि स्यात्। न द्वितीयः; यादृशां वर्णानां प्रतिनियतस्फोटव्यञ्जकत्वमिष्यते, तादृग्भिरेव तैर्नियतार्थधीसिद्धेः किमन्तर्गडुना स्फोटेन । क्रमयौगपद्यविकल्पानुपपत्तिश्च स्वेष्टेऽपि स्यात् । न तृतीयः; श्रोत्रग्राह्यत्वोपाधिना वर्णावर्णात्मकेषु सर्वेषु शब्दव्यवहारोपपत्तेः । न चतुर्थः; "स्फोटस्त्वं वर्णसंश्रयः" इत्यत्र स्फुटीकरणशक्तौ तात्पर्यादिति । एवं छायाधैः श्येनानुमानेऽपि न त्वदिष्टसिद्धिरित्यभिप्रायेण निगमयति **अत** इति ॥

### (शास्त्रप्राबल्यनिरासनिगमनम्)

अथ खपुष्पवन्नित्याप्रतीतत्वलक्षणमसत्यत्वं शास्त्रे नास्ति, अतः सत्यधीहेतुत्वं स्यादिति शङ्कते **नन्वि**ति। कादाचित्कधीविषयतया तुच्छधीव्यावृत्तिं व्यनक्ति **प्रागि**ति। असत्यस्य कथं सद्बुद्धिबोध्यत्वम्? तत्सत्यत्वे वा कथं सदद्वैतमित्यत्राह **उत्पन्ने** इति । पूर्वं सद्बुद्ध्या सत्यत्वं, पश्चाद्बाधकादसत्यत्वं चेत्यविरोध इति भावः । तर्ह्यसत्यस्य कथं धीहेतुत्वमित्यत्रोत्तरावस्थायामिष्टप्रसञ्जनत्वं तावदाह **न तदे**ति । पूर्वावस्थायां तु प्रसञ्जकासिद्धिमाह **तदे**ति। अत्रासत्येवेत्युक्तौ स्वमतविरोधमाह **नैवमि**ति। अयं भावः—

**यदि पूर्वं सतः पश्चादसत्त्वमभिसंहितम् । असत्यत्वमिहोक्तं स्यान्न मिथ्यात्वादिसंभवः ॥**

---

1 कुण्डलितं वाक्यं न सर्वत्र। उपवर्षबोधायनयोर्भेदमेव बहवो मन्यन्ते । कतिपयोक्तमैक्यमपि स्यान्नाम; तावता स्फोटस्यानिष्टत्वं बोधायनेष्टमिति साम्प्रदायिकत्वमेव स्यादिति परं कथ्यते । नात्र उपवर्षैक्यस्थापननैर्भर्यं लक्ष्यते एतत्पाठसंमतावपि ।

यदोपायः, तदाऽस्त्येव शास्त्रम्; अस्तीति बुद्धेः ॥ नैवम्; असति शास्त्रे अस्ति शास्त्रमिति बुद्धेर्मिथ्यात्वात् ॥ किं ततः (ततः किम्) इदं ततः—मिथ्याभूतशास्त्रजन्यज्ञानस्य मिथ्यात्वेन तद्विषयस्यापि ब्रह्मणो मिथ्यात्वम्। यथा धूमबुद्ध्या गृहीतबाष्पजन्याग्निज्ञानस्य मिथ्यात्वेन तद्विषयस्याग्नेरपि मिथ्यात्वम्। पश्चात्तनबाधादर्शनं चासिद्धम्। शून्यमेव तत्त्वमिति वाक्येन तस्यापि बाधदर्शनात् ॥ तत्तु भ्रान्तिमूलमिति चेत्, एतदपि भ्रान्तिमूलमिति त्वयैवोक्तम्। पाश्चात्यबाधादर्शनं तु तस्यैवेत्यलमप्रतिष्ठितकुतर्कपरिहसनेन ॥

(श्रुतिघट्टः)

यदुक्तम्—वेदान्तवाक्यानि निर्विशेषज्ञानैकरसवस्तुमात्रप्रतिपादनपराणि। 'सदेव

---

पूर्वधीमात्रतः सत्त्वमसत्त्वं बाधकं हि चेत्। बाधात्पश्चादिव प्रागप्यसत्त्वात् कार्यकृन्न तत् ॥
कस्यचिद्बाधितं वस्तु यदाऽन्येषामबाधितम्। सत्त्वासत्त्वविरोधोऽपि तदा ते संपतेदिति ॥

लिङ्गविभ्रमादिन्यायेनोपपादयति असतीति। बुद्धेर्मिथ्यात्वमिह स्वमते विषयतः, परमते स्वरूपतोऽपि। इष्टोपन्यासोऽयमित्यभिप्रायेण चोदयति किं तत इति। अनिष्टमेव प्रसञ्जितमित्याह इदमिति। तदिष्टप्रक्रियया विवृणोति मिथ्येति। लोकदृष्ट्यापि स्थापयति यथेति। सन्मात्रस्य बाधादर्शनमन्वारुह्य प्रागुक्तम्। अथ तदपि नेत्याह पश्चात्तनेति। असिद्धिं माध्यमिकोक्त्या व्यनक्ति शून्यमिति। नन्विदं भ्रान्तिमूलं बुद्धवाक्यं नित्यनिर्दोषानन्यपरवेदोक्तस्य कथं बाधकमिति शङ्कते तत्त्विति। त्वदुक्तयुक्त्यैव वेदान्तोऽपि न कस्यचित्साधको बाधको वा स्यादिति प्रतिबन्ध्यभिप्रायेणाह एतदपीति।

भ्रान्तिमूलेन वाक्येन धीसत्यत्वं यदीष्यते। तन्मिथ्यात्वादिकं तद्वदिष्यतामिति चाऽऽशयः॥

एवकारस्तु वक्तव्यनैरपेक्ष्यार्थः। अन्येऽप्याहुः—

"वेदोऽनृतो बुद्धकृतागमोऽनृतः प्रामाण्यमेतस्य च तस्य चानृतम्।
बोद्धानृतो बुद्धिफले तथानृते यूयं च बौद्धाश्च समानसंसदः ॥" इति।

त्वदुक्त्या न केवलं बाह्यसमीकारः, तस्याधिक्यमेव फलतीत्याह पाश्चात्येति। सर्वं नास्तीत्येतदपि न सुवचमिति चेत्, तदा धीव्यतिरिक्तं नास्तीत्येतदपि नेति वक्तुं शक्यम्। अत्रानवस्थयापि परमतमात्रस्य बाधकप्रयोजकत्ववद....मेवो....मूलयेत्युपातेन चुलकमात्रेण दोग्धी.......व्दितं दर्शित इत्यभिप्रायेण विरमति इत्यलमिति। स्ववचनविरोधादिभिः अप्रतिष्ठितत्वम्। उपजीव्यविरोधात् कुतर्कत्वम् ॥

(सद्विद्यायाः सविशेषपरत्वम्)

विशिष्टविषयैरित्थं प्रत्यक्षाद्यैर्विरुद्धता। तद्विरोधे च शास्त्रस्य दौर्बल्यमपि दर्शितम् ॥ ५३२
अथागमानां प्रत्येकमैदम्पर्यसमीक्षया। प्रत्यक्षाद्यविरुद्धार्थे प्रामाण्यं प्रविवक्षति ॥ ५३३ ॥
साधकं बाधकं वापि यत्र नास्ति प्रमान्तरम्। तस्मिन्नेव हि तात्पर्यं शास्त्रस्येति प्रचक्षते ॥
अर्थवैशिष्ट्य[1]मधिकं शब्दमात्रेऽपि दर्शितम्। विशेषवच्चारम्भस्तु तद्व्यक्त्यै वाक्यतर्कतः ॥

यदिह दूष्यं कारणशोधकवाक्ययोः परोक्तं निर्विशेषपरत्वम् तदनुवक्ति यदुक्तमिति। अत्र

---

1 शब्दस्य विशेषेण सविशेषार्थपरत्वं दर्शितमित्यर्थः।

**सोम्येदमग्र आसीत्' इत्येवमादीनि इति—तदयुक्तम् । एकविज्ञानेन सर्वविज्ञानप्रति-**

---

**वस्तुमात्र**शब्देन सगुणवाक्यानां दृष्टिविधिवत् अन्यपरत्वं व्यज्यते। उपात्तवाक्यस्य परेष्टविरुद्धत्वद्योतकः **परशब्दः** । **एवंशब्द** ईदृशसर्वप्रकरणसङ्ग्रहार्थः । **अत्र** प्रत्यक्षादेः उपक्रमादेः श्रुतिलिङ्गादेश्च विरोधमभिप्रेत्याह **तदयुक्तमिति** । सद्विद्यायां परोक्तैः तात्पर्यलिङ्गैरेव तदिष्टभङ्गं व्यनक्ति **एकेति** । **एकस्य** कारणस्य **विज्ञानेन** तत्कार्यस्य सर्वस्य ज्ञानं सिद्ध्यतीति प्रतिज्ञा । सा च, 'उत तमादेशमप्राक्ष्यः, येनाश्रुतम्' इत्यादिना बोध्यते । **आदेशशब्दश्चात्र** न क्रियावचनः, मृदादिदृष्टान्तैः, 'एवं सोम्य स आदेशः' इत्य देशेन(इत्यतिदेशेन?) च करण(कारण?)परत्वव्यक्तेः। नाप्युपदेश्यपरः, तदनुक्तावपि तत्सिद्धेस्तदुक्ति-नैष्फल्यात् । आङ्पूर्वस्य दिशेरुपदेशवाचित्वाभावाच्च । आदेशोपदेशयोः पृथगाम्नानात् । मुख्ये संभवत्युपचारायोगात् '......व्यः, 'अप्राक्ष्य' इत्यनेनार्थतः उपादानस्यैव निमित्तत्वोपयुक्त प्रतिज्ञा-सिद्ध्यर्थतया (प्रतिज्ञासिद्ध्यर्थतया उपादानस्यैव निमित्तत्वोपयुक्त?) प्रेरण.........उपदेश्यत्वं सर्वप्रष्टव्यसाधारणम् । अपवर्गार्थोपदेश्यत्वं चोपास्या(स्त्या?)दावप्यस्ति । न चात्र **तम् इति** विशेषणादत्र असाधारण्यमिति वाच्यम् ।........गात् । अपेक्षितासाधारण्यविधेरनपेक्षितसाधारण्यविधिदौर्बल्याच्च । तस्मात्, 'एतस्य वाऽक्षरस्य प्रशासने गार्गि' इत्यादिप्रसिद्धविश्वप्रशासितृत्वविषयोऽत्रा**देशशब्दः** ।

नन्वा**देशशब्दे** तावन्न कर्तरि पचाद्यच्प्रत्ययः शङ्क्यः । 'इगुपधे'ति कस्यापवादत्वात् । न चात्र कप्रत्ययः ; 'क्ङिति च' इति गुणनिषेधात । नापि घञ् ; 'अकर्तरि च कारके संज्ञायाम्' इति नियमात् । न च सर्वशासितुः शास्तिकर्मत्वम् । उपदेशकर्मत्वं तु युक्तमिति ॥ मैवम् ; विवक्षातः कारकप्रवृत्त्या कर्तुरेव करणत्वविवक्षया घञो ल्युटश्चोपपत्तेः । अकर्तरीति नियमस्तु करणत्वादि-विवक्षाविरहे कर्तर्यसाधुत्वार्थः । अर्थतोऽपि हि प्रत्यय(मात्र) नियमनं वरम् । अतः, 'तमादेशम्' इत्यादौ सर्वतत्त्वाधिष्ठातृत्वगुणविशिष्टं किं श्रुतवानसीति प्रश्नार्थः। 'येनाश्रुतम्' इत्यादौ, 'यथा सोम्यैकेन' इत्यादिदृष्टान्तवाक्येषु च ज्ञातेनेति विशेषणीयम्, तत्सत्तामात्रेण तत्कार्याणां ज्ञातत्वायोगात् । तो... ......सर्वं विदितम् । अत एव, **विज्ञातेनेत्युक्तम्** । तथा च मुण्डकोपनिषदि, 'कस्मिन्नु भगवो विज्ञाते इदं सर्वं विदितं भवति' इति । बृहदारण्यके च, 'आत्मनि खल्वरे श्रुते मते विज्ञाते इदं सर्वं विदितं भवति' इति च । अत्र घटकुड्यादिना विज्ञातेन तदन्यस्य ज्ञातत्वमयुक्तमित्यभिप्रायेण, 'कथं नुभगवः स आदेशः' इति चोक्तम् । तत्रोत्तरं, 'यथा सोम्य' इत्यादि । बहुदृष्टान्तोक्तिः संभवद्र्ढिमार्था। मृदादिकारणात्मकं(हि)सर्वं मृण्मयम् । तत्तन्मृत्पिण्ड(ण्डादि?)दृष्टान्तेऽप्यसत्कार्यापादनचोद्यं निरस्यति—**वाचेति**। **अत्र** वाचालम्बनमिति व्याख्यायां श्रुत्यक्षरविप्लवः स्यात् । कार्यमि........त्यो........क्त्वा प्रसिद्धं नोदाहर्तव्यम् । त्वदिष्टे हि रज्जुसर्पादि दृष्टान्तयितव्यम् । 'विज्ञातं स्यात्' इत्यत्र च सत्यज्ञानेन मिथ्याभूतस्य ज्ञातत्वोक्तिर्विरुद्धा । [1]ज्ञानं भवतीति किं तदा वाच्यम् । सति गत्यन्तरे मिथ्यात्वेन

---

1 ज्ञातमिति व्याख्याप्यभावात् किं वस्तु ज्ञातं भवतीति वक्तव्यं स्यात् । सर्वमज्ञातं भवति । बाधितं भवतीति ।

**ज्ञोपपादनमुखेन सच्छब्दवाच्यस्य परस्य ब्रह्मणो जगदुपादानत्वं जगन्निमित्तत्वं सर्वज्ञता**

---

ज्ञातं भवतीत्यध्याहारश्च न युक्तः। 'मृत्तिके' त्यादिष्वितिकरणं च निरर्थकम्। मृत्तिकेत्येव प्रमाणसिद्धमिति प्रति(त्यभि)ज्ञा....प्रति सत्यत्वेति सार्थकं....तदिह घटेनोदकमाहरेत्यादिवाक्पूर्वकप्रवृत्तिनिवृत्तिरूपप्रयोजनाख्येन हेतुना, आरंभणं विकारो नामधेयमित्युभयं मृदादिद्रव्येण **आरम्भणं** [स्पृश्यत इत्यर्थ ?]। आलम्भनं स्पर्शः। "कृत्यल्युटो बहुलम्" इति कर्मणि ल्युट्। रलयोरभेदः पक्षद्वयेऽपि समानः। बकारस्थाने भकारस्तु न काप्यस्ति। वर्णवैषम्यानादरेणारंभणीयत्वविवक्षायामप्यस्मत्पक्षे न दोषः।

**असत्यं तव सिद्धान्ते घटादि च मृदादि च। लोकदृष्ट्योभयं सत्यं विभज्योदाहृतिः कथम्? ॥**
**यदि वर्गद्वयस्यास्य मृषात्वं साधयिष्यते। यथेति सिद्धवत्कारः संमतोक्तिश्च भज्यते ॥ ५२७**
**किश्चात्र कार्यसत्यत्वं सजातीय........................................ ॥**

अपि चैवं.....................................................................................

'एवं सोम्य स आदेशः' इत्युपदेश्यत्वाभ्युपगमात्, 'भगवांस्त्वेव मे तद्ब्रवीतु' इति पूर्वमविदितस्य शुश्रूषितत्वात्, पश्चादुपदेशात्, 'आचार्यवान् पुरुषो वेद' इति निगमनाच्च शब्दगोचरत्वं ज्ञानगोचरत्वं च स्पष्टमुक्तम्। तदपि त्वदिष्टविरुद्धम् उपलक्षितं..........क्षन्यायेन बुद्धीनां शब्दानां च ब्रह्मणि कुण्ठीभाव इति तु डिम्भप्रलम्भनम्; प्रलपनं वा। सत्कार्यवादादिसंभवेऽपि विचित्रकार्याणां यथादृष्टि विचित्रकारणापेक्षणादेकविज्ञानेन सर्वविज्ञानं कथमिति चात्र प्रश्नाभिप्रायः। तत्रोत्तरम्, **सदेवे** त्यादि। तत्र अग्र आसीदिति काल..........विशेषणद्वयञ्च सिद्धम्।...............विशिष्टं तत् दृश्यते। अग्रेशब्दस्य निरर्थकत्वञ्च। अवाच्यस्य कथमुपदेश्यत्वमित्यभिप्रायेणोक्तं **सच्छब्दवाच्यस्ये**ति। गुणविशिष्टोक्तिः कल्पिताकारविषयेति शङ्काव्युदसनायाह **परस्य ब्रह्मण** इति। अनेन सच्छब्दस्य शाखान्तरोक्तशब्दैरैकार्थ्यं सूचयता सत्तामात्रपरत्वञ्च निरस्तम्। निरूप्यमाणदशापरत्वञ्चायुक्तम्; वक्ष्यमाणापेक्षया कारणनिर्देशार्थत्वात्। 'न हि तदानीम्' (नासदासीत् नो सदासीत् तदानीम् ?) इत्यादिश्रुत्यन्तरनिर्देशसामरस्याच्च प्रलयकालपरत्वं युक्तम्। किं तदासीदित्यत्र, 'ऋषयो वाव तेऽग्रेऽसदासीत्' इति....कत्र निर्दिश्यते। अतस्तत्काले त्रिविधभेदनिषेधपरत्वमिह न वाच्यम्; सृष्टिकालेऽपि वस्तुतस्तच्छून्यत्वात्। प्रलयकालेऽपि वैषम्यनैर्घृण्याकृताभ्यागमकृतविप्रणाशपरिहाराय सूक्ष्माचिज्जीवादिभेदस्य त्वयाऽपि स्वीकृतत्वाच्च। अतो नामशब्दस्य वैयर्थ्यं, विरोधो वा। दुस्त्यजस्वगतविशेषोऽपि तदानीं सत्वैकत्वाद्द्वितीयत्वैस्त्वयैवाहतः। तदिह प्रलयकालावच्छिन्नसत्ताविशिष्टं चिदचिच्छरीरकं ब्रह्म सदित्युक्तम्। सच्छब्दस्य ब्रह्मात्मादिशब्दवत् विशेष्यविषयत्वेऽपि स्वरूपविकारादिनिषेधाच्छ्रुत्यन्यरोपबृंहणप्रसिद्धिसामरस्याच्च प्रकृतिपुरुषकालाद्यपेक्षितविशेषणसिद्धिः। तदभावे निर्विकारस्य स्वतः कारणत्वमेव न सिद्ध्येत्। ततश्च शाखान्तरनयेन कारणवाक्यान्तराणामपि निर्विशेषपरतया ब्रह्मकारणवादस्त्यक्तस्स्यात्। अध्यासोऽपि ह्यविद्यापेक्षस्त्वयैवोक्तः। 'सदेवे' त्यस्यासत्त्वनिषेधपरत्वं च दृष्टान्तानुगुणम्। 'तद्धैक

**सर्वशक्तियोगः सत्यसङ्कल्पत्वं सर्वान्तरत्वं सर्वाधारत्वं सर्वनियमनमित्याद्यनेककल्याण-**

आहुरसदेवेदम्' इत्यादिना मतान्तरोपन्यासनिरासाभ्यां च तत् व्यक्तम् । अत्र 'एकमेवाद्वितीयम्' इति न त्वदुक्तांशोक्तिः, सिद्धानुस्मरणमात्रार्थत्वात् । तच्छब्दोऽत्र पक्षान्तरोपक्रमार्थः । **तदिदमि**ति वाऽन्वयः । अत्र च कार्यं द्रव्यं प्रागसदिति वैशेषिकाद्युक्तिनिरासे प्रतिज्ञानुगुण्यं स्यात् । शून्यवाद-निरासपरत्वे तु **अग्रशब्दस्य** वैयर्थ्यम् । क्षणभङ्गनिरासस्तु द्रव्यानुवृत्तिसाधनेनैव सेत्स्यति ।

**अतुच्छत्वे स्थिरत्वे तु प्रतिज्ञा नैव सेत्स्यति । कार्यकारणयोर्यावदनन्यत्वं न साध्यते ॥** ५३८

'**कुतस्त्वि**त्यादि प्रमाणतर्काभावपरम् । **कथ**मित्यादि तदुभयविरोधपरम् । विद्यमानस्य हि द्रव्यस्या-वस्थान्तरापत्तिस्तत्तदवस्थावत उत्पत्तिरिति प्रमाणसिद्धम् । तथाच द्रव्यस्य पूर्वमसत्त्वे तस्य (कस्य?) सत्तावाच्यघटत्वाद्यवस्था उत्पत्तिरिति स्यात् । तदेतत् प्रमाणैस्तदनुग्राहकैश्च निर्धूतमिति भावः । अथ यथोक्तं निगम्यते, "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्" इति । इदमग्रे एकमद्वितीयं सदेवासीदित्येकमेवेदं वाक्यम्, संभवत्यैक्ये तद्भेदायोगात् । यत्तु भिन्नवाक्यवत् क्वचित्क्वचिद्भाष्यते, तदपि तात्पर्यव्यक्त्यर्थम् । अन्यथा वाक्यत्रयवत् वाक्यद्वयस्य व्यपदेशो व्याहन्येत । तदिह **सदासीदि**ति अवस्थाद्वयसाधारणाकारोक्तिः[1] । **एक**मिति तु प्रतिज्ञाघटनार्थमविभक्तनामरूपावस्थोच्यते । अवधारणमिह जगदन्तर्भूतस्य वियदादेः वैशेषिकाद्यभिमतनित्यत्वशङ्कानिरासार्थम् ।

अत्राभिप्रेतमाह **जगदुपादानत्वमिति** । "तद्धेदं तर्ह्यव्याकृतमासीत्" इत्यादिश्रुत्यन्तरानुगुण्यात्, "बहु स्याम्" इत्युत्तरवाक्यादिभिश्चायमेवार्थ इति भावः । उदाहृतानां मृदाद्युपादानानां कुलालादि प्रेर्यत्वदर्शनादिहापि तथान्यस्मिन् कर्तरि च [तदन्यस्य सत.?] आदेशशब्दार्थत्वेन ज्ञानात्तत्कार्यविश्वविज्ञानं न स्यात् । तत्सिद्ध्यर्थम**द्वितीय**पदेनाधिष्ठात्रन्तरं निरस्यते तदिदमाह **जगन्निमित्तत्वमि**ति । 'तत्तेजोऽसृजत', 'तदात्मानं स्वयमकुरुत' इत्यादिभिरेतद्दृष्टम् । **तदैक्षते**त्यादिसिद्धमाह **सर्वज्ञते**ति । 'यः सर्वज्ञः' इति कारणवाक्यान्तरे चैतत् कण्ठोक्तम् । **स्या**मिति सङ्कल्पयतो निमित्तत्वानुगुणम् । एतदुभयानुगुणमाह **सर्वशक्तियोग इति** । सर्वोपादानत्वसर्वनिमित्तत्वशक्त्यैकाश्रय[त्व?]मित्यर्थः । अत्र **असृजते**त्यादि फलितम् अन्यत्र 'ब्रह्माध्यतिष्ठत्', 'कर्तारमीशम्' इत्यादिभिः कण्ठोक्तमाह **सत्यसङ्कल्पत्वमि**ति । **हन्ताहमिमा इत्यादौ** चिदचिदन्तरात्मत्वं व्यक्तम्, विशेषतोऽप्यनुप्रवेशनिबन्धनं सामानाधिकरण्यमिति 'तदनुप्रविश्य सच्च त्यच्चाभवत्' इत्यादिभिः सिद्धम् । अत्र 'सिंहेन भूत्वा बहवो मयात्ता." इतिवत् **अनेन जीवेने**ति विवक्षितं व्यनक्ति **सर्वान्तरात्मत्वमि**ति । सर्वाधारता सदायतनत्वोक्तिसिद्धा । सर्वनियमनं तु **आत्मत्वो**क्तिलब्धम् । अत्राधेयत्वविधेयत्वादिनियमैर्जगतः शरीरत्वं सिद्धं शरीरवाचिनां शरीरिपर्यन्तत्वप्रतिज्ञाघटनाय प्रकाशितम् । आदिशब्दश्च[अन्यान् एतत्खण्डोक्तान्?] खण्डान्तरोक्तांश्च

1 एतत्साधारणधर्मकथनमसत्त्वपक्षप्रतिक्षेपेण सत्कार्यवादस्थापनाय । तत् सूक्ष्मचिदचिद्विशिष्टवस्त्विति प्रमाणान्तरलभ्यम् । अद्वितीयमिति निमित्तान्तरव्युदासेन वक्ष्यमाणेक्षणपोषकम् । एकमित्येतदर्थ एव बहुत्वप्रत्यनीकतयाऽत्र मुख्यविधेय इति भावः ।

**गुणविशिष्टतां कृत्स्नस्य जगतस्तदात्मकतां च प्रतिपाद्य एवंभूतब्रह्मात्मकस्त्वमसीति श्वेतकेतुं प्रति उपदेशाय प्रवृत्तत्वात् प्रकरणस्य। प्रपञ्चितश्चायमर्थो वेदार्थसङ्ग्रहे। अत्राप्यारम्भणाधिकरणे निपुणतरमुपपादयिष्यते ॥**

---

कारणत्वाद्युपयुक्तान् विशेषान् सङ्गृह्णाति। **ऐतदात्म्यमित्यादेरर्थमाह कृत्स्नस्येति। तत्सत्यमित्यत्र सर्वकारणस्य सतो ब्रह्मणः, इदं सर्वमित्युक्तस्य** जगतो वा सत्यत्वमिह न विधेयम्, कृतकरत्वात्। **अतः, 'मृत्तिकेत्येव सत्यम्' इतिवत्** कार्यस्य जगतः स्वनिष्ठत्वादिभ्रमनिवारणाय तदात्मकत्वं प्रामाणिकमित्युच्यते। **स आत्मेत्येतदप्यस्यैवार्थस्य** तात्पर्यभूम्ना निर्देशवैषम्येण दृढीकरणम्; स त आत्मा अन्तर्याम्यमृतः' **इतिवत्। अत्रापि सर्वान्तरात्मत्वेन** प्रस्तुत[त्व?] श्रोतर्यपि विशेषत [1]उक्तिरियमिति केचित्। **अत एव तत्त्वमसीत्यप्यनुसन्धातर्युपसंहारमात्रम्।** जीवस्य परेण स्वरूपैक्ये बाधेऽपि वा **पक्षे पूर्वोक्तसर्वाकारविशिष्टपरामर्शितच्छब्दो विरोधी** स्यादित्यभिप्रायेणाह **एवंभूतब्रह्मात्मक** इति। अत्रोद्देश्योपादेयचिन्ता पश्चात् [निवर्तकानुपपत्तिघट्टे]भ विष्यति। **श्वेतकेतुं प्रतीत्यनेन** स्वेष्टसाधकार्थवादलिङ्गसूचनम्। आत्माद्वैतपक्षे प्रबुद्धस्य गुरोर्भ्रान्तिसिद्धं शिष्यं प्रति उपदेशानुपपत्तिं सूचयति **उपदेशाय प्रवृत्तत्वादिति।**

**यत्त्वष्टविधतात्पर्यलिङ्गवत्त्वमिहोदितम्। तत्त्वस्मिन्(स्मत्?) पक्ष एवेति प्राह प्रकरणोक्तितः ॥**

अत्र ह्युपक्रमप्रभृति, तत्त्वमसीत्युपसंहारपर्यन्तं निरुपाधिकं प्रशासनादिकं दर्शितम्। तच्च मानान्तरागोचरत्वात् अपूर्वम्। अभ्यस्तञ्च बहुशः। फलं च तस्य तावदित्यादिना जीवस्य परप्राप्त्यनुरूपम्। आख्या....तं 'तन्निष्ठस्य मोक्षोपदेशात्' इति॥ कृ....चार्थवादसिद्धः। असत्कार्यवादनिरासेन विवर्तवादविरुद्धैर्दृष्टान्तैस्त्रिवृत्करणप्रदर्शनादिभिश्चोपपत्तिः स्थापिता। 'तत्तेजोऽसृजत'....सोपबृंहणैः श्रुत्यन्तरसङ्गतैरध्यासशङ्काऽप्यत्र प्रशमिता।

**तथा च त्वत्पक्षं क्षिपति परिणामादिति वदन् विवर्तादध्यासादिति च न वदन् सूत्रकृदिह। तदन्याभावं न स्पृशति तदनन्यत्वफणितिर्न मायामात्रोक्त्याऽप्यनृतगतिराश्चर्यपरया ॥५४॥**

अत्र किं प्रतिज्ञावाक्यम्, कानि च तदुपपादकानि, कथं च तेषामेवं तात्पर्यमित्यत्राह **प्रपञ्चितेति।** ननु बुद्धिशब्दान्तरादिकं रज्जुसर्पादिष्वध्यासात् दध्यादिषु द्रव्यान्तरसंयोगाच्च दृष्टम्। मृत्पिण्डघटादिष्वपि तथाभावाभावे कथं द्रव्यैक्योपपादनमित्यत्राह **अत्रापीति। निपुणतरं** परोक्तप्रतीतिबलानुसारेण। अहिकुण्डलवदास्ते....त....धित इत्यादिवच्च कार्यस्य सत्यत्वे........॥

**इयं कवितार्किकसिंहस्य सर्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य**
**वेदान्ताचार्यस्य कृतिषु श्रीभाष्यव्याख्या तत्त्वटीका**
एतावत्येवोपलभ्यते।

* * * * *

॥ श्रीमते निगमान्तमहादेशिकाय नमः ॥

---

1 **विशेषत इति। तथाच स आत्मेत्यस्य स ते आत्मेत्यर्थ इति भावः।**

**इति वात्स्यवीरराघवसुधीरशेषाः प्रचारयन् सूक्तीः।**
**संशोध्य तत्त्वटीकां विधाय तत्त्वार्पणं प्रकाशयति ॥**

॥ शुभमस्तु ॥

श्रीः

# श्रीभाष्योदाहृतप्रमाणाकरसूची ।

| | |
|---|---|
| अकृत्स्नो ह्येषः | बृ. उ; ३ ४ ७ |
| अग्निहोत्रादि तु | ब्र. सू; ४ १ १ |
| अतः प्रत्यक्षसिद्धत्वात् | सि. त्र; |
| अत्रायं पुरुषः स्वयं | बृ. उ; ६ ३ ९ |
| अथ परा यया | मु. उ; १ १ ५ |
| अथ योऽन्यां देवतां | बृ. उ; ३ ४ १० |
| अथ यो वेद इदं जिघ्राणीति | छा. उ; ८ १२ ४ |
| अथातो धर्मजिज्ञासा | पू. मी. सू; १ १ १ |
| अनादिमायया सुप्तो | मा. उ; का. २ २१ |
| अनावृत्तिः शब्दात् | ब्र. सू; ४. ४ २२ |
| अनु म एतां भगवो | छा. उ; ४ २ २ |
| अनुविद्य विजानाति | छा. उ; ८ १२ ६ |
| अनृतेन हि प्रत्यूढाः | छा. उ; ८ ३ २ |
| अन्तवदेवास्य तद्भवति | बृ. उ; ५ ८ ९ |
| अयमात्मा ब्रह्म | बृ. उ; ४ १९ ४ ५ |
| अष्टवर्षं ब्राह्मणमुपनयीत | पू. मी. उ; |
| अस्थूलमनण्वह्रस्वं | बृ. उ; ५ ८ १ |
| अहमात्मा गुडाकेश | भ. गी; १० २० |
| अहमेव च वर्तामि | अथर्वशि. १ |
| अहं कृत्स्नस्य जगतः | भ. गी. ७ ६ |
| अहं बीजप्रदः पिता | भ. गी; १४ ४ |
| अहं सर्वस्य प्रभवः | भ. गी; १० ८ |
| आत्मानमेव लोक | बृ.उ; ३ ४ १५ |
| आत्मा वा अरे द्रष्टव्यः | बृ. उ; ४ ४ ५ |
| आत्मा वा इदमेक | ऐत. उ; १ १ १ |
| आत्मेति तूपगच्छन्ति | ब्र. सू; ४ १ ३ |
| आत्मेत्येव तु गृह्णीयात् | वाक्यग्रन्थ |
| आनन्दो ब्रह्म | तै. उ; ६ |
| आप्रयाणात्तत्रापि | ब्र. सू; ४ १ १२ |
| आरम्भणसंशीलनं | वाक्यग्रन्थ |
| आवृत्तिरसकृदुपदेशात् | ब्र. सू; ४ १ १ |
| आहारशुद्धौ सत्त्वशुद्धिः | छा. उ; ७ २६ २ |
| इदं सर्वं यदयमात्मा | बृ. उ; ४ ४ ६ |
| इन्द्रो मायाभिः | बृ. उ ४ ५ १९ |
| इयाज सोऽपि सुबहून् | वि. पु; ६ ६ १२ |
| उपासनं स्याद्ध्रुवानुस्मृति | |
| एतद्यो वेत्ति तं प्राहुः | भ. गी; १३ २ |
| एवमेवास्य परिद्रष्टुः | प्र. उ; ६ ५ |
| एष एवासाधु कर्म | कौ. उ; २ ६५ |
| एष हि द्रष्टा श्रोता | प्र. उ; ४ ९ |
| ओमित्येवात्मानं ध्यायथ | मु. उ; २ २ ६ |
| कतम आत्मा योऽयं | बृ. उ; ६ ३ ७ |
| करणानामभूमित्वात् | सि. त्र; |
| कर्तृकर्मणोः कृति | अष्टा; २ २ ८ |
| कृद्योगा च षष्ठी | अष्टा; २ २ ८ |
| क्रियावानेष ब्रह्मविदां वरिष्ठः | मु. उ; ३ १ ४ |
| क्षेत्रज्ञं चापि मां विद्धि | भ. गी; १३ ३ |
| जात्याश्रयनिमित्तादुष्टा | वाक्यग्रन्थ |
| जानात्येवायं पुरुषः | ? |
| ज्ञानस्वरूपमखिलं | वि. पु; १ ४ ४० |
| ज्ञानस्वरूपमत्यन्त | वि. पु; १ २ ६ |
| ज्ञानस्वरूपो भगवान् | वि. पु; २ १२ ३९ |
| ज्ञानं विशुद्धं | वि. पु; २ १२ ४४ |
| ज्ञोऽत एव | ब्र. सू; २ ३ १९ |
| ज्योतिष्टोमेन स्वर्गकामो | पू. मी. उ; |
| तत्त्वमसि | छा. उ; ६ ८ ७ |
| तद्धैतत्पश्यन्नृषिर्वामदेवः | बृ. उ; ३ ४ १० |
| तद्यथेह कर्मचितो लोकः | छा. उ; ८ १ ६ |
| तद्विपर्ययजा तुष्टिः | वाक्यग्रन्थ |
| तमेतं वेदानुवचनेन | बृ. उ; ६ ४ २२ |
| तमेव विदित्वातिमृत्यु | श्वे. उ; ३ ८ |
| तमेवं विद्वानमृत | पु. सू; |
| तल्लब्धिर्विवेकविमोक | वाक्यग्रन्थ |
| तस्माद्वा एतस्मान्मनो | तै. उ; ४ |
| तस्मान्न विज्ञानमृते | वि. पु; २ १२ ४३ |
| तस्यात्मपरदेहेषु | वि. पु; २, १४ ३१ |

| | |
|---|---|
| तेषामहं समुद्धर्ता | भ. गी; १२ ७ |
| तेषामेवैष...विरजो | प्र. उ; १ १५ |
| तेषां सततयुक्तानां | भ. गी; १० १० |
| तेषां सत्यानां सतामनृत | छा. उ; ८ ३ १ |
| त्वं वा अहमस्मि | ऐत. |
| देशकालवैगुण्यात् | वाक्यग्रन्थ |
| देहेन्द्रियमनःप्राण | आ. सि. |
| धर्मेण पापमपनुदति | तै. उ; ५० |
| ध्रुवा स्मृतिः स्मृतिलम्भे | छा. उ; ७ २६ २ |
| न तदस्ति विना | भ. गी; १० ३९ |
| न त्वेवाहं जातु नासम् | भ. गी; २ १२ |
| न दृष्टेर्द्रष्टारम् | बृ. उ; ५ ४ २ |
| न पश्यो मृत्युं पश्यति | छा. उ; ७ २६ २ |
| न पुनर्मृत्यवे तदेकं | ? |
| न विज्ञातुर्विज्ञातेः | बृ. उ; ६ ३ ३० |
| न स वेद अकृत्स्नो हि | बृ. उ; ३ ४ ७ |
| न स्थानतोऽपि | ब्र. सू; ३ २ ११ |
| न ह्यध्रुवैः प्राप्यते | कठ. उ; २ १० |
| नात्मा श्रुतेः | ब्र.सू; २ ३ १८ |
| नान्यः पन्था अयनाय | पुरु. सू; |
| नायमात्मा प्रवचनेन | मु. उ; ३ २ ३ |
| नायमात्मा बलहीनेन | मु. उ; ३ २ ४ |
| नासदासीन्नो सदासीत् | तै. ब्रा; २ ८ ९ |
| नाहं वेदैर्न तपसा | भ. गी; ११ |
| निचाय्य तं मृत्यु | कठ. उ; १३ १५ |
| निदिध्यासितव्यः | बृ. उ; ४ ४ ५ |
| निरञ्जनम् | श्वे. उ; ६ १९ |
| निर्गुणम् | मन्त्रिको. |
| निष्कलं निष्क्रियं शान्तं | श्वे उ; ६ १९ |
| नेह नानास्ति किंचन | बृ. उ; ६ ४ १९ |
| नैकस्मिन्नसम्भवात् | ब्र. सू; २ २ ३१ |
| नोपजनं स्मरन् | छा. उ; ८ १२ ३ |
| पञ्चमहा यज्ञाद्यनुष्ठानं | वाक्यग्रन्थ |
| परमार्थस्त्वमेवैको | वि. पु; १ ४ ३८ |
| पराऽस्य शक्तिर्विविधैव | श्वे. उ; ६ ८ |
| परीक्ष्य लोकान् कर्मचितान् | मु. उ; १ २ १२ |
| पुरुषः स परः पार्थ | भ. गी; ८ २२ |
| पृथगात्मानं प्रेरितारं च | श्वे. उ; १ ६ |
| प्रतिपद्विधाना च षष्ठी | अष्टा; २ २ १० वा. |
| प्रत्यस्तमितभेदं यत् | वि. पु; ६ ७ ५३ |
| प्रमादं वै मृत्युमहं ब्रवीमि | म. भार; उद्यो. ४१ ४ |
| प्रियो हि ज्ञानिनोऽत्यर्थम् | भ. गी; ७ १७ |
| प्लवा ह्येते अदृढा | मु. उ; १ २ ७ |
| बहु स्यां प्रजायेय | छा. ६ ८ तै. उ; ६ |
| ब्रह्मविदाप्नोति परम् | तै. उ; आ. १ |
| ब्रह्म वेद ब्रह्मैव भवति | मु. उ; ३ २ ९ |
| ब्राह्मणा विविदिषन्ति | बृ. उ; ६ ४ २२ |
| भक्त्या त्वनन्यया शक्यः | भ. गी; ११ ५४ |
| भाति च तपति च | छा. उ; ३ १८ ३ |
| भिद्यते हृदयग्रन्थिः | मु. उ; २ २ ९ |
| मनो ब्रह्मेत्युपासीत | छा. उ; ३ १८ १ |
| मम माया दुरत्यया | भ. गी; ७ १४ |
| महाभूतान्यहङ्कारः | भ. गी; १३ ६ |
| मायामात्रं तु | ब्र. सू; ३ २ ३ |
| मायां तु प्रकृतिं | श्वे. उ; ४ १० |
| मृत्योः स मृत्युमाप्नोति | बृ. उ; ६ ४ १९ |
| यज्ञादिश्रुतेरश्ववत् | ब्र. सू; ३ ४ २६ |
| यतो वा इमानि भूतानि | तै. उ, भृ. ९ |
| यत्र हि द्वैतमिव भवति | बृ. उ; ४ ४ १४ |
| यदा तु शुद्धं | वि. पु; २ १२ ४० |
| यदा ह्येवैष | तै. उ; ७ |
| यदेतत् दृश्यते | वि. पु; १ ४ ३९ |
| यद्यन्योऽस्ति परः | वि पु; २ १३ ९० |
| यस्तद्वेद यत् स वेद | छा. उ; ४ १ ४ |
| यस्मात् क्षरमतीतोऽहं | भ. गी; १५ १८ |
| यस्यामतं तस्य मतम् | के, उ; २ ३ |
| ये तु ज्ञानविदः | वि. पु; १ ४ ४१ |
| यः सर्वज्ञः सर्ववित् | मु. उ; २ २ ७ |
| वाचारम्भणं | छा. उ; ६ १ ४ |
| विज्ञातारमरे केन | बृ. २; ४ ४ १४ |
| विज्ञानघन एव | बृ. उ; ४ ४ १२ |
| विज्ञानमानन्दं | बृ. उ; ५ ९ २८ |
| विज्ञाय प्रज्ञां कुर्वीत | बृ. उ; ६ ४ २१ |
| विद्यां चाविद्यां च | ई. उ; ११ |

## ॥ तत्त्वटीकोदाहृतप्रमाणवाक्यानामाकरः ॥

गुणत्वे देवताश्रुतिः पू. मी. सू; ९ १ ९
गूढोत्मा न प्रकाशते कठ. उ: ३ व. १२ वा.
कुङिति च अष्टा; १ अ. १ पा. ५ सू.
छन्दसि लुङ्लङ्लिटः अष्टाः ३ ४ ६
जगदुत्पत्तिस्थितिसंहारान्तः श्री. भा; जि.अ.पुराणघट्टे
जपादेरपि संस्कारकर्मत्वे न्या. सु.
जायापती अग्निमादधीयाताम् आप. श्रौ. ५ ४ १०
ज्ञात्वा तमेवं मनसा हृदा च तै. ना; ५०
ज्ञानालम्बनमुपास्यम् श्री. भा. वि.
ज्योतिष्टोमोऽग्निष्टोमः तै. सं; ७ १ ४
तच्छास्त्रैर्विप्रतिषिद्धम् आप. ध. २ २१ १५
ततस्तु तं पश्यते निष्कलं ध्यायमानः मु उ; ३ १ ८
तत्त्वतः मु. उ; १ मु. २ खं. १३ वा.
तत्त्वमसि छा. उ; ६ प्र. ८. ख. ७ वा.
तदनन्यत्वमारम्भणशब्दादिभ्यः ब्र. सू; २ १ १५
तदात्मानं स्वयमकुरुत तै. उ; आन. ७ अनु.
तदुपर्यपि ब्र, सू; १ अ, ३ पा, २५ सू
तदेव वीर्यवत्तरं छा. उ; १ १ १०
तदेषाभ्युक्ता तै. उ; आन. १ अनु.
तद्धेदं तर्ह्यव्याकृतमासीत् बृ. उ, ३ ४ ७
तद्भूतस्य तु नातद्भावो ब्र. सू, ३ ४ ४०
तद्यथा प्रियया बृ. उ, ६ ३ २१
तद्विजिज्ञासस्व तै. उ, भृ. १ अनु.
तद्विपर्ययोऽनवसादः वाक्यग्रन्थः
तं त्वौपनिषदं पुरुषं बृ. उ, ५ ९ २६
तमक्रतुं पश्यति वीतशोकः तै. उ, १० १
तमसो वा एष आप. ध. सू, १ १ ११
तमादेशम् छा. उ; ६ १ ३
तमेव विदित्वातिमृत्यु श्वे. उ; ३ ८
तस्मादन्यत्लौपचारिकः श्रीभा. जि.

गुप्तिज्किद्भ्यः सन् अष्टा ३ १ ५
गौरित्यत्र कः शब्दः शा. भा; १ १ १
ग्राह्यलक्षणायोगशब्दः योगाचाराणाम्.
छागो वा मन्त्रवर्णात् पू. मी. सू; ६ ८ ३१
जक्षत् क्रीडन् छा. उ; ८ ५२ ३
जातिशून्यत्वे सत्येकवृत्तित्वम् ता. र; ५३
जुष्टं यदा पश्यत्यन्यमीशं श्वे, उ: ४ ७
ज्ञानप्रकाश्यत्वादज्ञानविरोधि पं. पा. वि.
ज्ञोविदर्थस्य करणे अष्टा; २ ३ ५१
त इमे सत्याः कामा अनृतापिधानाः छा. उ; ८ ३ १
ततश्च तेन संबन्धः पू. मी. सू ९ १ ८
ततो भूय इव ते तमः ई. उ; १२ म.
तत्तेजोऽसृजत छा. उ; ६ प्र. २ ख. ३ वा.
तत्सत्यम् छा. उ; ६ प्र. ८ खं. ७ वा.
तदनु प्रविश्य सच्च त्यच्च तै. उ; आन. ६ अनु.
तदानीम् तै. ब्रा; २ अष्ट. ८ प्र. ९ अनु,
तदेकं पश्यति श्रीभाष्योद्धृतम्,
तदेवाग्निः तै. उः ना. १ अनु ७ वा.
तदैक्षत बहुस्यां छा. उ; ६ २ ३
तद्धैक आहुरसदेवेदं छा. उ, ६ २ २
तद्योऽहं सोऽसौ ऐ. आ, २ २ ४ ६
तद्वतो विधानात् ब्र. सू, ३ ४ ६
तद्विज्ञानेन परिपश्यन्ति धीराः मु. उ, २ २ ८
तन्निष्ठस्य मोक्षोपदेशात् ब्र. सू, १ १ ७
तपसा चीयते ब्रह्म मु. उ, १ १ ९
तमसः पारं दर्शयति छा. उ, ७ २६ २
तं मा भगवान् छा. उ; ७ १ ३
तमेतं वेदानुवचनेन बृ. उ; ६ ४ २२
तमेवं विद्वानमृतः पु. सू,
तस्मादेतद्ब्रह्म नाम रूपमन्नं मु. उ; १ १ १०

तस्मादेवं विच्छान्तो दान्त. बृ. उ, ६ ४ २३
तस्मिंश्चैव विद्याकर्मान्तं आप. ध. सू. १ १ १३
तस्मै मृदितकषायाय छा. उ, ७ २६ २
तस्य प्रतिविधानत्वात् पू. मी. सू ९ १ १०
तादर्थ्यसमासे प्रकृतिविकृति वा. २ १ ३६
तानि द्वैधं गुणप्रधानभूतानि पू. मी. सू. २ १ ६
तान्येवानुविनश्यति बृ. उ, ४ ४ १२
तीर्त्वा ई. उ, ११
तेह समित्पाणयः छा. उ, ५ ११ ७
त्रयं यदा विन्दते ब्रह्ममेतत् श्वे. उ, १ ९
दर्शनस्पर्शनाभ्यां न्या. सू, ३ १ १
दृश्यते त्वग्र्यया बुद्ध्या कठ. उ, ३ १२
दृष्टं परोक्षमपि ध्यायमानं
देवता वा प्रयोजयेत् पू. मी. सू, ९ १ ६
द्रष्टव्यः श्रोतव्यो बृ उ, ४ ४ ५; ६ ५ ६
धर्मजिज्ञासायाः प्रागपि शाङ्क. भा, जि. अधि.
धर्मं जैमिनिरत एव ब्र. सू, ३ २ ३९
धातुः प्रसादात् श्वे. उ, ३ २०
ध्याननिर्मथनाभ्यासात् श्वे. उ, १ १४
ध्यायथ मु. उ; २ २ ६
न खलु भागवता यम इह. ब्रा.
न चोदनातो हि पु. मी. सू; ९ १ ५
न पृथिव्यामग्निश्चेतव्यः तै. सं, ५ २ ७ २
न प्रेत्य संज्ञास्ति बृ. उ, ४ ४ १२
न रोगं नोत दुःखताम् छा. उ, ७ २६ २
न हि विज्ञातुर्विज्ञातेः बृ. उ, ६ ३ ३०
नात्मा श्रुतेः ब्रह्म. सू, २ ३ १८
नानाशब्दादिभेदात् ब्र. सू, ३ ३ ५६
नान्यः पन्था अयनाय पु. सू.

तस्मात् सर्वगतः शिवः श्वे. उ, ३ ११
तस्मिन्यदन्तस्तदुपासितव्यम् तै. उ, १० २३
तस्य तावत् छा. उ, ६ १४ २
तस्य भुवनादेः सत्यत्वम् श्री. भा, प्रमाणानुपपत्तौ.
तादृगेव भवति क. उ, ४ १५
तान्याचरत नियतं सत्यकामाः मु. उ, १ २ १
तावच्छब्दोऽध्ययनानन्तर्यं श्री. भा. जि.
तुरिष्ठेमेयस्सु अष्टा, ६ ४ १५४
तं ब्रह्मेत्याचक्षते शङ्क. का, ४. ४
दया सर्वेषु भूतेषु गौ. ध. स, ८ २१
दर्शपूर्णमासाभ्यामिष्ट्वा तै. सं २ ५ ६
दृश्यभेदो दृशिकर्मत्वाकारेण न्या. सु.
दो अवखण्डने धा. पा, दिवादि ४२
दैप् शोधने धा. पा, २ ९४०.
द्व्येकयोः अष्टा, १ ४ २२
धर्मो जिज्ञासितव्यः श. भा, १ १ १
धाता पुरस्तात् पु. सू.
धातोः कर्मणः समान, अष्टा, ३ १ ७
ध्यानाच्च ब्र. सू, ४ १ ८
नकर्मणा न प्रजया तै. उ ना; १० २१
न चक्षुषा गृह्यते मु. उ; ३ १ ८
न जायते म्रियते वा क. उ, २ १८
न प्राणेन नापानेन कठ. उ, ५ ५
नमः प्रवरगुणैकास्पदाय द्र. भा.
न स्थानतोऽपि ब्र. सू, ३ २ ११
न ह्यरूपाया देवतायाः द्र. भा.
नानात्मानो व्यवस्थातः वै. सू. ३ २ २०
नान्तरिक्षे न दिवि तै. सं, ५ २ ७ २
नायमात्मा मु. उ, ३ २ ३; कठ. २ २३

यस्मिन् सर्वाणि भूतानि ईशा उ, ७
यस्य देवे परा भक्तिः श्वे उ ६ २ ३
यः सर्वज्ञः सर्ववित् मु उ १ १ १०
यागादिकमुपासनात्मकं च श्री भा
यावज्जीवमग्निहोत्रं ब. ब्रा. २ ४ १)
यावदग्निष्टोमेन तै. सं, १ ६ ९
युष्मदस्मत्. शङ्करभाष्यारम्भवाक्यम्
येनाश्रुतं छा. उ; ६
येनाहं नामृता स्यां बृ. उ; ४ ४ ३
यो वा एतदक्षरं गार्गि अस्माल्लोकात् बृ. उ, ५ ८ ९
यो वा एतदक्षरं गार्ग्यविदित्वास्मिन् बृ. उ, ५ ८ ९
यो ह वा अविदितार्षेय आ. ब्रा, १ १
यं यं क्रतुमधीते तै. आ, २ १५
रसं ह्येवायं तै. उ, ७ १
रूपशब्देन फलग्रहणं ता. तू.
रूपं रूपं प्रतिरूपो बभूव बृ. उ, ४ ५ १९
लोकवत्तु लीला ब्र. सू, २ १ ३३
लोके येष्वर्थेषु श. भा. आरम्भवाक्यम्
विजानाति छा. ८ १२ ६
विजिज्ञासितव्यः बृ. उ, ४ ४ ५
विज्ञातं स्यात् छा. उ, ६ १ ८
विज्ञानादानन्दो ब्रह्मयोनिः तै. उ; ५०
विचारः कर्तव्यः श्री भा, प्रथमसूत्रविषयवाक्यार्थवर्णने
विद्ययामृतमश्नुते ईशा. उ, ११
विद्यां चाविद्यां च ईशा. उ, ११
विनाशमेवापीतो भवति छा. उ, ८ १२ १
विभक्त्यन्ताः पदं न्या. सू, २ २ ५७
विमुक्तश्च विमुच्यते कठ. उ, ५ १
विरुद्धजातीयाभ्यां प्रजोऽत्प-वाह्यानाम्
विरोधे त्वनपेक्षं स्यात् पू. मी. सू, १ ३ ३
विविदिषन्ति बृ. उ, ६ ४ २२
विवृणुते मु. उ, ३ २ ३ कठ. २ २३
विषयविशेषेण विशेषितं वे. सं, भक्तेः प्रीतिरूपत्वसमर्थनावसरे
विहितत्वाच्चाश्रमकर्मापि ब्र. सू, ३ ४ ३२
वेदनमुपासनं स्यात् वाक्यग्रन्थः
वेदस्य निरपेक्षत्व न्या. सु.
वेदाहमेतं पुरुषं महान्तं पु. सू,
वैधर्म्याच्च न स्वप्नादिवत् ब्र. सू २ २ २८
व्याप्तिग्राहकप्रमाणानधिक
शब्दमाद्यपेऽः स्यात् ब्र. सू, ३ ४ २७
शंनोमित्रः तै. उ, शि. शान्तिमन्त्रः.
शरीरमेव शरीरकं तत्र निवासी भामती जि.
शान्त उपासीत छा. उ, ३ १४ १
शान्तो दान्तः बृ. उ, ६ ४ १३
शाश्वतं शिवमच्युतम् तै. उ, ११
शास्त्रदृष्ट्या तूपदेशो वामदेववत् ब्र. सू, १ ३१
शास्त्रफलं प्रयोक्तरि पू. मी. सू, ३ ७ १८
शूद्रसमीपे नाध्येतव्यं व. स्मृ, १८ ९
श्रोतव्यो मन्तव्यः बृ. उ, ४ ४ ४
स आत्मा छा. उ, ६ ८ ७
स उत्तमः पुरुषः छा. उ, ८ १२ ३
स एतमेव पुरुषं ब्रह्म ऐ. उ, २ ३ १३
स एव तु कर्मानुस्मृतिशब्द ब्र सू, ३ २ ९
सक्तून् जुहोति पू. मी. २ १
स खल्वेवं वर्तयन् छा. उ, ८ १५ १
स गुरुमेव मु. उ; १ २ १२
स च विंशतिलक्षण्यां श्री. भा. वि.
स त आत्मान्तर्याम्यमृतः बृ. उ; ७ २२
सदेव सौम्येदमग्र आसीत् छा. उ; ६ २ १

## ॥ तत्त्वटीकोदाहृतश्लोकानामाकरः ॥

| | |
|---|---|
| अक्षरग्रहणोपाय | न्या. सु; १९ |
| अक्षरादपि चोत्तमः | भ. गी; १५ १८ |
| अजः सर्वेश्वरः | वि. स. ना; ११ |
| अणोरणीयांसमनुस्मरेद्यः | भ. गी; ८ ९ |
| अत ऊर्ध्वं तु छन्दांसि | म. स्मृ; ४ ९८ |
| अतीतेऽनागते चार्थे | सि. त्र; सं |
| १अतो(नतो)थ मौनम् सनत्सु भार; उद्योफ. ४३ २ | |
| अतोऽस्मिन् लोके वेदे च | भ. गी; १५ १८ |
| अर्के चेन्मधु विन्देत शाबरभाष्योद्धृतः १ २ ४ | |
| अत्रानीप्सितकर्मत्वं | न्या. सु; १६ |
| अथ वानुमितिर्मा भूत् | न्या. सु; |
| अथातो धर्मजिज्ञासा | श्लो. वा; प्रति. सू. ११ |
| अधिकारोऽनुपायत्वात् | श्लो. वा; (निरा) १२९ |
| अधीत्याद्वेदनः पश्च त् | न्या. सु; २० |
| अधीत्य साङ्गान् वेदांस्तु | |
| अधीयीत | म. स्मृ; ४ ९५ |
| अनात्मन्यात्मबुद्धिर्या | वि. पु. ६ ७ ११ |
| अनादि म. भार; शान्ति (मो. ध.) २३८ ९३ | |
| अनुपप्लवभूतार्थ | वाचस्पत्युद्धृतः |
| अनैकान्त्यादसिद्धेर्वा | न्या. कु; ४ ३ |
| अन्यत्र ह्युपचारतः | वि. पु; ६ ५ ७७ |
| अप्यहं जीवितं | श्री रा; आ. १० १९ |
| अप्रत्यक्षोपलम्भस्य | धर्मकीर्तेः |
| अमानित्वमदम्भित्वं | भ. गी. १३ ८ |
| अयथावस्तुविद्या स्यात् | नै. सि; १. ५६ |
| अयःपिण्डे यथा वह्निः | ज. सं; ४ ८३ |
| अल्पाक्षरमनल्पार्थं | वा. पु; ५९ १४२ |
| अवतीर्णो महायोगी | स्का. पु; |
| अविदित्वा ऋषिं छन्दः | व्या. स्मृ. |
| अविद्या कर्मसंज्ञा | वि. पु; ६ ७ ६१ |
| अविद्यातरुसंभूति | वि. पु; ६ ७ ११ |
| अविद्यासंचितं कर्म | वि. पु; २ १३ ७० |
| अविद्याहंमतिः | ना. लि; धी. व. ७ |
| अशक्यानि दुरन्तानि | |
| असूत्रस्यापि षष्ठीयं | |
| अस्ति ह्यालोचनाज्ञानं | श्लो. वा; ११२ |
| अहंकारं बलं दर्पं | भ. गी; १८ ५३ |
| अहं त्वं च तथान्ये च | वि. पु; २ १३ ६९ |
| अहं त्वा सर्वपापेभ्यः | भ. गी; १८ ६६ |
| अहमज्ञानजं तमः | भ. गी; १० ११ |
| अहमर्थस्य बोद्धृत्वात् | सि. त्र; |
| अहमर्थो न चेदात्मा | श्री. भा. जि. अ |
| अहंमानोद्भवं दुःखं | निघण्टुः |
| आगमोत्थं विवेकाच्च | वि. पु. ६ ५ ६१ |
| आद्याध्ययनमिच्छामः | न्या. सु; |
| आभूतसंप्लवं स्थान | वि. पु; २ ८ ९५ |
| आयुःसत्त्वबलारोग्य | भ. गी; १७ ८ |
| आरण्यकं च वेदेभ्यः | म. भार; ३४३ १२ |
| अर्थवादिकमेवात्र | न्या. सु; १५ |
| आश्रयश्चेतसो ब्रह्म | वि. पु; ६ ७ ४७ |
| उत्तमः पुरुषस्त्वन्यः | भ. गी; १५ १७ |
| उत्पत्तिं प्रलयं चैव | वि. पु; ६ ५ ७८ |
| उपदेक्ष्यन्ति ते ज्ञानं | भ. गी; ४ ३४ |
| उपाकृत्य | म. स्मृ; ४ ९५ |
| ऋग्वेदं धारयन् विप्रः | म. स्मृ; ११ २६१ |
| एकक्षरम् | श्री. रा; १८ ३३ |
| ऐश्वर्यमदमत्तो हि म. भार; यु. उद्योग ३४ ५४ | |
| ओङ्कारश्चाथशब्दश्च | स्मृतिः |
| ओषधीभ्यो यथामृतम् म. भार; शान्ति ३४३ १२ | |
| कर्मदेवता ब्रह्मगोचरा | त. र; |
| कर्मभ्यः फलसंबन्धः | श्लो. वा; ३ |
| कर्मवश्या गुणा | वि. पु; २ १३ ७० |
| कर्मविज्ञानयोर्हेतु | न्या. सु; २३ |
| कल्पनापोढमभ्रान्तम् | बौद्धग्रन्थे |
| कषायपक्तिः कर्माणि | स्मृतिः |
| कषाये कर्मभिः पक्के | स्मृतिः |
| कामः क्रोधस्तथालोभः | भ. गी; १६ २१ |
| कामात् क्रोधोऽभिजायते | भ. गी; २ ६२ |
| काम्यं तु कर्म भोगाय | ता. तू; |
| कार्यकारणकर्तृत्वे | भ. गी; १३ २१ |
| कृष्णो द्वादशधा चैव | स्का. पु; |
| क्व नाकपृष्ठगमनम् | वि. पु; २ ६ ४४ |
| क्षिपाम्यजस्रम् | भ. गी; १६ १९ |
| गुणमायासमावृतः | जितं; १ ३ |

—o—o—

## ॥ तत्त्वटीकाश्लोकसूची ॥

—o—o—

## ॥ तत्त्वटीकोदाहृतप्रबन्धसूची ॥

केनोपनिषत्     कौषीतक्युपनिषत्     खण्डनखण्डखाद्यम्— श्रीहर्षः
गरुडपुराणम्—व्यासः     गीताभाष्यम्—रामानुजमुनिः     गौतमधर्मसूत्रम्— गौतमः
चतुश्श्लोकी—यामुनमुनिः     छान्दोग्योपनिषत्     जयाख्यसंहिता
जितंतेस्तोत्रम्     तत्त्वरत्नाकरः—भट्टपराशरपादाः     तन्त्रवार्तिकम्—कुमारिलभट्टाचार्यः
तात्पर्यतूलिका     तार्किकरक्षा—वरदराजः     तैत्तिरीयब्राह्मणम्
तैत्तिरीयसंहिता     तैत्तिरीयारण्यकम्     तैत्तिरीयोपनिषत्
तैत्तिरीयोपनिषद्भाष्यवार्तिकम्–सुरेश्वराचार्यः ; दक्षस्मृतिः—दक्षः     द्रमिडभाष्यम्—द्रमिडाचार्यः
(धर्म)कीर्तिग्रन्थः–धर्मकीर्तिः ; धातुपाठः–पाणिनिः; (नयप्रकाशिका) श्रीभाष्यव्याख्या–मेघनादारिसूरिः
नामलिङ्गानुशासनम्—अमरसिंहः निरुक्तम्—यास्कः     नैष्कर्म्यसिद्धिः—सुरेश्वराचार्यः
नृसिंहपुराणम्—व्यासः     न्यायकुसुमाञ्जलिः–उदयनाचार्यः     न्यायतत्त्वम्—नाथमुनिः
न्यायवार्तिकतात्पर्यटीका—वाचस्पतिमिश्रः     न्यायवार्तिकतात्पर्यपरिशुद्धिः—उदयनाचार्यः
न्यायसुदर्शनम्–वरदनारायणभट्टारकाः     न्यायसूत्रम्—अक्षपादः     पञ्चपादिकाविवरणम्–प्रकाशात्मा
पुरुषसूक्तम्     पूर्वमीमांसासूत्रम्—जैमिनिः     प्रश्नोपनिषत्
बह्वृचब्राह्मणम्     प्रशस्तपादभाष्यम्—प्रशस्तपादः     बृहदारण्यकोपनिषत्
बृहट्टीका—कुमारिलभट्टाचार्यः     बृहस्पतिसूत्रम्—बृहस्पतिः     बोधायनगृह्यसूत्रम्—बोधायनः
बोधायनवृत्तिः—बोधायनः     ब्रह्मवैवर्तपुराणम्—व्यासः     ब्रह्मबिन्दूपनिषत्
ब्रह्मसूत्रम्—व्यासः (बादरायणः) ; ब्रह्मसूत्रभाष्यम्—भास्करः     भगवद्गीता—व्यासः
भारद्वाजसंहिता     भारतीयम्—भरतमुनिः     भामती—वाचस्पतिमिश्रः
भूषणम्—भासर्वज्ञः     मनुस्मृतिः—मनुः     महाभारतम्—व्यासः
महाभाष्यम्—पतञ्जलिः     महाभाष्यप्रदीपः—कैयटः     मुण्डकोपनिषत्
याज्ञवल्क्यस्मृतिः–याज्ञवल्क्यः     (यादवप्रकाशीयग्रन्थः)–यादवप्रकाशः ; योगसूत्रम्–पतञ्जलिः
रहस्याम्नायब्राह्मणम्     लिङ्गपुराणम्—व्यासः ;     वसिष्ठस्मृतिः—वसिष्ठः
वाक्यग्रन्थः—ब्रह्मनन्दी     वाक्यपदीयम्—भर्तृहरिः     वामनटीका (द्रमिडभाष्यटीका)–वामनः
वायुपुराणम्—व्यासः     वार्तिकम्—कात्यायनः     विष्णुधर्मः (भविष्यपुराण)—व्यासः
वृत्तिग्रन्थः—बोधायनः     विष्णुपुराणम्—व्यासः     विष्णुसहस्रनाम—व्यासः
वेदान्तसारः—रामानुजमुनिः     वेदार्थसंग्रहः—रामानुजमुनिः     वैजयन्तीकोशः—यादवप्रकाशः
वैशेषिकसूत्रम्—कणादमुनिः     विष्णुधर्मोत्तरम्—व्यासः     व्यासस्मृतिः—व्यासः
शतदूषणी—वेदान्तदेशिकः     शतपथब्राह्मणम्     शङ्करब्रह्मसूत्रभाष्यम्—शङ्कराचार्यः
शाबरभाष्यम्—शबरस्वामी     शारीरकन्यायकलापसंग्रहः—सेनेश्वराचार्यः ; शौनकीयम्—शौनकः
श्रीभाष्यम्—रामानुजमुनिः     श्रीभाष्यविवरणम्—श्रीराममिश्राचार्याः (अलेयाः सोमाशियाण्डान्

इति विख्याता:)
श्रीमद्रामायणम्—वाल्मीकि:; श्रुतप्रकाशिका—सुदर्शनसूरय: (व्यासार्या:)
श्रुतिसूक्तिमाला—हरदत्ताचार्यः श्लोकवार्तिकम्—कुमारिलभट्टाचार्यः श्वेताश्वतरोपनिषत्
षाड्गुण्यविवेकः सङ्कर्षकाण्डसूत्रम्—काशकृत्स्नः (जैमिनि:)
सिद्धित्रयम्—यामुनमुनिः स्कान्दपुराणम्—व्यासः

—o—o—

## ॥ तत्त्वटीकोदाहृताः ग्रन्थकर्तारः ॥

| | | |
|---|---|---|
| अक्षपादः | अमरसिंहः | आचार्याः |
| आपस्तम्बः | उदयनाचार्यः | उपवर्षः (बोधायनः) |
| कणादः | कात्यायनः (वैयाकरणः) | काशकृत्स्नः (सङ्कर्षकाण्डकारः) |
| कुमारिलभट्टाचार्यः | कैयटः | गौतमः |
| चार्वाकाः | जैमिनिः | तत्त्ववृद्धाः |
| दक्षः | द्रमिडाचार्यः | (धर्म) कीर्तिः |
| नाथमुनिः | पक्षिलः | पतञ्जलिः |
| पराशरः | पाणिनिः | पुलस्त्यः |
| प्रकाशात्मा | प्रशस्तपादः | बाह्याः |
| बृहस्पतिः | बोधायनः (श्रौतसूत्रादिकारः) | बोधायनः (वृत्तिकारः उपवर्षः) |
| ब्रह्मनन्दी | भट्टपराशरपादाः | भरतमुनिः |
| भर्तृहरिः | भवदासः | भासर्वज्ञः |
| भास्करः | मनुः | मुरारिकविः |
| मेघनादारिसूरिः | याज्ञवल्क्यः | यादवप्रकाशः |
| यामुनमुनिः | यास्कः योगाचाराः | रामानुजमुनिः |
| रामार्याः (यामुनाचार्यगुरवः) | वरदनारायणभट्टारकाः | वरदराजः |
| वरदाचार्याः (वात्स्याः) | वसिष्ठः | वाचस्पतिमिश्रः |
| वादिहंसांबुदाचार्याः | वामनः | वाल्मीकिः |
| वृद्धाः | व्यासः | शङ्कराचार्यः |
| शबरस्वामी | शौनकः | श्रीराममिश्राचार्याः (सोमाशियाण्डान्) |
| श्रीहर्षः | सनत्सुजातः | सर्वज्ञात्मा |
| सुदर्शनसूरिः (व्यासार्याः) | सुरेश्वराचार्यः | सेनेश्वराचार्यः |
| सौगताः | हरदत्ताचार्यः | |

शुभमस्तु

—o—o—